( नेपथ्ये । )

हन्त भोः सुगतशासनाध्वनीनाः, पर्यवष्टभ्यतामिदं क्षेत्रज्ञनगरम् ।

---

बन्धमुक्तिः संसारनिवृत्तिरिति रूपकपरम्परा । 'मातृजङ्घा हि वत्सस्य स्तम्भीभवति बन्धने' इत्युक्तदिशा प्रथमे मुखदिगवस्थिते चरणे बद्धो वत्सो बहु रौति, तस्याशंसा तिष्ठति यदहं चरमचरणमूलात्प्रस्नुतां स्तन्यधारां कदा बन्धमुक्तः पास्यामि, तथैवायं जीवः कामे बद्धः प्रकामं रोदिति सततं परमात्मज्ञानरूपान्मोक्षमूलात्प्रवहमानानामानन्दमधुधारां पातुमाशंसतीति तात्पर्यम् । यथा चरमचरणमुपगतस्य वत्सस्य स्तन्यपानं तज्जनिता तृप्तिश्च जायते, प्रथमचरणबद्धनायां तु बन्धनरोदनादिरूपदुःखपरम्परैव, तथैव मोक्षलग्नस्यैव पुरुषस्य स्वरूपलाभजा कृतकृत्यता जायते, कामाद्यासक्तौ तु जन्ममरणनरकादिभीतिरेवेति हृदयम् ॥ ११ ॥

[ अतः परं साधनचतुष्टये द्वितीयः इहामुत्रफलभोगविरागः प्रपञ्चनीयः, स च विरागो द्वेषरूपो गुणः न तु रागाभावः, शास्त्राधिकारिताद्दशायां रागाभावस्यासम्भवात्, भोगेषु द्वेषस्तु दुरन्ततात्प्रत्ययेन जनयितुं शक्यते, सा च दुरन्तताऽप्रमाणदर्शनसिद्धपुरुषार्थाभासतासम्बन्धादुपपादनीया । अतः पाखण्डदर्शनस्वरूपविवेचनानन्तरमेव भोगानां तन्मतानुबन्धं शक्नोत्युपपादयितुमिति ग्रन्थकृदत्र पाखण्डदर्शनस्वरूपमुपपादयति—नेपथ्ये इत्यदिना । नाटकपक्षे सर्वेऽप्यमी विविधसेनापतयः, तत्त्वपक्षे तु पाखण्डदर्शनप्रणेतारः ]

सुगतशासनाध्वनीनाः—बौद्धमतावलम्बिनः । अत्रेदं बोध्यम्—प्रतिपत्तिभेदाद्विनेयबुद्धिवैभवभेदाद्वा बुद्धस्य चत्वारोऽपि शिष्याः पृथक् पृथक् स्वमतं प्रचारयामासुः—ते च सौत्रान्तिको योगाचारो माध्यमिको वैभाषिकश्चेति ख्याताः ।

पर्यवष्टभ्यताम्—सर्वतो निरुध्यताम्, ( येन जीव इतः पलायितुं ( संसारा-

---

[ नेपथ्यमें ]

अजी बौद्धमतके अनुसरण करने वालो, इस क्षेत्रज्ञनगरको चारो तरफसे घेर लो । मध्यमार्गसे चलने वाले सैनिक ( माध्यमिक ) शत्रुओंके विज्ञानरूप ( धन ) छीनलें, शत्रुओंको परास्त करनेके लिये सावधानता करनेवाले (योगाचारी) आकार-पराक्रम कुशलतासे बाह्यवस्तुओंको गुप्त करदें । चार्वाकलोक सारी अर्थसम्पत्ति—जो परोक्ष हो—अपहृत करलें, जैसे सूर्य अन्धकार अपहृत कर लेता है । भिन्न तरह

अपहरन्तु परेषां विज्ञानमपि मध्यममार्गेण संचरमाणाः। विलुम्पन्तु बहिर्विषयमाकारपराक्रमकुशलाः परपरिभवाय योगमाचरन्तः। परोक्षमर्थ-तिमिरमुष्णत्विष इव मुष्णन्तु लोकायतव्यवहारिणः। स्वार्थदर्शनमपि परेषामपलपन्तु सूत्रान्तसंस्कृतबुद्धयः। विकल्पगोचरादर्थमपनयन्तु स्वलक्ष-णममी विभाषाभाषणप्रवीणाः। निखिलमपि प्रपञ्चमात्मसात्कुर्वन्तु

दात्मानमुद्धर्त्तुं ) न शक्नुयात्। अन्येऽपि सैनिका विजेयस्य भूपतेर्नगरमव-रुन्धन्ति। मध्यममार्गेण सञ्चरमाणाः—माध्यमिका नाम बौद्धभेदाः। माध्यमिका-स्तावन्न केवलमर्थानपि तु विज्ञानमपि शून्यमातिष्ठन्ते। अत एव ते विज्ञानाप-हरणाय प्रवर्त्स्यन्ते। नाटकपक्षे तु—मध्यममार्गेण मध्यकक्षया संचरमाणाः सैनिकाः परेषां शत्रूणां विज्ञानमप्यपहरन्तु तान् किंकर्त्तव्यतामूढतां नयन्तु।

योगमाचरन्तः— योगाचारसंज्ञया प्रसिद्धा बौद्धभेदाः। योगाचारा हि विज्ञानमेव परमार्थसत्, विज्ञानभिन्नमन्यदसत् इति मन्यमाना विज्ञानस्यैव नील-पीतादिकमाकारमङ्गीकुर्वन्ति, अत एवात्र ते आकारपराक्रमकुशला उक्ताः। नाटकपक्षे तु आकारानुरूपे पराक्रमप्रकाशने दक्षा इत्यर्थः। अत्र मते बहिर्विषया-पलापः स्फुटः। योगमाचरन्तः—ध्यानपराः परपराभवयुक्तिचिन्तानिरता वा। नाटके तु योगम् सैन्यसन्नहनमाचरन्त इत्यर्थः।

लोकायतव्यवहारिणः—चार्वाकाः, तन्मतं हि लोके आयतम् सरलत्वात्। यथा उष्णत्विषः सूर्यकराः तिमिरं समापयन्ति, तथा परोक्षमर्थमपलपन्तु चार्वाक-मतानुगा इत्यर्थः। प्रत्यक्षमेव प्रमाणमभ्युपगच्छतां मते परोक्षोऽर्थो न स्वीकरणीय इति स्फुटमेव। नाटकपक्षे तु गुप्तस्थितमपि शत्रुधनमपहरन्त्वित्यर्थः।

सूत्रान्तसंस्कृतबुद्धयः—सौत्रान्तिका नाम बौद्धभेदाः। एते हि बौद्धभेदा ज्ञानाकारानुमेयो विषयो नालोचनस्यापि गोचरः, किन्तु ज्ञानाकारनिष्पादक इति स्वीकुर्वन्ति। नाटकपक्षे तु सूत्रान्तं चौरदर्शनं तत्र संस्कृतबुद्धयः परिनिष्ठितमतयः परेषां स्वार्थदर्शनम् आत्मसम्पत्पर्यवेक्षणम् अपि अपलपन्तु इत्यर्थः।

विभाषाभाषणप्रवीणाः—वैभाषिकाः नाम बौद्धप्रभेदाः, विकल्पगोचरादर्थ-मपनयन्तु—स्वलक्षणस्य वस्तुनो निर्विकल्पप्रत्यक्षगोचरतामेवाङ्गीकुर्वन्ति वैभाषिका

से बातें करने वाले ( वैभाषिक ) सन्दिग्धवस्तुओंको लेलें। शत्रुओंके स्वार्थ-दर्शन ( निजी धन ) को भी सौत्रान्तिक लोग हरलें। पञ्चस्कन्ध-सिद्धान्त समस्त

पञ्चस्कन्धाः । क्षणमात्रमतिमात्रसूक्ष्मः प्राणितु भवतां दृष्टिमार्गेऽपवर्गः ।
संभावनावशे पततु श्रुतेर्दुहिता प्रमितिर्नाम ।

न सविकल्पप्रत्यक्षगोचरतामिति विकल्पगोचरादर्थमपनेतुमादिश्यन्ते । नाटकपक्षे तु—विरुद्धभाषाभाषणनिपुणाः नानाविधभ्रमजनकोक्तिप्रवीणाः सैनिकाः विकल्पगोचरात् सन्दिग्धस्थानादर्थं धनम् अपनयन्तु हरन्तु इत्यर्थः ।

पञ्च स्कन्धाः—बौद्धैः स्वीकृताः रूपस्कन्ध, विज्ञानस्कन्ध, वेदनास्कन्ध, संज्ञास्कन्ध, संस्कारस्कन्धनामकाः पञ्च स्कन्धाः । निखिलमपि प्रपञ्चम्—समस्तमपि संसारम् । आत्मसात्कुर्वन्तु—स्ववशं नयन्तु । एतेष्वेव सकलप्रपञ्चान्तर्भाव इति मनसि निधाय तथोक्तम्, नाटकपक्षेऽपि स्पष्टोऽर्थः । क्षणमात्रमिति । क्षणमेव क्षणमात्रम्—अतिमात्रसूक्ष्मः—सूक्ष्मदेहतोपि सूक्ष्मः । अपवर्गः प्राणितु—कथञ्चिद्वर्त्तताम्, एतेनापवर्गे प्रत्यनास्था व्यञ्जिता । नाटकपक्षे तु प्रतिपक्षोऽपवर्गो नितरां क्लेशप्रदानेन कृशतां गमितः कथञ्चित्प्राणितु, तथासौ जीवग्राहं गृह्यतामिति तात्पर्यम् । संभावनेति । बौद्धमते शब्दो न प्रमाणमपि तु संभावनामात्रोत्थापक इति मन्यते, तेन वैदिकी प्रमितिः संभावनापारवश्यं नीयतामित्यादिश्यते । स्त्रियो निगृहीताया अपि स्त्रीजनरक्ष्यता—राजनैतिकाचारप्रथिता, सीतादिकायास्त्रिजटादिरक्ष्यतानिदर्शनैः प्रत्याय्या ।

इत्थमत्र बोध्यम्—बौद्धमतं चार्वाकमतं चात्राप्रामाणिकदर्शनत्वेन निर्दिष्टम्, अन्यानि नास्तिकदर्शनानि जैनरसेश्वरसोमसिद्धान्तादीनि नोक्तानि, प्रधानमल्लनिबर्हणन्यायेन तयोरेव प्राधान्येन विरोध्यत्वात्ताभ्यामेव मुक्तौ आत्मस्वरूपे च प्रबलप्रतिपक्षभावेनोपस्थानात् । तत्र बौद्धानां मते पञ्चस्कन्धातिरिक्त आत्मा नाभ्युपगम्यते, सविषयेन्द्रियाणि रूपस्कन्धः, अहमहमित्यात्मविज्ञानसन्ततिर्विज्ञानस्कन्धः, सुखाद्यनुभवो वेदनास्कन्धः, मनुष्यः पशुरित्येवंनामविशिष्टा सविकल्पिका प्रतीतिः संज्ञास्कन्धः, रागद्वेषमोहधर्माधर्माः संस्कारस्कन्धः । तत्र विज्ञानस्कन्धश्चित्तम् ( तदेवात्मेति कथ्यते ) इतरे स्कन्धाश्चैत्ताः । तदेतेषां समुदाय आध्यात्मिकः सर्वव्यवहारोपपादकश्च ।

संसारको स्वाधीन करलें । अत्यन्त क्षीण होकर क्षणिकरूपमें अपवर्गको आप अपनी दृष्टिके सामने जिलाये रखिये । श्रुतिकी पुत्री प्रमिति संभावनाके वशमें रख दी जाय ।

नटः—भाव, एष महामोहसाधनाग्रणीः सुगतागमः श्रुतिदुहितरं प्रमितिमपहर्तुमारभते । तदपसरावस्तावत् ।

सूत्रधारः—मारिष, स्वपरविवेकविकलस्य पूर्वापरभूविभागविबोधविधुरस्य मे का संसरणचर्चा । ( अनुध्याय । सहर्षम् । आकाशे । ) भगवन्

---

क्षित्यप्तेजोवायुपरमाणवः । कठिनस्निग्धतैजसचलनस्वभावाः क्षित्यादिस्वरूपेण समुद्यन्ति । क्षित्यादिभूतचतुष्टयं विषयेन्द्रियात्मकं, भौतिकश्च परमाणुसमुदाय एव नावयव्यन्तरम्, अयमेव स्कन्धपरमाणुसमुदायरूपो बौद्धमतसारभूतः । माध्यमिकयोगाचारसौत्रान्तिकवैशेषिकाणां सत्यपि बहुविषयसाम्येऽस्ति परस्परं भेदः, तत्र माध्यमिका विज्ञानं न मन्यन्ते, योगाचाराश्च बाह्यार्थमपलपन्तो विज्ञानं स्वीकुर्वते, सौत्रान्तिका अपरोक्षस्याप्यर्थस्य ज्ञानाकारतामातिष्ठन्ते, वैभाषिकाश्च तद्विपरीताः । बौद्धानां शब्दो न प्रमाणं किन्तु संभावनामात्रोत्थापक इति मतम् ।

चार्वाकास्तु केवलं प्रत्यक्षमेव प्रमाणं मन्यमानाः परोक्षं वस्तुनैव स्वीकुर्वन्तीति प्रसिद्धमेव ।

महामोहसाधनाग्रणीः—महामोहस्य सहायकेषु प्रधानभूतः । सुगतागमः—बौद्धमतम् । श्रुतिदुहितरं प्रमितिम्—वैदिकीं प्रमाम् । ( अयमर्थः—बौद्धाः शब्दं प्रमाणं न मन्यन्ते, केवलं प्रत्यक्षमनुमानञ्चेति प्रमाणद्वयमेव स्वीकुर्वते, तेन शब्दरूपायां श्रुतावपि तेषां प्रमात्वमतिर्नास्ति, तस्मात्तेऽत्र श्रुतिदुहितृप्रमित्यपहर्तृतयोक्ताः ) अपसरावः—इतोऽन्यत्र गच्छावः, अशक्तस्य अन्याय्यकार्यदर्शनपरिहारस्यौचित्यप्राप्तत्वादिदमन्याय्यं प्रमितिघर्षणं यथा न पश्येव तथाऽन्यत्र गच्छाव इत्यर्थः ।

स्वपरविवेकविकलस्य—को निजः कः परश्चेत्यनवधारयतः । पूर्वापरभूविभाग-

---

नट—भाव, महामोहके प्रधान सैनिक बौद्धमत श्रुतिकी कन्या प्रमिति का अपहरण कर रहे हैं, अतः हम यहाँसे भाग चलें ।

सूत्रधार—अब मुझे स्व-पर का ज्ञान नहीं है, मैं अपनी तथा दूसरेकी भूमिके विभागको नहीं देख रहा हूँ, अब मेरे हटने ( जन्मग्रहण ) की क्या बात करते हो । ( ध्यान करके—सहर्ष—आकाश की ओर लक्ष्यकरके ) हे

अद्वितीयवैभव पुरुषोत्तम, कुतो मम प्रतिभटाः। कुतस्तरां त्रासः। तथा हि।

रिपुरपकुरुते निहन्ति हन्ता
भवति भयं च पृथग्दृशो द्वितीयात्।

---

विधुरस्य—का पूर्वा ( सम्प्रत्यध्युषिता ) का चापरा ( परतोधिवासयिष्यमाणा ) भूस्तस्या विभागे विबोधविधुरस्य अज्ञानवतः। का संसरणचर्चा—अपसरणकथा कीदृशी? यः स्वपरविवेकरहितः पूर्वापरभूविभागविषयकज्ञानरहितश्च तस्य ममापसरणं कथं शक्यसम्पादनमिति तात्पर्यम्। अयमर्थो नाटकपक्षीयः।

तत्त्वार्थस्तु—स्वपरविवेकविकलस्य—स्वस्मिन्नात्मनि परस्यानात्मनो देहादेर्यो विवेकः अध्यासस्तेन विकलस्य रहितस्य—देहाभिमानशून्यस्य, पूर्वापरभूविभागविबोधविधुरस्य—पूर्वाभूर्नाम—यदा चित्तं प्रक्षीणमोहावरणं रजोमात्रानुविद्धं वर्त्तते तदा धर्मज्ञानवैराग्यैश्वर्योपगं भवति, तदा च साधकः कर्मानुष्ठातुमाग्रहीभवति, सा इयं भूमिका। अपरभूर्नाम—तदेव चित्तं यदा रजोमात्रामलापेतं धर्ममेघध्यानोपगं भवति तदा साधकः सत्त्वपुरुषान्यताख्यातिमाप्य हेयोपादेयरहिततया कर्मसन्न्यासी जायते, सा इयं भूमिका तयोर्भूमिकयोर्यो विभागः पार्थक्यम्, तद्विबोधवैधुर्यन्नाम—"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन॥' इति गीतोक्तदिशा विवेकख्यातिस्तामागतस्य। का संसरणचर्चा—नास्ति संसारकथा, संसारनिदानस्याज्ञानस्य निवृत्तेरिति।

अनुध्याय—ध्यानं चिन्ता, पूर्वोक्तवाक्यकथनानन्तरं चिन्तयित्वा।

अद्वितीयवैभव—अप्रतिमैश्वर्यशालिन्, त्रासः—भयम्। ( अनेनापि संसरणस्यासकालत्वं कथितम् )।

रिपुरपकुरुत इति। पृथग्दृशः भेदबुद्धेः पुरुषस्य रिपुः शत्रुः अपकुरुते अपकारं करोति, हन्ता निहन्ति, द्वितीयात् अन्यतश्च भयं भवति, ( सर्वमपीदं शत्रु-

---

अद्वितीय वैभवशाली पुरुषोत्तम, अब मेरे प्रतिभट कहां रहे, अतः भय किससे हो?
शत्रु अपकार करता है, हन्ता मारता है, भेदज्ञान रहने पर दूसरेसे भय हुआ करता है, संसारस्वरूप तुझ परमात्मामें मेरी बुद्धि लीन हो रही

त्वयि भुवनमये निविष्टबुद्धे-
र्न मम रिपुर्न भयं न च द्वितीयः ॥ १२ ॥

अपि च ।

नित्ये विभौ मयि निसर्गशुचौ शरीर-
तादात्म्यबन्धमवरोपितवांस्त्वमासीः ।
द्वैतोज्झिते त्वयि परापरवस्त्वभेद-
मारोप्य निर्वृतिमुपैमि चिरादिदानीम् ॥ १३ ॥

---

सत्त्वापकारघातभयादिकं भेदबुद्धिमूलकम् ) मम तु भुवनमये विश्वरूपे त्वयि निविष्टबुद्धेः ऐक्यज्ञानवतः न रिपुः, न भयं, न च द्वितीयः ( तत्कुतो मम प्रतिभटाः, कुतस्तरां च त्रासः ? ) 'द्वितीयाद्वै भयं भवति' इति श्रुत्या द्वितीयसत्तायामेव भयस्य संभवः, सर्वस्वरूपेण परमात्मनाऽभेदबुद्धिं गतस्य तु मम द्वितीयो नैवास्तीति स्वत एव भयादिसंभावनानिवृत्तिरिति भावः ॥ १२ ॥

नित्ये विभाविति । हे पुरुषोत्तम, त्वं नित्ये अनादिनिधने विभौ व्यापके निसर्गशुचौ स्वभावशुद्धे मयि शरीरेण देहेन तादात्म्यम् एकत्वम् एव बन्धः बन्धनं ( मोक्षप्रतिबन्धकतया ) अवरोपितवान् अविद्यावशादध्यस्तवान् आसीः, अहमपि द्वैतोज्झिते सर्वात्मनि त्वयि परापराणां कारणकार्यात्मकानां सर्वविधानामपि वस्तूनाम् अभेदम् तादात्म्यमारोप्य अध्यस्य इदानीम् अविद्यापगमसमये चिरात् बहुकालस्य कृते निर्वृतिं ब्रह्माद्वैतसुखम् उपैमि अधिगच्छामि । 'कृते च प्रतिकर्त्तव्यमेष धर्मः सनातनः' भवान् पुरुषोत्तमो मयि शरीरतादात्म्यमारोपितवानासीत्—नित्यस्य विभोः स्वभावशुचेरपि मम शरीराद्यभेदबुद्धिं जनितवानासीत्, तत्प्रतिक्रियायै

---

है, अतः मुझे द्वितीय कोई नहीं दीखता है फिर मेरा शत्रु भय किससे हो ? ॥ १२ ॥

मैं नित्य व्यापक तथा स्वभावतः पवित्रथा, आपने मुझमें शरीराभेदका अध्यास किया—आपकी अविद्याने मुझे देहाध्यास करनेको प्रेरित किया, अब मैं अद्वैतशाली आपमें सभी परापर वस्तुओंको आरोपित करके—सर्वात्मकताका आरोपकरके सदाके लिये शान्ति प्राप्त करने जा रहा हूँ ॥ १३ ॥

नटः—भाव, क एष पुरुषोत्तमो यमाक्रोशसि ।

सूत्रधारः—नन्वेष वाङ्मनसयोरगोचरोऽपि

ब्रह्माण्डबिन्दुतिलजालवहो विहीनः
सर्वेन्द्रियैर्विकलकर्मशरीरबन्धः ।

---

अहमपीदानीमविद्यापगमकाले सर्वस्वरूपे त्वयि कारणकार्यात्मकस्यास्य परिदृश्यमानस्याखिलस्यापि प्रपञ्चस्याभेदमारोप्य सर्वात्मकत्वेन त्वां विज्ञाय चिरस्य कृते ब्रह्मात्मताप्रत्ययप्रभवमानन्दमनुविन्दामीत्याशयः । अत्र 'परापरवस्त्वभेदम्' इत्यनेन प्रसङ्गादद्वैतभावनैव भयसामान्यविनाशाय जायते न त्वपसरणादिकमिति सूचयन्नेव पताकास्थानकेन भाविनं ब्रह्माद्वैतबोधं सूचयति । पूर्वं यत्—'अपसरावस्तावत्' इत्युक्तं, तदुत्तरप्रसङ्गे इदमुक्तमिति ध्येयम् ॥ १३ ॥

आक्रोशसि—पूर्वोक्तरूपेण साधिक्षेपं कथयसि । अविद्यमानस्याक्रोशः श्रममात्रफलको न चात्र पुरुषोत्तमो नाम कोऽप्यस्ति तत्किमिति तदाक्रोशेन स्वमायासयसीति पर्यनुयोगस्याशयः ।

वाङ्मनसयोः—वचनस्य मनसश्च । वाक् च मनश्चेति वाङ्मनसे तयोः, द्वन्द्वे कृते 'अचतुरविचतुर' इत्यादिनाऽच् समासान्तः । अगोचरः—अविषयः । ( यद्यप्यसौ वाङ्मनसयोरगोचर इति कथ्यते, तथाप्यसावस्ति ममापरोक्ष इति युज्यत एवाक्रोश इति प्राक्तनपर्यनुयोगस्य समाधिरुक्तः । )

ब्रह्माण्डबिन्द्विति । ब्रह्माण्डानि जगन्ति एव बिन्दवः अतिस्वल्पतया कणाः त एव तिलजालानि वृद्धशरीरे जायमानानि तिलकाकृतिश्यामचिह्नानि तेषां वहो धारयिता, सर्वेन्द्रियैः विहीनः क्षीणदृगादीन्द्रियशक्तिः, विकलः अविद्यमानः कर्मशरीरयोर्बन्धो यस्य तादृशः वृद्धो हि कर्म कर्त्तुमशक्तः शरीरमपि तस्य शिथिलमिति तथोक्तः, परमात्मापि कर्मरहितः शरीरहीनः, सर्वेन्द्रियविकलश्चेति प्रसिद्धमेव ।

---

नट—भाव, यह पुरुषोत्तम कौन है जिसे आप कोस रहे हैं !

सूत्रधार—यह पुरुषोत्तम वाणी तथा मनका विषय नहीं है, तथापि—ब्रह्माण्डबिन्दुस्वरूप तिलोंसे युक्त, समस्त इन्द्रियगणसे हीन, कर्मक्षम-शरीरसे रहित, यह पुरुषोत्तमरूप विश्वका प्रपितामह श्रुतिके द्वारा बताये गये मार्गसे

हृद्वेश्म मे प्रविशति श्रुतिदेशितेन
मार्गेण कोऽपि जगतीप्रपितामहोऽसौ ॥ १४ ॥

नटः—ननु भाव, वचसामगोचरं वस्तु वचसैव श्लाघमानो व्याहतिमपि न चेतयसे।

सूत्रधारः—अयमसाविह व्याहतिपरिहारः।

साकाङ्क्षास्तत्परास्तं प्रियमपि मनसा साकमप्राप्य मार्गाद्

---

असौ जगतीप्रपितामहः कोऽपि श्रुतिदेशितेन श्रुत्युक्तेन मार्गेण तात्पर्यवृत्त्या मे मम हृद्वेश्म चित्तरूपं सदनं प्रविशति, यथा कोपि वार्द्धकसंजाततिलगणाञ्चिततनुरपगतकरणपाटवः श्लथशरीरोऽकर्मण्यश्च प्रपितामहकोटिको वृद्धः कयापि पुत्र्यादिकयाऽङ्गुलिग्रहणपूर्वकं निर्दिश्यमानवर्त्मा स्वीयं परकीयं वा सदनमुपसर्पति, तथाऽयमपि अनन्तब्रह्माण्डवाहीन्द्रियसामान्यशून्यः शरीरकर्मसम्पर्कविरहितश्च पुरुषोत्तमः श्रुत्युक्ततात्पर्यवृत्त्या मम हृदयमवतरतीति भावः ॥ १४ ॥

वचसामगोचरम्—वागविषयम्, 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इत्युक्तदिशा वचसा प्रकाशयितुमशक्यम्। वस्तु—पुरुषोत्तमरूपम्। श्लाघमानः—प्रशंसन्।

व्याहतिम्—विरोधम्। चेतयसे—जानासि पश्यसि।

व्याहतिपरिहारः—विरोधनिवृत्तिः। वचसा प्रकाशयितुमशक्यस्य कथं स्तुतिविषयतेति यस्त्वया व्याघात उद्भावितस्तस्य निवृत्तिर्वक्ष्यमाणविधया जायत इत्याशयः।

साकाङ्क्षा इति। आकाङ्क्षा पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभा-

---

मेरे हृदयरूप घरमें प्रवेशकर रहा है। (समस्त शरीरमें तिलचिह्नसे पूर्ण, वार्धक्यवश इन्द्रियविकल तथा अक्षमशरीर वृद्धपुरुष किसी बालिकाद्वारा बताये गये मार्ग से घरमें आता है) ॥ १४ ॥

नट—भाव, आप जिसे वाणीका अविषय कहते हैं उसीका अपनी वाणीद्वारा वर्णनभी करते हैं, क्या आप इस विरोधको नहीं समझते हैं!

सूत्रधार—विरोधके छूटनेका यह प्रकार है :—

आकाङ्क्षा तथा तात्पर्यसे युक्त वाणी अपने प्रिय पुरुषोत्तमसे मिलनेके लिये

वाचो बाढं निवृत्ताः कुलगुरुषु गिरा वारयत्स्वागमेषु ।
किंतु स्वेनैव कामादभिसरति परः पूरुषो वाचमेनां
सन्नासन्नासु सीमस्वपि नियमगणस्तं हि न द्रष्टुमीष्टे ॥१५॥

वक्रता, तया सहिताः, तत्पराः तात्पर्यवृत्तियुताश्च वाचः शब्दाः, प्रियं प्राप्तुमिच्छमाणं बुबोधयिष्यमाणम् अपि तं पुरुषोत्तमम् मनसा साकम् सह अप्राप्य कुलगुरुषु वाणीकुलवृद्धेषु आगमेषु वेदेषु गिरा स्ववाण्या वारयत्सु निषेधत्सु सत्सु बाढं कामं मार्गात् निवृत्ताः विरताः, किन्तु परः पूरुषः कामात् 'एको हि बहु स्यां प्रजायेय' इतीच्छावशात् स्वेनैव स्वयम् एव एनां वाचम् अभिसरति प्राप्नोति, आसन्नासु समीपस्थासु सीमसु उपनिषद्रूपासु सन् वर्त्तमानः अपि नियमगणः महावाक्यसमूहः तं पुरुषोत्तमं वाचमभिसरन्तं हि न द्रष्टुमीष्टे प्रभवति । आकाङ्क्षातात्पर्ययोर्निबध्यमानयोर्योग्यतापि सामर्थ्यादुन्नेया, तथा सत्येव प्रियत्वसंभवात् । आकाङ्क्षायोग्यतातात्पर्यशालिन्योऽपि वाचः कामयमानाः सत्योऽपि परमात्मानं न प्रकाशयन्ति, कुलगुरुणा वेदेन नेतिनेतीतिगिरा वारणात्, ततश्च ता मनसा नपुंसकेन मार्गे सहायतया स्वीकृतेन सहैव मार्गान्निवर्त्तन्ते, किन्तु परमात्मा स्वयमेव सिसृक्षावशाद् गुणवत्तया युज्यमानः सन्नेनां वाचमभिसरति, तथा च सति वेदसीमसूपनिषत्सु वर्त्तमानोऽपि नियमगणो महावाक्यसमूहस्तं पुरुषोत्तमं न पश्यतीति । अत्र श्लोके समासोक्त्या श्लेषोत्थापितया वाचि नायिकाव्यवहारः पुरुषोत्तमे च नायकव्यवहार आरोपितो बोध्यः । साकाङ्क्षाः साभिलाषाः तत्पराः पुरुषोत्तमपरायणाश्च वाचो नायिकाः मनोरूपं वर्षवरं सहायकमादाय पुरुषोत्तमं प्राप्तुं चलिताः, परन्तु कुलगुरुणाऽऽगमेन वाण्या द्वारभूतया वार्यमाणाः सत्यो मार्गादेव निवृत्ताः ( यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह ) ( तदेवं वार्यन्तां वाचः ) परन्तु पूरुषः परः कामात् रागोद्रेकवशात् ( सिसृक्षावशाच्च ) स्वयमेव ( सगुणतां गतः सन् ) वाचमभिसरति, तथा च सति समीपस्थासूपनिषद्रूपासु सीम सुस्थितोऽपि

मनको अपने साथ लेकर चली, परन्तु वाणीकुलके वृद्ध आगमोंने उसे 'नेति नेति' कहकर रोक लिया, वह मार्गसे ही लौट आई, अब कामनासे प्रेरित वह परमपुरुष स्वयं वाणीसे मिलने आ रहा है, समीपवर्त्ती सीमा ( उपनिषद् ) में रहनेवाले नियमगण उस परपुरुषको देख भी नहीं सकते हैं (रोकनेकी बात ही क्या है)॥१५॥

( नेपथ्ये । )

अरे वाचाट नटबटो, हताशया श्रुत्या विप्रलब्धः किमलीकमालपसि ।

तथा हि सिद्धः पुरुषोऽपि पञ्चस्कन्धान्विना नात्र शरीरकोशे ।
मानद्वयागोचरवस्तुनस्तु सिद्धिर्विदूरे पुरुषोत्तमस्य ॥१६॥

नियमगणो नाम महावाक्यराशिस्तं परं पूरुषमभिसरन्तं द्रष्टुमपि न पारयति दूरे तद्वारणकथेत्यर्थः। सर्वविधवागादिमतया वेदानां कुलगुरुत्वम्, 'गिरा वारयत्सु' इत्यत्र गिरा इत्यस्य परपुरुषमभिसर्तुमुद्यतां स्वकुलजां वृद्धः कस्याश्चित्स्त्रिया एव मुखेन वारयितुं चेष्टते, तथा व्यवहारोऽपि, इति व्यञ्जयितुमुपयोगः। अन्योऽपि प्रगल्भः कामुकः स्वप्रेयसीमभिसरन्तीं तत्सम्बन्धिभिर्वार्यमाणामाकर्ण्य स्वयमभिसरतीति व्यवहारसिद्धं परमात्मन्यपि सगुणतावशाद् वाग्विषयतामुपगच्छंत्यावेदितम्। वस्तुतोऽभिमते साक्षात्कारात्मके ब्रह्मबोधे शब्दस्यासामर्थ्यमात्रं श्रुत्या बोध्यते, भगवदनुग्रहवशात्तु तद्विषये लौकिकवाचोऽपि सम्भवन्ति किं पुनरलौकिकवाचः। स्वेच्छावशादेकोऽहं बहु स्याम् इति सगुणतां भजमाने परमात्मनि वाङ्मनसयोर्विषयता संभाव्यत इति परमार्थः। यथा पुरुषोत्तममभिसरन्तीं वाचमागमो वारयति तथा वाचमभिसरन्तं पुरुषोत्तममागमो न वारयति, पुरुषोत्तमदर्शने निगमस्यासामर्थ्यादिति सरलः काव्यानुगतोऽर्थः ॥ १५ ॥

वाचाट—बहु निन्द्यं च भाषमाण, नटबटो इति साधिक्षेपं सम्बोधनम्, हताशया-अभाग्यग्रस्तया दुष्टया वा। विप्रलब्धः-परमात्मस्वरूपविषये वञ्चितः। अलीकम्-मिथ्या। अलीकालापित्वमुपपादयिष्यति-तथाहीत्यादिना श्लोकेन।

तथाहीति। तथाहि अत्र शरीरकोशे कोशवदावरके अस्मिन् देहे पञ्च

[ नेपथ्यमें ]

अरे बेकारबातें करनेवाला नटबालक, तुमको अभागी श्रुतिने ठग लिया है, इसी लिये तुम इस तरह की झूठी बातें कर रहा है। देखो—

इस शरीरमें रहनेवाला प्रत्यक्षप्रमाणसे सिद्ध पुरुषभी जब पञ्चस्कन्धके अतिरिक्त कुछ नहीं है, तब प्रत्यक्ष तथा अनुमान रूप दोनों प्रमाणोंसे परवर्त्ती उस पुरुषोत्तमकी सिद्धि तो बहुत दूर है ॥ १६ ॥

सूत्रधारः—अये, कुपित इव सुगतागमः शब्दायते । तदपहाय महामोहपरिवारपाखण्डगणाधिष्ठानदुर्विपाकामैहिकभोगभूमिमाश्रयाम्यद्वैतनिर्वृत्तां निर्वाणकाष्ठाम् ।

स्कन्धान् रूप-विज्ञान-वेदना-संज्ञा-संस्कारस्कन्धान् नाम पञ्चस्कन्धान् अतिरिच्य पुरुषः जीवोऽपि न सिद्धः प्रमाणीकृत्य साधितः, ( अस्यां स्थितौ ) मानद्वयागोचरवस्तुनः प्रत्यक्षानुमानरूपप्रमाणद्वयाविषयस्य पुरुषोत्तमस्य तु सिद्धिर्विदूरे अतिदूरे ( वर्त्तते ) यो हि पुरुषः प्रत्यक्षानुमानयोर्गोचरः स एव यदि पञ्चस्कन्धातिरिक्ततया साधयितुं न शक्यते तदा प्रत्यक्षानुमानरूपप्रमाणद्वयागोचरस्य पुरुषोत्तमस्य सिद्धिरतितमां दूरवर्त्तिनीति पुरुषोत्तमविषये त्वं श्रुत्या विप्रलब्धोऽसीति भावः । बौद्धैः पञ्चस्कन्धातिरिक्ततया जीवो नाभ्युपगम्यते किन्तु तत्सङ्घातस्वरूप एव जीवो मन्यते इति पूर्वमुपपादितम्, शिशुपालवधेऽपि 'सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम् । सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम्' ॥ इति श्लोके जीवस्य स्कन्धपञ्चकस्वरूपतोक्ता ॥ १६ ॥

कुपितः—धृतकोपः । सुगतागमः—बुद्धोपजीवितर्कगणः । शब्दायते—वदति । तत्—तस्मात् ( कुपितात्सुगतागमादात्मानं त्रातुम् ) । महामोहेति । महामोहस्य भेदस्य परिवारभूताः पोषकाः ये पाखण्डगणाः द्वेषमोहादयस्तेषाम् अधिष्ठानेन आश्रयभूतेन अन्तःकरणेन दृष्टः दुर्विपाकः परिणतिः यस्यास्तादृशीम् । ऐहिकभोगभूमिम्—इहभोगसाधनम् देहाध्यासम् । अपहाय—विसृज्य । अद्वैतनिर्वृत्ताम्—ऐक्यबोधरचिताम् । निर्वाणकाष्ठाम्—मोक्षदिशम् । आश्रयामि—शरणीकरोमि । कुपितं गर्जन्तं च रिपुमासन्नमालोक्य लोको भूमिमेकां परित्यज्य परां भूमिमवलम्बते, तदयमपि कुपितं सुगतागममालोक्य ततः स्वं त्रातुमन्यत्र यियासतीति नाटके, तत्त्वार्थस्तु लौकिका भोगा एव पाखण्डैः पुरुषार्थतया प्रोच्यन्ते ते च भेदपोषकद्वेषमोहादिभिः सङ्कीर्णा अन्तःकरणदृष्टदुष्टपरिणामाश्च तथा बन्धजनकतया हेया इति निर्वाणकाष्ठायां वैराग्ये प्रवृत्तिरुपयुज्यत इति ।

सूत्रधार—अरे, यह तो क्रुद्ध बौद्धमत बोलरहा है, अतः अब मैं मोहके परिवार पाखण्डगणसे युक्त इस ऐहिकभोग-भूमिकासे दूर हटकर अद्वैतसिद्ध निर्वाण-दिशाके आश्रयमें चला जाता हूँ ।

नटः—भाव, रागकर्मप्रसादितदेवतोपनीताः पौरुषातिशयसाधिता वा क्लेशलेशास्पृष्टाः परत्र भोगभूमय एव सेव्यन्ताम्, किमपसृत्य शून्याश्रयणेन।

सूत्रधारः— मारिष, विमर्शविरसो विषयतर्षापकर्षाय न

---

रागकर्मेति। रागकर्मणा सकामकर्मणा प्रसादिताः प्रसन्नतां नीताः याः देवताः ताभिः उपनीताः समुपस्थापिताः, पौरुषातिशयेन पुरुषनिष्ठेन अतिशयेन पुण्याख्येन साधिताः प्रापिताः। क्लेशलेशास्पृष्टाः—क्लेशमात्रयापि रहिताः। परत्र—स्वर्गादौ। भोगभूमयः—भोगाय कल्पिता दिव्यदेहाः। अपसृत्य—पलाय्य। शून्याश्रयणेन किम्—मोक्षरूपस्याविदितसुखदुःखतया शून्यस्य स्थानस्याश्रयणेन नास्ति किमपि फलम्। रागोऽयं सुगतागमभीतो निर्वाणकाष्ठामाश्रयितुमिच्छति, तं नटः स्वर्गादिसुखाभिमुखतां नेतुमिदमाह। तत्र पारलौकिके स्वर्गादौ जननीये देवताप्रीतिरेव यज्ञव्यापार इति वेदान्तमतेन रागकर्मप्रसादितदेवतोपनीतत्वमुच्यते स्वर्गसुखोपयुक्तदिव्यदेहस्य। पुरुषनिष्ठोऽतिशयो धर्माख्यो यज्ञव्यापार इति मीमांसकमतेन तु पौरुषातिशयसाधितत्वमुक्तम्। 'क्लेशलेशास्पृष्टाः' इति 'यन्न दुःखेन संभिन्नं तत्सुखं स्वःपदास्पदम्' इति स्वर्गलक्षणानुध्यानेनोक्तम्। सति सुखमये स्थाने सुगमे स्वरक्षार्थमपि शून्यस्थानोपगमनं मूढतामेव गमयेत् 'उपनतमवधीरयन्त्यभव्याः', इति 'अविरुद्धसुखत्यागी पशुरेव न संशयः' इति च लोकोक्तेः। अत ईदृशी उक्तिर्नाटकपक्षे। तत्त्वपक्षे तु रागस्य वैदिकपुरुषत्वादानुश्रविको भोगो न हेय इत्ययमाक्षेप इति बोध्यम्।

विमर्शेति। दैवतप्रसादोपनतो भोगो विमर्शविरसः ( अतश्च ) विषयतर्षापकर्षाय न क्षमते। दैवतप्रसादेन यज्ञादिव्यापारेणोपनतः प्रापितः भोगः स्वर्गादिसुखम् विमर्शविरसः विचारे क्रियमाणे स्वादहीनः, तस्यापि क्षयित्वात्, तथा च श्रुतिः—'तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते'

---

नट—भाव, सकामकर्मसे आराधित देवताद्वारा उपस्थापित, अथवा पुरुषगत अतिशयसे प्राप्त क्लेशरहित स्वर्गभोगरूप भूमिकाही आश्रय लीजिये, भागकर शून्यका आश्रय क्यों ले रहे हैं।

सूत्रधार—मार्ष, विचारनेसे विरस यह दैवतप्रसादसे उपस्थापित स्वर्गभोग

क्षमते दैवतप्रसादोपनतो भोगः। तथा हि।

याज्यैराज्यमुपाकृतं शिखिमुखेनास्वाद्य तन्निष्क्रयं
क्षीराब्धेर्नवनीतबिन्दुममरा यच्छन्ति कालान्तरे।
तं पीत्वा जननीपयोधरघटात्पुत्रस्य वा तर्जनी-
मूलप्रस्रवणात्पयांसि तृषितः पातुं जनो धावति ॥१७॥

इति। सांख्यकारिकायामपि स्वर्गस्य क्षयित्वमुच्यते—'दृष्टवदानुश्रविकः स ह्यविशुद्धि-क्षयातिशययुक्तः' इति। विमर्शविरसत्वादेव हेतोः स्वर्गादिः विषयतर्षापकर्षाय—विषयतृष्णां शमयितुम्। न क्षमते—न शक्नोति। भोगस्य भोगान्तरेच्छोत्पादकतया स्वर्गभोग इन्द्रत्वोपभोगेच्छां जनयेत्, इन्द्रत्वोपभोगश्च प्राजापत्योपभोगेच्छां जनयेदिति विषयतृष्णा कदापि स्वर्गभोगेन न शक्यते शमयितुम्—'न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥' इत्युक्तेः।

याज्यैराज्यमिति। अमराः देवाः याज्यैः याजनीयैर्यजमानैः उपाकृतम् मन्त्रवद्धर्मसंस्कृतम् आज्यम् हवनीयम् घृतम् शिखिमुखेन अग्निर्वै देवानां मुख-मित्युक्तदिशा मुखस्वरूपेण वह्निना आस्वाद्य उपभुज्य कालान्तरे परतः तन्निष्क्रयम् तत्प्रतिफलरूपम् क्षीराब्धेर्नवनीतबिन्दुम् क्षीरसागरमन्थनोपलब्धममृतम् यच्छन्ति स्वर्गभोग्यतयोपहरन्ति, जनो लोकः तम् यज्ञप्रतिफलतया प्राप्तममृतम् पीत्वा तृषितः पुनर्जाततृषः जननीपयोधरघटात् मातृस्तनकलशात् पुत्रस्य तर्जनीमूलप्रस्रवणात् पयः स्तन्यं जलं च तानि पयांसि पातुम् धावति। जनो देवान् यज्ञे घृताहुत्या धिनोति, तृप्ताश्च ते स्वर्गभोग्यममृतमुपहरन्ति, तत्पीत्वापि जनो मातृस्तन्यं पुत्रतर्पणप्राप्यजलं च पिपासति। मातृस्तन्यपिपासा पुनर्जन्मसूचिका, तर्जनीमूलजलपिपासा च मरण-सूचिका, तेन प्रेत्यभावपरम्परानुगततया स्वर्गो हेय इति व्यञ्जितम्। तर्जनीमूलतो जलस्रावणं 'पित्र्यं तीर्थं तयोरधः' इति स्मृतिसमर्थितम्॥ १७॥

विषयतृषाको घटा नहीं सकता है, क्योंकि :—यजमान द्वारा होममें अर्पित घृतराशिको अग्निरूप मुखके माध्यमसे आस्वादित करके देवगण जिस क्षीरसागरसे उत्पन्न अमृतकी बूंदको देते हैं, उसे पीलेनेके बाद भी लोग माताके स्तनसे दूध तथा पुत्रकी तर्जनीके मूलरूप झरनेसे पानी पीनेको दौड़ते ही हैं। [स्वर्ग भोगके बाद भी जन्म-मृत्युकी परम्परा बनी ही रह जाती है]॥ १७॥

अपि च ।

**मुहुर्मिहिरतप्तेन सोमपात्रेण संभृतम् ।**
**न लिप्से राहुमार्जारपीतोच्छिष्टं सुधादधि ॥ १८ ॥**

नटः—तथाऽप्यपरिचितचरी निर्वाणकाष्ठेति कथमेनामाश्रयितुमीहसे ।

सूत्रधारः—श्रुतिवर्णितमस्या रामणीयकं क्षणमनुभूय पारमाप्स्यामि दुरन्तसमुद्रस्य ।

---

मुहुर्मिहिरेति । मिहिरतप्तेन सूर्यसन्तापितेन सोमपात्रेण चन्द्रात्मना भाजनेन संभृतम् धृतम् राहुरूपस्य मार्जारस्य विडालस्य पीतोच्छिष्टं समास्वादितावशिष्टम् सुधादधि अमृतरूपं दधि मुहुः पुनः न लिप्से नाभिलष्यामि । चन्द्रमण्डलममृतपिण्डमिति पौराणिकी प्रसिद्धिमनुरुध्येयमुक्तिः । मिहिरतप्तपात्रवृत्तितया दध्नो द्रप्साऽऽकारतया पानयोग्यता । स्वादराहित्यध्वनिश्च पानेच्छाऽविषयत्वमूलम् । अतश्च स्वर्गस्याकाम्यतया दुःखाभावरूपोऽपवर्ग एवाश्रयणार्ह इति व्यक्तम् ॥ १८ ॥

अपरिचितचरी—कदापि न परिचिता, अभावरूपतयाऽपरिचितत्वमाक्षिप्यते, तथा च भवति परेषां श्लोकः—"दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते । नहि मूर्च्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधी ॥" 'अवेद्यः' इत्यपरिचितत्वार्थकः । निर्वाणकाष्ठा—मोक्षदिक् एनाम्—निर्वाणकाष्ठाम् । अपरिचितकाष्ठाश्रयणस्य भयभूमिताऽभिहिता—'भीतिरपरिचितभूमौ' इति । अतश्च तदाश्रयणसामर्थ्यप्रश्नः ।

श्रुतिवर्णितम्—वेदबोधितम् । अस्याः—निर्वाणकाष्ठायाः । रामणीयकम्—हृद्यत्वम् । दुरन्तसमुद्रस्य—परिणामभयङ्करस्यास्य संसारस्य । इदमत्र तत्त्वम्—भवता मोक्षोऽवेद्यतयाऽऽक्षिप्तस्तत्र वेदनं परोक्षमपरोक्षं वाऽपेक्षितम् , आद्ये विद्यते

---

और—सूर्यकी किरणोंसे तपाये गये इस चन्द्ररूपपात्रमें स्थित सुधारूप दही मैं नहीं पीना चाहता हूँ क्योंकि यह राहुरूप मार्जारका उच्छिष्ट है ॥ १८ ॥

नट—फिर भी निर्वाण-दिशा अपरिचित है, आप उसका आश्रय क्यों लेना चाहते हैं ?

सूत्रधार—वेदवर्णित उसकी रमणीयताका क्षणभर अनुभव कर लेनेके बाद ही मैं इस दुरन्त सागरके पार चला जाऊँगा ।

( नेपथ्ये । )

अरे भरतवंशदुर्भग, का नाम श्रुतिः । अयमहमस्या हताशाया हरामि दुष्टदारिकां प्रमितिम् ।

सूत्रधारः—( ससंभ्रमम् । ) हन्त, हृता श्रुतेः प्रमितिः सुगतागमेन ।

( नेपथ्ये । )

हा नाथ, कथमुपेक्षसे । किं वा
प्रभवति मतये पदप्रबन्धो
न तव निरत्ययनित्यचेतनस्य ।

---

एव श्रौतो मोक्षबोधः, अन्त्ये वर्त्तमानापि मुक्तिरचिरं मुक्तैरनुभूयत एव । तदेवात्र श्रुतिवर्णितमित्यनेन प्रतिपादयितुमिष्टं बोध्यम् ।

नेपथ्ये—'कुशीलवकुटुम्बस्य गृहं नेपथ्यमुच्यते' इति तत्राहश्यपात्रके स्थाने, भरतवंशदुर्भग—नीचनट । अहम्—सुगतागमः । प्रमितिम्—वेदप्रामाण्यम्, वेदप्रामाण्येऽपहृते तदुक्तौ विश्वासानौचित्येन तद्बोधिते मोक्षस्वरूपेऽनाश्वासोदयादपरिचितत्वप्रत्यवस्थाने सति तस्य पुनरप्यनाश्रयणीयताप्रसक्तिः, बौद्धा हि वेदप्रामाण्यं न स्वीकुर्वन्तीति प्रतिपादितमन्यत्र—"अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् । बुद्धिपौरुषहीनानां जीविका धातृनिर्मिता" ॥ इति ।

किंवा—अथवा । ( त्वं नोपेक्षसे, किंतु मदीयपरिदेवनं नावगच्छसि; इति पक्षान्तरम् ) ।

प्रभवतीति । हे असुरारे दैत्यसूदन, निरत्यया अविनाशिनी नित्या अजन्या

---

[ नेपथ्यमें ]

अरे नीचनट, यह श्रुति कौन है ? मैं इस अभागी श्रुतिकी पुत्री प्रमितिका अपहरण कर रहा हूँ ।

सूत्रधार—( घबड़ाहटके साथ ) हाय, श्रुतिपुत्री प्रमितिको बौद्धमत अपहृत करके लिये जा रहे हैं ।

[ नेपथ्यमें ]

हा नाथ, आप हमारी उपेक्षा क्यों कर रहे हैं ? अथवा—

आपका चैतन्य ( ज्ञान ) अविनाशी एवं अजन्य—नित्य है, अतः शब्दों

न भजसि करुणामतोऽसुरारे
मम कृपणैः परिदेवितप्रपञ्चैः ॥ १९ ॥
अलमथवा भवन्तं प्रति वाचोयुक्त्या
अभिलषितमथानुचिन्तितं यो
हृदयगुहानिहितः शृणोत्यकर्णः ।

---

च चेतना यस्य तादृशस्य तव मतये बोधाय पदप्रबन्धो वाक्यजातं न प्रभवति समर्थतां श्रयति, अतः अस्मादेव कारणात् कृपणैः दीनाक्षरैः मम परिदेवितप्रपञ्चैः रोदनपूर्वकभाषणैः करुणां न भजसि न दयसे । यदि तव बोधो जन्यः स्यात्तदा मद्रुदितानि श्रुत्वा तव दयाऽवश्यमुदियात्, नित्यबोधतया तव न जन्यो बोधः, अतो मम कृपणानि परिदेवितानि श्रुतवतोऽपि तव करुणा नोदेतीति नितान्तस्वाभाविकमित्यर्थः । परिदेवितेन शब्दप्रयोगात्मकेन करुणा वाक्यार्थबुद्धिजननद्वारैव जन्यते, तव तु बुद्धिरजन्या न वचनशतेनापि जनयितुं शक्येति तात्पर्यम् ॥ १९ ॥

अभिलषितमिति । यः हृदयगुहायाम् निहितः शयितः ( हृदयस्थितः ) अत एव अभिलषितम् कामनाविषयतां गतम् अनुचिन्तितं ध्यातञ्च अकर्णः ( सन्नपि ) शृणोति, तम् अमुम् त्रय्याः वेदवाचो भुजङ्गमुपपतिं सर्पञ्च अवचनं सन्तमपि वाग्मिनम् वाक्पटुम् बोधयितुं स्वाशयं ज्ञापयितुं त्रयी ( एव ) प्रभवति । योऽसौ परमात्मा हृदयस्थित इति काम्यमानं चिन्त्यमानं च सर्वमप्यकर्णः सन्नपि शृणोति, स हि भुजङ्गस्त्रय्या एव बोधयितुं शक्यते तस्य तद्वचसैव प्रत्येयत्वात् । अकर्णः शृणोतीति चक्षुःश्रवस्त्वेन सर्पता समर्थिता । 'अवचनमपि वाग्मिनम्'

---

द्वारा वह उत्पन्न नहीं किया जा सकता है । मेरा विलाप शब्दरूप है वह आपके ज्ञानको ( जो नित्य है ) उत्पन्न नहीं कर पाता है । हे असुरारे, इसीकारणसे आप मेरी करुण पुकारपर भी द्रवित नहीं हो रहे हैं ॥ १९ ॥

अथवा—आपके प्रति वचनका प्रयोग व्यर्थ है ।

जो हृदयरूप गुहामें वर्त्तमान रहकर, विना कानके ही सारी अभिलषित तथा चिन्तित वस्तुओंको सुना करता है ( ऐसे ) आप त्रयी ( वेद ) के

तमसुमवचनं च वाग्मनं च
प्रभवति मन्त्रयितुं त्रयीभुजङ्गम् ॥ २० ॥

सूत्रधारः—इयमसौ परैरपह्रियमाणप्राणा प्रमितिरशरणाशरण्यचरणं पुरुषाणामुत्तमं त्रातारमाक्रोशति ।

( नेपथ्ये । )

अचिन्तनीयानि तव स्वन्तदुरन्तसर्गप्रलयविलसितानि ।
निगमवनवनस्पते प्रसूषे
कति जगदण्डमयान्युदुम्बराणि ।

---

इति—परमेश्वरस्याचिन्त्यसामर्थ्यंताद्योतनाय । 'अकर्णः' इति—'पश्यत्यचक्षुः स शृणोत्यकर्णः' इति श्रुतिमनर्थितमुक्तम् । भुजङ्गमपि त्रयी मन्त्रयितुं मन्त्रेणानुकूलयितुं शक्नोति । अतो यो भुजङ्गः केवलं स्वोपभोग्यया त्रय्या एव वशस्तं प्रत्यलं वाचोयुक्त्येति पूर्वोक्तं समर्थितं बोध्यम् ॥ २० ॥

परैः—शत्रुभिः सुगतागमैः । अपह्रियमाणप्राणा—प्राणग्राहमभिभूयमाना । अशरणा—रक्षकहीना ।

स्वन्तेति । स्वन्तानि सुखावसानानि दुरन्तानि दुःखावसानानि च सर्गप्रलययोः सृष्टिसंहारयोर्विलसितानि विलासाः । अचिन्तनीयानि—चिन्तयितुमशक्यानि ।

निगमवनेति । निगमो वेद एव वनं दुर्गमं स्थानं तत्र वनस्पते अपुष्प अथापि फलप्रदवृक्ष, वेदवनस्थितोदुम्बरतरो, जगदण्डमयानि ब्रह्माण्डस्वरूपाणि

---

भुजङ्ग ( जार प्रिय ) हैं, आपको वचनके विना भी वाग्मिता उपलब्ध है, आपको वही श्रुति ( त्रयी ) मन्त्रणा दे सकती है ( दूसरोंकी बातें आप नहीं सुन सकते हैं ) ॥ २० ॥

सूत्रधार—यह प्रमिति अशरण होकर शरणागतरक्षक पुरुषोत्तमको पुकार रही है, प्रमितिके प्राण ले रहे हैं यह शत्रु ।

[ नेपथ्यमें ]

आपके यह परिणामरमणीय तथा परिणामभीषण सृष्टि और प्रलयके विलास अचिन्तनीय हैं ।

आर वेदरूप वनके वह उदुम्बर वृक्ष हैं जो असंख्य ब्रह्माण्डरूप उदुम्बर

दधति बहलजन्तुजालमन्तः
पुनरपि तानि लयं त्वयि प्रयान्ति ॥ २१ ॥

सूत्रधारः—इयमसावगणितदुहितृव्यसनशोकवैशसा श्रुतिरुपश्लोकयति लोकोत्तरपुरुषम् ।

( नेपथ्ये । )

अरे रे प्रमाणमानिनि, तदियं तावन्न भवसि ।

---

कति अविज्ञातसंख्यानि बहूनि उदुम्बराणि तन्नामकानि फलानि सूषे उत्पादयसि । तानि त्वया प्रसूतानि ब्रह्माण्डरूपाण्युदुम्बरफलानि अन्तः स्वाभ्यन्तरभागे बहलजन्तुजालम् बहुसंख्यं प्राणिचयं दधति धारयन्ति सन्ति पुनरपि त्वयि परमात्मनि लयं प्रयान्ति लीयन्ते । यथा वनस्थित उदुम्बरतरुः सन्बहूनि फलानि सूते येषु फलेष्वन्तर्भागे बहवो जन्तवो मशकास्तिष्ठन्ति तानि च फलानि तत्रैव लीयन्ते, हे वेदप्रतिपाद्यपरमात्मन्, त्वं तथैव ब्रह्माण्डरूपाणि उदुम्बरफलानि जनयसि येषु ब्रह्माण्डेषु नानाप्राणिनो वसन्ति, तानि च ब्रह्माण्डानि चरमे त्वय्येव लीयन्त इत्यनेन परमात्मनः—'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति' इति श्रौतं लक्षणमुक्तम् । 'वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः' इत्यमरः । इतः पूर्वतने श्लोके 'प्रभवति मन्त्रयितुं त्रयी भुजङ्गम्' इत्युक्तं, तदनुसृत्य वेदमुखेनात्र परमात्मोक्त इति परमार्थः । परम्परितरूपकमलङ्कारः ॥२१॥

अगणितदुहितृव्यसनवैशसा—दुहितुः प्रमितः व्यसनं सुगतागमकृतमपहरणमेव व्यसनम् दुःखम् तदेव वैशसं वधमगणयन्ती । उपश्लोकयति—स्तौति ।

प्रमाणमानिनि—आत्मानं प्रमाणं मन्यमाने ( श्रुते ) इयं तावन्न भवसि—

---

फलोंको उत्पन्न करता है । उन फलोंके अभ्यन्तर भागमें बहुत जीवजन्तु निवास करते हैं, और ( प्रलयकाल ) अन्तमें वह फल ( ब्रह्माण्ड ) आप ( उदुम्बर वृक्ष ईश्वर ) में ही लीन हो जाते हैं ॥ २१ ॥

सूत्रधार—यह श्रुति अपनी पुत्रीके व्यसनरूपकष्टपर विना ध्यान दिये हुए लोकोत्तर पुरुषकी स्तुतिमें संलग्न है ।

[ नेपथ्यमें ]

अरी ओ अपनेको प्रमाण समझनेवाली श्रुते, अभी तुम समाप्त की जा रही हो ।

सूत्रधारः— अयं तावदनृतव्याघातपुनरुक्तनामा सुगतागमाग्रणीरप्रमाणधर्मगणः श्रुतिमभिधावति।

---

इयं त्वं मया विपाद्यसे। अनृतव्याघातपुनरुक्तत्वदोषैर्बौद्धाः वेदस्याप्रामाण्यं साधयन्तीति हृदये कृत्वेयमुक्तिः।

अनृतेत्यादि। अनृतव्याघातपुनरुक्तनामा दोषगणो वेदस्य प्रामाण्यं नाशयितुं तदभिमुखमागच्छति, स चायं दोषगणः पाखण्डधर्मोद्दतः। तथा चाहुर्बौद्धाः— "ननु नाद्यापि वेदस्य प्रामाण्यं सुस्थवत्स्थितम्। स्वदेहसंभवैरेव दोषैरनृततादिभिः॥" इति। अनृतादिभिरित्यनेन अनृतव्याघातपुनरुक्तत्वाख्यास्त्रयो दोषाः अप्रामाण्यसाधनाय प्रयोक्तुमिष्यमाणा बोध्याः। तत्रानृतत्वं द्विधा साध्यते—असंवादेन विसंवादेन च, असंवादो नाम यत्कथ्यते तन्न मिलति, विसंवादो नाम यत्कथ्यते तद्विपरीतं प्राप्यते इति। तथा च 'चित्रया यजेत पशुकामः' 'पुत्रकामः पुत्रेष्ट्या यजेत' इति श्रूयते न चेष्ट्यनन्तरमपि पुत्रपश्वादिफलमुपलभ्यते। (इत्यसंवादो नामानृतभेदः) विसंवादोऽपि क्वचिद् दृश्यते, यथा—प्रमीते यजमाने पात्रचयाख्यं कर्मोपदिश्यैवमादिदेश वेदः 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याती'ति। तत्रैष इति तावदात्मनो निर्देशः क्लिष्ट एव परोक्षत्वात्, स्फ्यकपालादियज्ञायुधसंबन्धाभावाच्च, कायस्त्वेष निर्दिश्यते स न स्वर्गं यातीति तद्विपरीतभस्मीभावोपलम्भादिति विसंवादः (अनृतभेदः) तदेवमनृतकथनादप्रमाणं वेदः। व्याघातोऽपि वै दृश्यते—'उदिते जुहोति, अनुदिते जुहोति, समयाध्युषिते जुहोति' इति होमकालत्रयमपि विधाय निन्दार्थवादैस्तदेव निषेधति—'श्यावो वा अस्याहुतिमभ्यवहरति य उदिते जुहोति, शबलो वा अस्याहुतिमभ्यवहरति योऽनुदिते जुहोति, श्यामशबलावस्याहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति' इति। तस्मात् परस्परविरुद्धार्थोपदेशलक्षणाद् व्याघातादप्रमाणं वेदः। पौनरुक्त्यमपि दृश्यते वेदे—'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इत्यभ्यासचोदनायां प्रथमोत्तमयोः सामिधेन्योस्त्रिर्वचनात्पौनरुक्त्यम्। सकृदनुवचनेन तत्प्रयोजनसम्पत्तेरनर्थकं त्रिर्वचनम्। तदेवं संहत्यानृतव्याघातपुनरुक्तदोषकलुषितत्वादप्रमाणं वेद इति तेषामाशयः।

---

सूत्रधार—अनृत, व्याघात, पुनरुक्त नाम वाला मिथ्याधर्मगण बौद्धमतसेनानीके रूपमें श्रुतिको खदेड़ रहा है।

( नेपथ्ये । )

गृह्णीत तर्काः प्राणग्राहममीषामागमद्रुहां गणम् ।

सूत्रधारः—इयमान्वीक्षिकी तर्कैः सह परनिग्रहायावतरति, यामुपजीवन्ति निजनिजनिःश्रेयससाधनायेतरास्तिस्रो वार्तात्रयीदण्डनीतयो विद्याः।

अपवर्गः पुमर्थानां प्रमाणं तत्त्वसंपदाम् ।
आन्वीक्षिकी च विद्यानां चतुर्वर्गशिरोमणिः ॥ २२ ॥

तावदेव पुरुषो विधिनियोगवशंवदो यावदेनामान्वीक्षिकीं नोपास्ते ।

---

आगमद्रुहाम्—वेदप्रामाण्यविरोधद्वारा वेदविरोधिनाम् ।

परनिग्रहाय—शत्रुपराभवाय । निजनिजेति । वार्त्ताविद्याया निःश्रेयसं कृष्यादिः, त्रय्या निःश्रेयसं स्वर्गः, दण्डनीतेः निःश्रेयसञ्च—स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलस्वरूपसप्ताङ्गराजसम्पत् । सर्वत्रान्वीक्षिक्या उपयोगः न्यायवार्त्तिकतात्पर्ये द्रष्टव्यः ।

अपवर्ग इति । पुमर्थानां पुरुषार्थतया ख्यातानां कामार्थधर्ममोक्षाणाम् ( मध्ये ) अपवर्गः, प्रमाणम् प्रमितिः प्रमाता, प्रमेयमिति । तत्त्वसम्पच्चतुर्वर्गे प्रमाणम्, विद्यानाम् आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिरिति चतसृषु विद्यासु आन्वीक्षिकी च चतुर्वर्गात्मिकासु शिरोमणिः प्रधानमिति ॥ २२ ॥

विधिनियोगवशंवदः—ब्रह्मण आज्ञाया वशवर्त्ती भाग्याधीनो वा ।

---

[ नेपथ्यमें ]

तर्कों, इन वेदविरोधियोंके गणको जीवित रूपमें पकड़ो ।

सूत्रधार—यह आन्वीक्षिकी तर्कोंके साथ शत्रुओंको परास्त करनेके लिये ( युद्ध क्षेत्रमें ) उतर रही है। इसके पीछे वार्त्ता, त्रयी, दण्डनीतिरूप तीन विद्यायें हैं जो अपना भला चाहती है ।

जिसप्रकार पुरुषार्थोंमें अपवर्ग प्रधान है, ( प्रमेय, प्रमिति, प्रमाता, प्रमाण स्वरूप ) तत्त्वसंपत्में प्रमाणप्रधान है, उसीतरह विद्याओंमें आन्वीक्षिकी प्रधान है, वह चतुर्वर्ग-शिरोमणि है ॥ २२ ॥

पुरुष तभी तक ब्रह्माकी आज्ञाका वशवर्त्ती रहता है जबतक वह आन्वीक्षिकी की उपासना नहीं करता है—

मिलति नयनमक्षपादपाद-
प्रणिपतनेन ललाटसीम्नि यस्य ।
विधिरपि पुरुषस्य तस्य भाले
लिखितुमदृष्टलिपिं कुतः क्षमेत ॥ २३ ॥

( नेपथ्ये । )

अरे रे परिवारविद्याः, सर्वा अपि यूयमनुयात प्रसभमभ्यमित्रीणा-

मिलतीति० । यस्य पुरुषस्य ललाटसीम्नि भालदेशे अक्षपादस्य तदाख्यस्य न्यायदर्शनप्रणेतुः पादप्रणिपतनेन चरणप्रणिपातेन हेतुना नयनम् ( अक्षपाद-चरणवर्त्तिनयनेन ) मिलति संश्लिष्यति, तस्य पुरुषस्य भाले ललाटदेशे 'विधि-र्ब्रह्मा भाग्यमपि वा अदृष्टलिपिम् अदृष्टसंज्ञकं लेखं लिखितुं कथं क्षमेत न क्षमेतेत्यर्थः, पादगतनयनेन ललाटस्य मिलने चक्षुषा दृश्यमाना लिपिर्दृष्टत्वादेव च्यवेतेति तात्पर्यम् । केचित्तु—अस्य श्लोकस्य योगपक्षीयमर्थमित्थं वर्णयन्ति—'नास्ति क्षपा रात्रिः दैनन्दिनप्रलयो यस्यासावक्षयः भूरादिस्वःपर्यन्तत्रिलोकान्तान्तर्वर्त्ती सूर्यः तमत्ति विनाशयतीत्यक्षपादः— 'अभावं पौरुषं प्राहुः कालमेके यतोऽभयम्' इत्यादिस्मृत्युक्तपञ्चविंशतितत्त्वात्मकः कालः परपुरुषांशः, सः 'पादोऽस्य विश्वा-भूतानि' इति श्रुत्युक्तसंभूतरूपपादे यस्य स महाविराट् पुरुषोत्तमः अक्षपाद-पादः, तस्य प्रणिपतनेन ध्यानोपहारेण यस्य नयनं ललाटसीम्नि अविमुक्तपदवाच्य-भ्रूमध्ये मिलति अवलोकनसतताभ्यासेन भ्रूमध्ये लग्नं जायते, तस्य भाले विधिः कर्त्तव्याकर्त्तव्यरूपशास्त्रीयविधिरपि अदृष्टलिपिम् अपूर्वसंज्ञकमक्षरत्रयं लिखितुं कथं क्षमेत ! प्रोक्तपुरुषस्य विहितनिषिद्धकर्मणी शुभाशुभफलभोगं निष्पादयितुं न प्रभवतः, योगेऽविमुक्तसेविनां ज्ञानसाक्षात्कारप्रसिद्धेरुक्तत्वात् ।" इति ॥ २३ ॥

परिवारविद्याः—मीमांसादीनीति वेदाश्रितानि शास्त्राणि । अभ्यमित्रीणाम्—

अक्षपादके चरणोंमें सिर झुकानेके कारण जिसके ललाटकी सीमामें (अक्षपाद-के पैरवाले ) नयन मिलजाते हैं, भला ब्रह्मा भी उसके भालमें अदृष्टलिपि लिखनेमें कैसे समर्थ हो सकेगा । ( उसके ललाटमें जो कुछ लिखाजायगा वह तो नयनके पासरहनेसे दृष्ट लिपि ही हो जायगी ) ॥ २३ ॥

[ नेपथ्यमें ]

अरे परिवार-विद्याओ, तुम सब वत्सा आयुष्मती आन्वीक्षिकीके साथ

मायुष्मतीं वत्सामान्वीक्षिकीम

सूत्रधारः—श्रुतिनिदेशसमनन्तरममूरभ्यमित्रं परापतन्ति तर्कनासीरा विद्याः। तदितः साधयावः।

( इति निष्क्रान्तौ। )

इति साधनचतुष्टयसंपत्तिर्नाम प्रस्तावना।

---

शत्रुमुद्दिश्य कृतप्रस्थानाम्।

अमूः—परिवारविद्याः। अभ्यमित्रम्—अमित्रं शत्रुमभिमुखीकृत्य। तर्कः नासीरं सेनामुखम् यासान्ताः—तर्कनासीराः तर्कपुरोगमाः, 'सेनामुखं तु नासीरम्' इति हलायुधः।

---

जाओ, वह शत्रुका सामना करने जा रही है।

सूत्रधार—श्रुतिकी आज्ञासे सारी तर्कप्रमुख परिवार-विद्यायें शत्रुपर धावा बोलने जा रही हैं। हम भी यहाँ से चलें।

[ दोनोंका प्रस्थान ]

[ साधन-चतुष्टय-सम्पत्ति नामक प्रस्तावना समाप्त ]

( ततः प्रविशति श्रुतिरान्वीक्षिकी च । )

आन्वीक्षिकी—भगवति, दिष्ट्या वर्धसे द्विषन्निग्रहेण दुहितृप्रत्याहरणेन च ।

श्रुतिः—वत्से, कथमुत्सिक्तविक्रमाः परे परिभूताः, कथमभ्युपापद्यत वत्सा प्रमितिः ।

आन्वीक्षिकी—भगवति, मन्निसृष्टेन तर्कगणेन बाध्यमानेष्वनृतव्याघातपुनरुक्तेषु, भवद्वयवावनव्यासक्तासु परिवारविद्यासु, परेषां नृशंसप्रहारेभ्यश्चानेन जनेन परिपाल्यमाने निरिन्द्रियर्विकलतनौ तत्र पितरि

'भगवति' इति संबोधनं श्रुत्याः । द्विषन्निग्रहेण—शत्रुपराजयेन । दुहितृप्रत्याहरणेन—तव दुहिता प्रमितिर्नाम या बौद्धैरपहृताभवत्तस्याः पुनः प्रत्यानयनेन च ( भाग्यं तव समेधमानं वर्त्तते ) ।

उत्सिक्तविक्रमाः—दर्पयुक्तबलाः सदर्पा बलिनश्चेत्यर्थः । परे—मम शत्रवः । अभ्युपापद्यत—विपद उद्धृता । अभ्युपपत्तिर्विपदुद्धार इति गोकुलनाथः स्वयमेव टिप्पण्यामाहस्म ।

मन्निसृष्टेन—मया आन्वीक्षिक्या निसृष्टेन प्रेरितेन । बाध्यमानेषु—खण्ड्यमानेषु । अनृतव्याघातपुनरुक्तेषु—इमानेव दोषान्प्रदर्श्य परे श्रुतिदुहितरं प्रमितिमपाहरन्त, अमीषां खण्डनं तर्कैः कृतम् ।

भवदवयवावनव्यासक्तासु—भवत्याः श्रुतेः अवयवानां शिक्षादिषडङ्गानामवने रक्षणे व्यासक्तासु तत्परासु । परिवारविद्यासु—मीमांसाप्रभृतिषु विद्यासु । नृशंस-

[ श्रुति तथा आन्वीक्षिकीका प्रवेश ]

आन्वीक्षिकी—भगवति, यह आपका भाग्योदय है कि आपके शत्रु पराजित हो गये हैं और आपकी पुत्री प्रमिति लौटा लाई गई है ।

श्रुति—वत्से, दर्पपराक्रमशाली शत्रुगण किसप्रकार पराजित हो गये ? और वत्सा प्रमितिका उद्धार किस प्रकार हुआ ?

आन्वीक्षिकी—भगवति, मेरे तर्कगणने अनृत, व्याघात तथा पुनरुक्तको बाधित किया, परिवार-विद्यायें आपके अवयवों की रक्षामें तत्पर रहीं, मैंने शत्रुओंके क्रूरप्रहारोंसे इन्द्रिय तथा शरीर से विकल आपके पिता पुरुषकी रक्षा की,

पुरुषे, कुतोऽप्यतर्कितोपनता मिथ्यादृष्टेरात्मसंभवा संभावना नाम। विकट-दंष्ट्राकोटिद्वयसंकटेन करतालसंकलितालीकाट्टहासधूमायितधूसरिताकाशेन तरलतरतडित्काण्डकडारलोचनार्चिरर्चितस्फुलिङ्गितदिगङ्गनेनाननेन ग्रसितुमारेभे प्रमितिम्।

श्रुतिः—वत्से, तदात्वे वर्तमाना किमभाषत वत्सा।

---

प्रहारेभ्यः—निर्दयाघातेभ्यः। अनेन—मल्लक्षणेन जनेन। अत्र स्वनामाग्रहणेन नम्रताध्वनिः। निरिन्द्रियविकलतनौ—वृद्धतया क्षीणेन्द्रियशक्तावसमर्थदेहे च। तत्त्वार्थस्तु परमात्मनः करणगणविहीनतयाऽशरीरतया चोपपाद्यः। तव पितरि-श्रुतेर्जनके। अतर्कितोपनता—अविभाविताऽऽगमना। मिथ्यादृष्टेः—नास्तिकतायाः। 'मिथ्यादृष्टिर्नास्तिकता' इत्यमरः। आत्मसंभवा—पुत्री। संभावना—नास्तिकानां बौद्धानां मते शब्दो न प्रमाणं किन्तु संभावनामात्रोत्थापक इति। निश्चयः, तदेव मनसि निधायात्र संभावना मिथ्यादृष्टेरात्मजा कथिता। संभावनास्वरूपादिकं सर्वमपि काल्पनिकमेव। विकटेति। विकटं भीषणं दंष्ट्राकोटिद्वयम् दन्तपङ्क्तिद्वितयं तेन संकटेन परिपूर्णेन। करतालैः हस्तद्वयाघातजन्यैः शब्दैः सङ्कलिताः ये अलीकाट्टहासाः। मिथ्याहसितानि तैर्धूमायितः अत एव धूसरितः ईषद्धवलतां गतः आकाशो येन तथोक्तेन। तरलेति। तरलतरम् अतिशयचपलं यत्तडित्काण्डं विद्युद्गणस्तद्वत्कडारे पिङ्गलवर्णे ये लोचने नयने तयोरर्चिर्भिः ज्वालाभिः अर्चितानि शोभितानि अथ च स्फुलिङ्गितानि सञ्जाताग्निकणानि दिगङ्गनानां दिग्वधूनामाननानि येन तथोक्तेन। आननेन—मुखेन। 'प्रमितिं ग्रसितुमारेभे' इति नाटकपक्षीयोऽर्थः। अनादिरलीकार्थविषयिणी वासनासन्ततिर्मिथ्यादृष्टिस्तत्प्रभवाः असंख्ययोनयस्तास्वेका सभावनोभयकोटिगोचरा, सैव सर्वमपि शब्दप्रमितिकर्त्तव्यं व्यवहारं जनयतीति बौद्धमतमिति टिप्पणे गोकुलनाथः स्वयमेव तत्त्वार्थमुक्तवान्।

वत्से इति आन्वीक्षिकीसंबोधनम्। तदात्वे—तस्यां स्थितौ। वत्सा—प्रमितिः।

---

इसी समय किसी ओरसे मिथ्यादृष्टिकी पुत्री संभावना वहाँ आ गई, वह अपने भयङ्कर दन्तपङ्क्तियोंसे व्याप्त करतालसे मिलित अट्टहास द्वारा दिशाओं तथा आकाशको धूसर बनानेवाले, एवं स्थिर विद्युल्लताकी तरह पिङ्गलवर्ण नेत्र कान्तिसे दिशाओंको पूर्णकरनेवाले मुखसे प्रमितिको निगलने लगी।

श्रुति—उस स्थितिमें हमारी वत्सा प्रमितिने क्या कहा ?

आन्वीक्षिकी—तदा पुनः प्रकर्षापकर्षपिशुनेन वचनेनाधिचिक्षेप पुरुषोत्तममेव प्रमितिः। तथा हि—

विषमनिगमकाननान्तशाखा-
ततिषु निलीय परान्निरीक्षमाणः।
परिणतिविदलज्जगत्कपित्थ-
ग्रसनकपे सुचिरान्निरूपितोऽसि ॥ २४ ॥

---

प्रकर्षापकर्षपिशुनेन—प्रशंसां निन्दां च व्यञ्जयता। प्रशंसाऽन्तर्हिता निन्दा तु स्फुटा। अधिचिक्षेप—निनिन्द।

विषमेति। परिणतिविदलज्जगत्कपित्थग्रसनकपे, परिणतौ परिपाकदशायां विदलत् स्फुटीभवत् यत् कपित्थं नाम फलं तस्य ग्रसने भक्षणे कपे, (परिणताववसाने विदलतः विलयं गच्छतो जगतो ग्रसने तत्पर इति तु तत्त्वार्थः) विषमो दुष्प्रवेशो यो निगमस्तदेव वनं तस्यान्ते (उपनिषदि) शिखरे च याः शाखाततयः विटपाः उपनिषद्भेदाश्च तासु निलीय आत्मानं प्रच्छाद्य परान् स्वभिन्नान् जीवान् निरीक्षमाणः पश्यन् त्वं सुचिरात् बहुकालात् परतः निरूपितः अनुमानैः साधितः दृष्टश्चासि। यथा भयानके वने तरुशाखासु निलीय स्थितः परान्पश्यन् पक्वकपित्थग्रसनप्रवृत्तश्च कपिर्बहुकालावधानेन परिलक्ष्यते तथैवावसाननश्यद्विश्वसंहर्त्ता वेदनिगूढश्च परमात्मा चिरकालेनानुमानेन साधित इति तात्पर्यम्। अनुमानाद्याकारश्चान्यत्रात्रैव प्रकाशे द्रष्टव्यः ॥ २४ ॥

---

आन्वीक्षिकी—उस समय प्रमितिने प्रशंसा तथा निन्दाकी सूचना देनेवाले वचनों द्वारा पुरुषोत्तमको धिक्कार दिया। प्रमितिने कहा—

हे पुरुषोत्तम, आप भयानक वेद-वनकी झाड़ीमें छिपकर दूसरोंको देखते रहनेवाला, एवं परिणाममें गिरजानेवाले ससाररूप कपित्थफलके भक्षक वानर हैं, यह मुझे अब मालूम पड़ा है, (आपका यह वानररूप अभी दीखा है) ॥ २४ ॥

अपि च।

द्रुहिणभवनपद्मबीजमाला-
मणिपरिवर्तनतत्परात्मनस्ते।
ग्रसितुमखिलमेव जन्तुजातं
विजनयतो विदिता विडालवृत्तिः॥ २५॥

श्रुतिः—ततः।

आन्वीक्षिकी—ततोऽस्माकं नासीरपरिसरे पूरयन्निव रोदसोविवरमुत्प-

---

द्रुहिणेति। द्रुहिणस्य ब्रह्मणो भवनं प्रभवस्थानभूतं यत्पद्मं विष्णुनाभिकमलं तस्य बीजैः कमलाक्षैः निर्मिताया मालाया मणीनां गुटिकानां परिवर्त्तने अङ्गुल्यग्रेण सञ्चारणे तत्परात्मनः आसक्तचेतसस्तव पुरुषोत्तमस्य अखिलमेव जन्तुजातं सांसारिकजीवनिवहं ग्रसितुं भक्षयितुं संहर्त्तुं विजनयतः (उत्पादयतः) एकान्तं रचयतश्च तव विडालवृत्तिः मार्जारव्यवहारः विदिता ज्ञाता मयेति शेषः। यथा मार्जारः परजन्तुवञ्चनाय छद्मना धृतायाः मालायाः मणीन् परिवर्त्तयन् जन्तुजातं ग्रसितुमेव जनयति कामयते चैकान्तं तथा त्वमपि ब्रह्मभवनस्वरूपविष्णुनाभिकमल-बीजकृतमालाया मणीन् परिवर्त्तयन्—अनेकान् विष्णून् ततोऽपि बहुसंख्यकान् ब्रह्मणश्च जनयन् संसारमपि संहरसि। जगतः पुरुषोत्तमजन्यत्वेऽपि तद्भक्ष्यता तत्संहारकता विडालवृत्तित्वसमर्थनाय। विडालो यथा स्वेन जनितं शावकमश्नाति तथा त्वमपि स्वजन्यं जगत् संहरसि, एकान्तं च यथासौ मूषिकादिजन्तुजातग्रासाय रचयति, तथा पुरुषोत्तमोऽपि संहाराय प्रयस्यतीति तुलना॥ २५॥

नासीरपरिसरे—सेनामुखपर्यन्तभुवि। 'सेनामुखं तु नासीरम्' इति 'पर्यन्तभूः परिसरः' इति चामरः। रोदसोः—द्यावापृथिव्योः। विवरम—अन्तरालम्। पूर-

---

और—ब्रह्माके निवासभूत कमलके बीजकी मालाके मनकोंका आप फेरते रहते हैं और सांसारिक जन्तुओंको निगल जानेके लिये आप एकान्त ढूँढ़ते रहते हैं, यह आपकी विडालवृत्ति मुझे विदित है॥ २५॥

श्रुति—इसके बाद क्या हुआ?

आन्वीक्षिकी—इसके बाद हमारी सेनाके आगे सन्नाहके डङ्के बजने लगे,

तितपतितनक्षत्रलाजविकिरणाकुलदिक्कुमारीकदम्बकिर्मीरिताम्बराजिरो जर्जरितमूलकुलाचलकुलकन्दुकक्रीडनाकुलया मुहुरवनतोन्नतया प्रतिपदमवनिवनितया वितायमानधूलिपाटीपटवासपटलो निर्भरभयचकितदिक्कुञ्जरत्यक्तगुरुतरभूगोलभारभुग्नभोगिमल्लभोगाभोगभङ्गुरभुवनः ससंभ्रमभ्रश्यदैरावतबृंहितोपबृंहितो दध्वान सेनासंनहनदुन्दुभिः। येन स्म जनितविस्मयेन

यन् व्याप्नुवन्। उत्पतितेति। उत्पतिताश्च ते पतिताश्च ये नक्षत्ररूपा लाजाः भृष्टधान्यानि तेषां विकिरणे विक्षेपे आकुलं व्यग्रं यद्दिक्कुमारीणां कदम्बं समूहस्तेन किर्मीरितं विचित्रवर्णम् अम्बराजिरम् आकाशाङ्गनं येन तथोक्तः। 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' 'स्त्रियां तु संहतिर्वृन्दे निकुरम्बं कदम्बकम्' 'अङ्गनं चत्वराजिरे' इति सर्वत्रामरः। जर्जरितेति। जर्जरितानि शब्दाघातवशात् शिथिलीभूतानि मूलानि येषां तादृशा ये अष्टौ कुलाचलाः कुलपर्वतास्तेषां कुलेन समूहेन यत्कन्दुकक्रीडनं तत्राकुलया व्यस्तयाऽत एव मुहुः अवनतोन्नतया भारातिशयवशात्कदाचिन्नमन्त्या कदाचिदुन्नमन्त्या चेत्यर्थः। अवनिवनितया पृथ्वीस्वरूपया महिलया प्रतिपदं सर्वत्र स्थाने वितायमानं विस्तार्यमाणं धूलीरूपं पाटीरपटवासपटलम् चन्दनचूर्णसमूहो येन तथाभूतः। निर्भरभयेन अत्यर्थभीत्या चकिताः ये दिक्कुञ्जराः दिग्गजास्तैस्त्यक्तो यो गुरुतरो भूगोलस्तस्य भारेण भुग्नोऽवनतो यो भोगिमल्लस्य सर्पराजस्य भोगविस्तारः फणमण्डलं तेन भङ्गुरम् नश्यत् भुवनं येन तादृशः। ससंभ्रमम् सम्भ्रमेण सह भ्रश्यन् स्खलन् यः ऐरावतः गजराजस्तस्य बृंहितेन गर्जितेन उपबृंहितः वृद्धिं नीतः सेनासंनहनदुन्दुभिः सैन्यसज्जासूचकं वाद्यम्

उनके शब्दसे आकाश तथा पृथ्वीका अन्तराल भर गया, आकाशके अङ्गणमें दिशारूप बालिकायें उड़ उड़कर गिरनेवाले नक्षत्ररूप खील बिखेरने लगीं, मूलसे उखड़े हुए कुलाचलरूप कन्दुकोंसे क्रीड़ा करनेवाली पृथ्वीस्वरूपनायिका गिरती पड़ती हुई सर्वत्र धूलिस्वरूप चन्दनचूर्ण बिखेरने लगी, अत्यन्त भयभीत दिग्गजोंने पृथ्वीका भार उतार फेंका वह भार भी शेषके फणों पर ही आपड़ा, शेषनागके फणभारकी अधिकतासे झुकनेलगे जिससे पृथ्वी टूटने लगी। घबड़ाहटमें गिरते हुए ऐरावतने गर्जना की जिससे वह डंकेका शब्द और बढ़गया।

जनतास्मयघस्मरेण करणहारकेण कोणाभिघातमूर्च्छितमरुदुद्धूयमान-
विमानाध्वनीनेन विध्वनता ध्मायमाने ।

प्रसभनिविशमानकालसर्प-
प्रतिहतनिर्गमने खगोलनीडे ।

दध्वान शब्दं करोतिस्म । विजयार्थं प्रस्थितानां सैनिकानां शुभमाशंसन्त्यः कुल-
बालिकास्तदुपरि लाजान्विकिरन्तीति प्रसिद्धिः । अत्र दिक्कुमारिका विजययात्रा-
प्रस्थितासु सेनासु दुन्दुभिशब्दाघातात् पतन्ति नक्षत्राणि लाजरूपाणि विकिरन्ति,
तद्विकिरणव्यग्राभिश्च ताभिरम्बरदेशश्चित्रीकृत इत्यर्थः । कन्दुकक्रीडनव्यग्रो लोको
नतोन्नतो भवति, दुन्दुभिशब्दाघातशिथिलमूलाः कुलाचलाः कन्दुकसमतां गता-
स्तैः क्रीडन्ती अवनमन्ती उन्नमन्ती च धरा वनिता धूलीस्वरूपं चन्दनचूर्णं
परितो विस्तारयतीति 'पटल' इत्यन्तस्य विशेषणस्यार्थः । भयेन चकितो दिक्कुञ्जर-
गणो भुवनं त्यजति ततश्च भाराधिक्ये शेषनागफणाः अवनता भवन्ति तेन धरणी भङ्गुरतां
भजते इति 'भुवन' इत्यन्तस्य विशेषणस्यार्थः । येन स्मेत्यादि । जनितविस्मयेन—
आश्चर्यंकरेण । जनतास्मयघस्मरेण—लोकानां मदस्य विनाशकेन ( सद्यो मृत्यु-
भयसञ्जननद्वारा लोकानां मदमपनयता ) करणहारकेण—श्रवणादीन्द्रियसामर्थ्य-
हरेण । कोणस्य वादनदण्डस्य अभिघातेन ताडनेन मूर्च्छिताः प्रवृद्धाः ये मरुतः
वायवस्तैरुद्धूयमानाः मार्गादुपरि प्राप्यमाणाः विमानाध्वनीनाः व्योमयानपथिका
येन तादृशेन । निध्वनता—शब्दायमानेन । ( सेनासन्नाहदुन्दुभिना इति विशेष्यं
ध्यातव्यम् ) ध्मायमाने—महता शब्देन पूर्यमाणे ( 'खगोलनीडे' इत्यग्रिमश्लोक-
स्थेनान्वयः ) ।

प्रसभनिविशमानेति । प्रसभं हठेन निविशमानः अन्तः प्रविशन् यः काल-

वह शब्द लोगोंको आश्चर्यमें डालकर उनके ( गाम्भीर्य ) गर्व एवं इन्द्रियोंका
अपहरण करने लगा । वादनदण्डके आघातसे बढ़ने वाली वायुसे आकाशचारी
प्राणी उड़ाये जाने लगे, उस भीषण शब्दसे—

खगोलरूप नीड़ व्याप्त हो गया, मृत्युरूप काला सांप उसमें पैठ गया
जिसके उपस्थित हो जाने पर भागना संभव नहीं हुआ, फलतःउस खगोलनीड़के

बहुविधगतयो विविक्तजाया-
सुतजनना तनवः खगा भ्रमन्ति ॥ २६ ॥

अपि च तदानीं

कोणाहतिध्वनितदुन्दुभिभिद्यमान-

---

रूपः सर्पः तेन प्रतिहतं प्रनिरुद्धं निर्गमनं बहिर्भावो यस्मात् तादृशे तथोक्ते सति खगोलनीडे ब्रह्माण्डरूपे कुलाये बहुविधगतयः नानाप्रकारसञ्चाराः खगाः ग्रहाः पक्षिणश्च ( उभयेषामपि वियत्सञ्चारित्वाविशेषात् ) विविक्ताः पृथग्भूताः जाया स्त्री सुताः पुत्राः जनन्यः मातरः तनवः स्वदेहाश्च येषां तादृशाः सन्तः परिभ्रमन्ति। सेनासन्नाहदुन्दुभिजातेन महता शब्देन पूर्यमाणे खगोले कालस्य मृत्योः सद्यः समुपस्थिततया ग्रहाः ये वार्षिकमासिकपाक्षिकादिनानागतीर्धारयन्ति, ते इतस्ततश्चलितास्तेषु कियतां स्त्री वियुक्ता, ( यथा चन्द्रस्य स्त्रियो नक्षत्ररूपाः क्वचिदन्यत्र क्षिप्ततया वियुक्ताः ) कियतां सुता वियुक्ताः ( यथा सूर्यस्य सुतः शनिः चन्द्रस्य सुतो बुधश्च वियुक्तौ ) कियतां माता वियुक्ता ( यथा मङ्गलस्य माता मही ततो वियुक्ता ) कियतां च स्वदेहा एव वियुक्ताः ( यथा राहुकेत्वोरन्योन्यतनू वियुक्ते जाते ) तदेवं प्रलयकालिकं दृश्यं तेन शब्देन खगोले समुपस्थापितम्। तत्रैव च सेनासन्नाहदुन्दुभिना चकितः कालसर्पः कश्चन पक्षिनीडे प्रविष्टः, तेन च तस्य तत्र प्रवेशेन नानाविधगतयः पक्षिणः पलाय्य गन्तुमक्षमा जाताः, भयेनेतस्ततश्च सञ्चारिणस्ते जायया सुतैर्जनन्याऽन्ततः स्ववपुषा च वियुक्ता जाता इत्याशयः। अत्र कृष्णसर्पोपरुद्धनीडमध्ये विकलभ्रमत्पतगवृत्तान्ततादात्म्येन प्रलयकालावरुद्धे खगोले विकलभ्रमद्ग्रहगणवृत्तान्तस्तुलनामानीय वर्णितो बोध्यः। दुन्दुभिशब्दस्य प्रचण्डता तु पारमार्थिकीं व्यञ्जनां बिभर्त्ति ॥ २६ ॥

कोणाहतिध्वनितेति। कोणस्य वादनदण्डस्य आहत्या आघातेन ध्वनितः

---

ग्रहरूप पक्षीगण अपनी माता, स्त्री, पुत्र और अन्ततः अपने शरीरसे वियुक्त-होकर इतस्ततः घूमने लगे। ( ग्रहों में मङ्गलग्रहकी माता पृथ्वी, चन्द्रमाकी स्त्रियाँ तारे, चन्द्रमाका पुत्र बुध, एवं राहुका शरीर केतु वियुक्त हुए ) ॥ २६ ॥

और उस समय में—

'वादनदण्डके आघातसे ध्वनितहोने वाले डङ्केकी आवाजसे फूटे हुए

ब्रह्माण्डखण्डयुगझर्झरतालजालैः ।
जृम्भालकाललललनालपनाट्टहास-
मिश्रैर्ननर्त जगदन्तनटः कृतान्तः ॥ २७ ॥

श्रुतिः—ततः किमारभन्त परे ।

आन्वीक्षिकी—ततः सर्वे चार्वाकसौत्रान्तिकवैभाषिकवैनाशिकयोगाचारमाध्यमिकप्रभृतयः सुगतागमसेनापतयः 'इतः कीर्तिः, इतो ज्ञानश्रीः, ततो दिङ्नागः' इति समन्तादस्मद्बलं परिवेष्टयांबभूवुः ।

---

शब्दायितो यो दुन्दुभिर्वाद्यभेदस्तेन भिद्यमानं द्विधाभवत् ब्रह्माण्डखण्डयुगं तद्रूपस्य झर्झरस्य वाद्यभेदस्य तालजालैः तालसमूहैः जगदन्तनटः प्रलये नटनशीलः कृतान्तः यमः जृम्भालं जृम्भितं यत्कालस्य ललनायाः महाकालवध्वाः लपनं मुखं तदट्टहासस्य भयङ्करहसितस्य मिश्रैः तत्सदृशैः पूर्वोक्तैस्तालजालैर्ननर्त्त। कोणाघातेन शब्दायमानस्य दुन्दुभेः शब्देन विदीर्णे ब्रह्माण्डे यत्खण्डद्वयमजायत तद्धि झर्झरवाद्योपमं जातं तच्छब्दस्तत्तालजालत्वेनोक्तः, स हि शब्दः जृम्भाविदारितमुखस्य महाकालस्य वध्वा अट्टहासेन तुलितस्तादृशशब्दपूर्वकञ्च तदा यमोऽनृत्यदिति महाभीषणत्वं ध्वनेरुक्तम् । झर्झर' इति 'झांझ'संज्ञया प्रथितो वाद्यभेदः । 'वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः' इत्यमरः ॥ २७ ॥

किमारभन्त परे—किञ्चेष्टाः शत्रवो जाताः ?

चार्वाकेति । एषां परिचयोऽन्यत्रोक्तः । कीर्त्तिः—धर्मकीर्त्तिः । अस्मद्बलम्—अस्माकं सैन्यम् । परिवेष्टयांबभूवुः—परिवृतवन्तः ।

---

ब्रह्माण्डके दोनों खण्डरूप झांझोंको—जो जृम्भा·विदारित कालवधूके मुखके अट्टहासके समान मालूम पड़ते थे—पीट पीटकर—संसारके अवसानकालमें नाचा जानेवाला कृतान्तनृत्य करने लगा ॥ २७ ॥

श्रुति—इसके बाद शत्रुओंने क्या किया ?

आन्वीक्षिकी—इसके बाद चार्वाक, सौत्रान्तिक, वैभाषिक, वैनाशिक, योगाचार, माध्यमिक प्रभृति बौद्धमतके सेनापतिगण, इधर धर्मकीर्त्ति, इधर ज्ञानश्री, उधर दिङ्नाग, इसतरहसे चारों ओर हमारी सेनाको घेरने लगे ।

श्रुतिः—हन्त, दुर्वारबला वैरिणः ।

आन्वीक्षिकी—अथ सेनाकोणादन्तिकमागत्य काणादीसंहिता माम-मन्त्रयत्—'सखि गौतमि, शाम्यतु सुगतागमेन सह वैरम्, परित्यज्यता-मियं श्रौती प्रमितिः, अस्तु भगवत्याः श्रुतेरपत्यकृतिका पक्षतापरामर्शयोरपत्य-

---

सेनाकोणात्—सेनैकदेशतः । अन्तिकम्—समीपम् । काणादीसंहिता—वैशेषिक-विद्या ।

सुगतागमेन—बौद्धदर्शनेन सह । वैरं शाम्यतु—विरोधो निवर्त्तताम् । अपत्य-कृतिका—कृत्रिमापत्यम् । पक्षतापरामर्शयोरपत्यम्—ताभ्यां जन्या । इदमत्र बोध्यम्, आन्वीक्षिकी बौद्धमतविरोधिनी तद्विरोधे कारणम्—बौद्धमते श्रुतेः प्रमितेः ( श्रुति-प्रामाण्यस्य ) हरणम् ( अस्वीकृतिः ) एतदर्थमेव युद्धं प्रवर्त्तते यत्रोभयोः पक्षयोः सैनिकाः सन्नद्धाः । भीता सती वैशेषिकविद्या प्रधानसेनापतित्वं धारयन्तीं ( बौद्ध-मतं विशिष्य खण्डयन्तीं ) तामान्वीक्षिकीमाह—व्यर्थमिदमायोधनम्, निवर्त्ततां बौद्धैः सह वैरं भवत्याः, यदि तैर्हृता प्रमितिस्तदा का क्षतिः, अनुमितिर्नाम पक्षतापरामर्शजन्या कन्या श्रुतेः कृत्रिमापत्यतां प्राप्यताम् इति नाटकपक्षे । तत्त्वार्थस्तु—अनुमानविद्ययैव शब्दस्य प्रामाण्यं न स्वातन्त्र्येण, तदुक्तम्—'शब्दो-पमानयोर्नैव पृथक् प्रामाण्यमिष्यते । अनुमानगतार्थत्वादिति वैशेषिकं मतम् ॥'

---

श्रुति—हाय, शत्रुओंकी सैन्यशक्ति तो अपार थी ।

आन्वीक्षिकी—इसके बाद सेनाके एक भागसे आकर वैशेषिक विद्याने मुझसे कहा—सखि गौतमि, बौद्धमतके साथ हमें विरोध छोड़ देना चाहिये, जाने दो इस श्रुतिकी पुत्री प्रमितिको । न होगा तो श्रुति पक्षता और परामर्श-की पुत्री अनुमितिको गोद ले लेंगी । इसके उत्तरमें मैंने कहा—यह तुम ठीक नहीं कह रही हो, पहली बात यह है, कि श्रुतिको इसकी योग्यता है इसीका निश्चय नहीं है, और वह दूसरेकी सन्तानको गोद लेना चाहती भी नहीं हैं । दूसरी बात है कि यदि हम इससमय प्रमितिकी उपेक्षा कर देते हैं तो हमारे दुश्मनोंका हौसला बढ़ जायगा, और हमारे शत्रु ऐसी चाल चलेंगे जिससे पक्षताकी पुत्री अनुमितिकी उत्पत्ति ही रुक जायेगी, अथवा उत्पन्न होकर भी वह लुप्त हो जायेगी ।

अनुमितिर्नाम' इति। ततो मया मन्त्रितम्—'असमञ्जसमिदमुदाहरसि। प्रथमं योग्यतैवात्र न श्रुतेरवधार्यते। नाकाङ्क्षति परापत्यग्रहणं तादृशो जनः। अपि चैवमस्माभिरुपेक्षिते श्रुतेरपत्यव्यसने जितकाशिभिः परैः परिक्षतप्रसवा पाक्षतेयी दारिकापि न जायेत, जातापि वा विलुप्येत' इति।

श्रुतिः—नूनमल्पप्रमाणतया बिभेति परेभ्यो वत्सा काश्यपी।

---

एवञ्च वैशेषिक्या विद्यया शब्दस्य पृथक्प्रामाण्यमस्वीकृत्य बौद्धैर्हृतायाः प्रमितेः परित्यागं प्रति रुचिः प्रकटीकृता, अनुमितिश्च श्रुतेः कृत्रिमापत्यतां भजतामिति च शब्दस्यानुमानविधया प्रामाण्यं स्वीकृत्य प्रकाशितमिति।

मया—आन्वीक्षिक्या। असमञ्जसम्—अयुक्तम्। उदाहरसि—कथयसि।

योग्यतैवेति। योग्यतायां सत्यामेव श्रुतेरवकाशो नान्यथा, इतरथा ग्रावाणः प्लवन्ते' इत्यपि प्रमाणं स्यात्, एवं च वाक्यार्थगर्भयोग्यताया लिङ्गविशेषस्यानिर्णयान्न तल्लिङ्गकमनुमानम्, अतो नावधार्यते योग्यतेत्युक्तम्। नाकाङ्क्षतीति च पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वरूपाकाङ्क्षा शब्दस्य पृथक्प्रामाण्ये सत्येव घटते, इत्यभिप्रायकम्, अतः श्रुतिः प्रमितिं विहायानुमितिमङ्गीकर्त्तुमशक्तेत्याशयः, अत एवान्वीक्षिक्या काणादयुक्तेरसमञ्जसत्वमुक्तम्।

अपत्यव्यसने—अपत्यरूपायाः प्रमितेः बौद्धैः कृते हरणे। उपेक्षिते—अप्रतिकृते सति। जितकाशिभिः—आत्मानं विजयिनं मन्यमानैः। परिक्षतप्रसवा—बाधितोत्पत्तिः। अयमाशयः—यदि त्वन्मतमनुसृत्यास्माभिः श्रुतेः प्रामाण्यं प्रत्यौदासीन्यमाश्रीयते तस्या अनुमितिं नाम कृत्रिमापत्यं चानुमोद्यते (अर्थात् अनुमानविधया शब्दस्य प्रामाण्यं स्वीक्रियते न स्वतः शब्दप्रामाण्यं मन्यते) तदा ते बौद्धाः शब्दस्यानुमानान्तर्भावेऽनुमानमप्यलौकिकप्रत्यक्षान्तर्भूतं कथयितुं प्रवृत्ताः स्युः। अनुमितिप्रसवमेव प्रतिबध्नीयुर्जातामपि वा तामनुमितिमपहरेयुरिति कथनस्यात्रैव तात्पर्यम्। अतस्त्वदुक्तमसमञ्जसं, युद्धमेवात्र प्राप्तकालमुचितं चेति भावः। अल्पप्रमाणतया—द्विप्रमाणतया लघुकायतया (कायलाघवमपि प्रमाणद्वितयमात्रस्वीकृतिमूलकमेव)।

---

श्रुति—अल्प प्रमाण होनेसे वैशेषिक विद्या शत्रुओंसे डरती है।

आन्वीक्षिकी—ततः कोपकपिलकपोला कापिली प्रमितिमभ्युपपद्यमाना मध्येमार्गमवरुध्य परैः पराभूता न कंचन प्रतिकर्तारं पुरुषमलभत, प्रत्युत विकारमभजत प्रकृतेः।

श्रुतिः—वत्से आङ्गिरसि, त्वया प्रतिपालितः प्राणिति प्रकृतिदुर्बलो विद्यागणः।

---

कोपकपिलकपोला—वैशेषिकी विद्या किमिति तथा भाषते ? किमर्थं शब्दस्य पृथक्प्रामाण्यं नाङ्गीकरोतीति क्रोधरक्तानना। सांख्यविद्या—'दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात्। त्रिविधं प्रमाणमिष्टम्' इति सांख्यकारिकादिशा स्वयंशब्दस्य स्वातन्त्र्येण प्रामाण्यं स्वीकरोत्यत एव च वैशेषिकीं प्रति तत्कोप उपपद्यते। प्रमितिमभ्युपपद्यमाना—बौद्धापहाररूपाया विपद उद्धरन्ती। प्रतिकर्त्तारं पुरुषं नालभत—परैर्मध्येमार्गमवरुध्य पराभूयमाना सांख्यविद्या कमपि त्रातारं नासन्नतीति नाटकपक्षे। तत्त्वे तु—सांख्ये कर्त्ता पुरुषो नाङ्गीक्रियत इति। एवं त्रातुरभावे सा सांख्यविद्या प्रकृतेर्विकारम्—मूलप्रकृतेर्विकृतिं जगत् अभजत इति। तथा चोक्तं सांख्यकारिकायाम्—

'प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्चभूतानि'॥ इति।

आङ्गिरसि—गौतमि, (इदं श्रुतिकृतमान्वीक्षिक्याः संबोधनम्) त्वया प्रतिपालितः—भक्षितः। प्राणिति—जीवति। तथा चोक्तं न्यायभाष्ये—

सेयमान्वीक्षिकी—

'प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आधारः सर्वधर्माणां विद्योद्देशे प्रकीर्त्तिता॥' इति।

---

आन्वीक्षिकी—इसके बाद कोपरक्तमुखी सांख्यविद्या प्रमितिके उद्धारके लिये आगे बढ़ी, परन्तु बीचमें ही शत्रुओंने उसे घेर लिया, कोई पुरुष उसको त्राणके लिये नहीं मिला, वह प्रकृति-विकारसे युक्त हो गई।

श्रुति—वत्से आन्वीक्षिकि, स्वभावतः दुर्बल यह परिवार-विद्याका समुदाय तुम्हारे ही द्वारा रक्षित होनेसे जी रहा है।

आन्वीक्षिकी—भगवति, त्वदुपजीवनधनाः परपरिमर्दनाय प्रगल्भन्ते परिवारविद्याः।

जडवपुषि शुचित्वमादधाति
प्रतिफलितो मयि ते प्रमाणभावः।
दलयति तिमिरं निशासु भानो-
स्तुहिनकरप्रतिबिम्बितः प्रकाशः ॥ २८ ॥

त्वदुपजीवनधनाः—त्वामुपजीवन्त्यः, त्वदाश्रिताः। परपरिमर्दनाय—शत्रुपराभवाय। प्रगल्भन्ते—साहसं बध्नन्ति। (अहमपि परिवारविद्यास्वन्यतमेति ममापि न स्वतः परपराजये क्षमता किन्तु त्वदाश्रिततयैवेति नम्रता व्यञ्जिता। वेदविरुद्धैस्तु तर्कैर्न शक्यते परपराजयः—'वेदशास्त्राविरोधिना। यस्तर्केणानुसंधत्ते' इति स्मृतेः ॥

जडवपुषीति—जडवपुषि जडात्मनि (स्वतःप्रमाणताविधुरे) मयि प्रतिफलितः मुकुर इव प्रतिबिम्बितस्ते श्रुतेः प्रमाणभावः प्रामाण्यम् (प्रमाणविद्यासु) शुचित्वम् प्रमाणभावम् आदधाति उत्पादयति, तत्र निदर्शनमाह—दलयतीति। तुहिनकरे शीतद्युतौ प्रतिबिम्बितः प्रतिफलितः भानोः सूर्यस्य प्रकाशः निशासु रात्रिषु तिमिरं तमो दलयति विनाशयति। चन्द्रो हि जडात्मकः स्वस्मिन्प्रतिफलन्तं सूर्यस्य प्रकाशमासाद्य प्रकाशमानः निशा अपि वितमस्काः करोति तद्वज्जडा स्वतोऽप्रमाणाप्यान्वीक्षिकी श्रुतिप्रामाण्येन स्वस्मिन् प्रतिफलता प्रामाण्यशालिनी भूत्वा अन्याः परिवारविद्याः प्रकाशयति। 'चन्द्रो हि जडात्मकः जलात्मकः सूर्यप्रकाशेनैव प्रकाशत' इत्युक्तं सिद्धान्तशिरोमणौ भास्कराचार्येण—'तरणिकिरणसङ्गादेष पानीयपिण्डो दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति' इति, अत्र सूर्यस्थानीया श्रुतिः, आन्वीक्षिकीस्थानीयश्चन्द्रः परिवारविद्याश्च निशास्थानीया बोध्याः ॥ २८ ॥

आन्वीक्षिकी—भगवति, परिवार-विद्यायें जो शत्रुको परास्त करनेकी धृष्टता करती हैं उसमें तुम्हारा सहारा ही कारण है। जडस्वरूप मुझ आन्वीक्षिकीमें प्रतिबिम्बित होनेवाला तुम्हारा प्रामाण्य ही मुझको भी प्रामाण्य प्रदान करता है। रातमें चन्द्रमा पर पड़ने वाली सूर्यकी किरणें ही अन्धकारका नाश करती हैं ॥ २८ ॥

श्रुतिः—ततः किमासीत् ।

आन्वीक्षिकी—ततः प्रबलतर्कप्रभाकरकरसंपर्ककर्कशा कर्मतन्त्रमन्त्रणमांसला मीमांसा प्रममाथ संभावनाम्, प्रमितिं च परकरादाच्छिद्यात्मसादकरोत्, अधिकरणप्रसाधनैश्च संचस्कार ।

श्रुतिः—साधु । परपुरुषविद्वेषिणी सतीनामग्रणीरेषा दुहिता जैमिनेः ।

आन्वीक्षिकी—संस्कुर्वती प्रमितिमसौ मीमांसा कार्यानुबन्धविधुरानस्याः

---

प्रबलेति ।—प्रबलस्तर्को यस्य स चासौ प्रभाकरः मीमांसकैकदेशी गुरुमतप्रवर्त्तकः सूर्यश्च तस्य करो हस्तः किरणश्च तेन कर्कशाऽन्यानभिभाव्या । कर्मतन्त्राणां कर्मकाण्डानां मन्त्रणे विचारे मांसला बलवती । 'बलवान् मांसलोंऽसलः' इत्यमरः । संभावनाम्—पूर्ववर्णितस्वरूपाम् मिथ्यादृष्टेरात्मसंभवाम् अनुमित्यैव शब्दप्रमितिं गतार्थयन्तीम् अतः प्रमितिं ग्रसितुं व्यात्तमुखीति पूर्वमुक्ताम् । प्रममाथ—प्रतिहतवती । आत्मसात्—स्वाधीनाम् । अधिकरणप्रसाधनैः—इन्द्रियादीनि अधिकृत्य प्रसाधनक्रियाभिः । तत्त्वपक्षे—अधिकरणानि—पञ्चाङ्गन्यायास्तेषां प्रसाधनैः विषयादिनिर्देशपुरस्सरं दर्शनैः । संचस्कार—संस्कारमकरोत् ।

परपुरुषविद्वेषिणी—मीमांसायाः परमात्मानङ्गीकर्तृतयाः परपुरुषविद्वेषः, जारागामिता तु नाटकपक्षे । अत एव सतीत्वम्, नाटके सतीत्वं सत्कर्मपरायणत्वम् ।

कार्यानुबन्धविधुरान्—कार्यसम्बन्धरहितान् । 'कार्ये विधिरिति प्राभाकराः' इति स्मरणात् विध्यर्थकलिङ्लोट्तव्यान्यतमरहितानां सिद्धार्थानां न प्रामाण्यमिति प्रभाकरमतम् । अयमर्थः—'ग्रावाणः प्लवन्ते' 'वनस्पतयः सत्रमासत' 'प्रजापतिरात्मनो वपामुदच्छिनत्' इत्यादिकाः वेदगिरो बाधितार्थप्रतिपादकतया वेदस्य सर्वथा मत्तप्रलपितत्वाशङ्कयाऽप्रामाण्यमाविर्भावयन्ति तत्र कार्यान्विते स्वार्थे पदानां

---

श्रुति—इसके बाद क्या हुआ ?

आन्वीक्षिकी—इसके बाद प्रबल तर्कशाली प्रभाकरके संपर्कसे दृढ़ कर्मकाण्ड-प्रकाशक मीमांसाने संभावनाका खण्डन कर दिया, शत्रुओंसे छीनकर प्रमितिको अपने हाथ में कर लिया और अधिकरणों द्वारा उसका प्रसाधन किया ।

श्रुति—ठीक है । वह मीमांसा सदासे परपुरुषविद्वेषिणी तथा सती है ।



आन्वीक्षिकी—प्रमितिको संस्कृत करती हुई उस मीमांसाने ( विध्यर्थशून्य

प्रतीकानुपच्छेत्तुमारेभे। तामवारयद् बादरायणी विद्या, भयचकितलोचनानि च पुराणानि परिपालयांबभूव।

श्रुतिः—अथ धर्मसंहिताः किमारभन्त।

आन्वीक्षिकी—ताः खलु 'नित्यपुनरुक्तवचनाभिर्युष्माभिः किमिव प्रयोजनम्' इति मीमांसया निर्भर्त्सिताः, 'भवन्ति भवत्योऽपि प्रमाणम्' इति मयाश्वासिता धृतिमलभन्त।

---

शक्तिरिति प्रभाकरमतेन कार्यताबोधकलिङ्गाद्यभावादासां वाक्यार्थबोधजनकतैव नास्ति, केवलं पारायणेऽदृष्टमात्रमासां प्रयोजनमिति। उच्छेत्तुम्—पृथक्कर्तुम् (केवलादृष्टफलकतया स्थापयितुम्) प्रतीकान्—ग्रावाणः प्लवन्ते इत्यादिकानंशान्।

बादरायणी—व्यासप्रोक्ता विद्या ब्रह्मविद्या। सा हि सिद्धार्थानुपनिषद्भागानपि प्रामाण्यं स्वीकुरुते। भयचकितलोचनानि—प्रभाकरमतानुसारेण स्वाप्रामाण्यशङ्कया भीतानि। पुराणानि प्रतिपालयाम्बभूव—उपनिषदां सिद्धार्थानामपि प्रामाण्यं समर्थयन्ती बादरायणी विद्या तुल्यन्यायात् सिद्धार्थानां पुराणानामपि प्रामाण्यं स्थापयित्वा तेषामप्रामाण्यशङ्कोदितं भयमवारयदिति भावः।

नित्यपुनरुक्तवचनाभिः—नित्येन वेदेन पुनरुक्तं वचनं यासां तादृशीभिः, वेदोक्तमेवार्थमभिदधतीभिः। युष्माभिः—स्मृतिभिः। नाटकपक्षे नित्यं पुनरुक्तवचनाभिरिति स्फुट एवार्थः। मया—आन्वीक्षिक्या। स्मृतिभिर्वाक्यार्थे बोधिते तदाश्वासाय उत्सन्नानां वेदभागानामनुमानमिति नैयायिकमतम्, तन्मतानुसारं भवन्ति स्मृतयोऽपि प्रमाणमिति बोधनमेव तदाश्वासनम्।

---

वेदभागोंको अप्रामाणिक कह दिया) प्रमितिके अकार्यक प्रतीकोंको काटना चाहा, बादरायणी विद्याने मीमांसाको वैसा करनेसे रोका, और घबड़ाये हुए पुराणोंकी रक्षा की।

श्रुति—और धर्मसंहिताओंने क्या किया?

आन्वीक्षिकी—मीमांसाने धर्मसंहिताओंको यह कहकर फटकार दिया कि जब तुम लोग नित्य वेदके द्वारा कहे गये अर्थोंको ही कहती हो तो तुम्हारी क्या आवश्यकता है? इसपर मैंने धर्मसंहिताओंको यह कहकर आश्वासन दिया कि तुम्हारी भी प्रामाणिकता है। मेरे आश्वासनसे उन्हें धैर्य प्राप्त हुआ।

श्रुतिः—ततस्ततः ।

आन्वीक्षिकी—अथ पर्यवष्टभ्य माम्, अमी सुगतागमसेनापतयो निरन्तरमखिलदिङ्मुखेभ्यो निरन्तराभिः शस्त्रवृष्टिभिरनवकाशबद्धमण्डला व्यवाकिरन्। ततश्च

अन्योन्यव्यतिघट्टनानलकणाक्रूराः करेभ्यो द्विषां
संहत्यैकपदे पतन्ति परितो याः स्मायुधश्रेणयः ।
बाणैस्तास्त्रसरेणुपुञ्जपदवीमानीय सोऽयं जनो
रक्षामण्डलमात्मनो व्यरचयन्भूमण्डले पांसुभिः ॥२९॥

पर्यवष्टभ्य— परितोऽवरुध्य । अखिलदिङ्मुखेभ्यः— सर्वाभ्यो दिग्भ्यः । निरस्ताभिः— क्षिप्ताभिः । निरवकाशबद्धमण्डलाः—निरन्तरभावेन समन्ततः स्थिताः । व्यवाकिरन् – समन्तादाच्छादितवन्तः ।

अन्योन्येति । अन्योन्यम् परस्परम् व्यवघट्टनेन सङ्घर्षेण ( जनिताः ) अनलकणाः वह्निस्फुलिङ्गाः तैः क्रूराः भयङ्कराः या आयुधश्रेणयः शस्त्रसमूहाः संहत्य मिलित्वा एकपदे युगपत् द्विषां शत्रूणां करेभ्यः परितः समन्तात् सर्वतः पतन्तिस्म, ताः आयुधश्रेणीः सोयं मल्लक्षणो जनः बाणैः स्वक्षिप्तैः शरैः त्रसरेणुपुञ्जपदवीम् त्रुटिपुञ्जस्वरूपताम् आनीय प्रापय्य ( तद्रूपैः ) पांसुभिः धूलीभिः भूमण्डले आत्मनो रक्षामण्डलम् मण्डलाकारं स्वरक्षणं व्यरचयत् कृतवान् । शत्रवोऽग्निकणमुचः परस्परसंहतान् यान् बाणान् सर्वाभ्यो दिग्भ्यः प्राक्षिपँस्तान्बाणानेवाहं खण्डशः कृत्वा धूलिभावमानीय तैरेव समन्ततो विकीर्णैरात्मनो रक्षार्थं धूलीमण्डलं कृतवानिति ॥ २९ ॥

श्रुति—इसके बाद क्या हुआ ?

आन्वीक्षिकी—इसके बाद बौद्धमतके सेनापतियोंने मुझे सभी ओरसे घेरकर निरन्तर बाणवृष्टिके द्वारा मण्डलाकार रूपमें आवृत कर दिया, इसके बाद—

परस्पर टकरानेसे अग्निकणकी सृष्टि करनेवाले जो अस्त्रगण शत्रुओंके हाथोंसे छूटकर मेरे चारों तरफ गिरते थे उन्हें ( चूर्ण करके ) त्रसरेणुका पद प्राप्त कराके उन्हींसे मैंने अपनी रक्षाके लिये धूलिमण्डलकी सृष्टि कर ली ॥ २९ ॥

श्रुतिः—ततस्ततः ।

आन्वीक्षिकी—ततः प्रावर्तत तुमुलमायोधनम् । केऽपि तातगोतमप्रयुक्तसूत्रपाशबद्धाः, केचन वत्सवात्स्यायनभाषणतर्जिताः, केचिदुद्द्योतकरवचोविवरणत्रस्ताः, कतिचन वाचस्पतिना प्रसह्य पराभूताः, परे परितः पलायन्त समरभूमेः उन्मोचिता चाखण्डकलेवरा प्रमितिः । इतः परमादिशतु भवती किमनेन जनेनोपपादनीयमिति ।

श्रुतिः—प्रतिपादय प्रमितिं पुरुषाय ।

आन्वीक्षिकी—बाढं प्रतिपादिता, न पुनरेनां श्रद्दधाति पुरुषः ।

श्रुतिः—( स्वगतम् । ) कथं न श्रद्दधाति । भवतु तावदेवम् । ( प्रकाशम् । ) वत्से गौतमि, न्यायतनयः परामर्शो यथा युज्यते तया पत्नतया तथा

---

गौतमः— न्यायप्रणेता सूत्रकारः । वात्स्यायनो न्यायभाष्यप्रणेता । उद्द्योतकरः न्यायवार्त्तिकरचयिता । वाचस्पतिः— न्यायवार्त्तिकतात्पर्यप्रणेता । अखण्डकलेवरा—अक्षतशरीरा । सर्वात्मना श्रुतिप्रामाण्यं स्थापितमित्यर्थः । प्रतिपादय—समर्पय ।

एनाम्—प्रमितिम् । न श्रद्दधाति—अस्यां विश्वासं न रक्षति । प्रमितावप्रामाण्यसंशयं करोतीत्यर्थः ।

न्यायतनयः—पञ्चावयववाक्यजन्या । कथा प्रस्तूयताम्—कथा तदर्थं सञ्जी-

---

श्रुति—इसके बाद क्या हुआ ?

आन्वीक्षिकी—इसके बाद बड़ा घोर युद्ध हुआ, किसीको तात गौतमने सूत्रोंके पाशसे बांधा, किसीको वात्स्यायनने अपने भाषणसे डराया, किसीको उद्द्योतकरने अपने विवरणसे त्रस्त किया, कुछको वाचस्पतिने परास्त किया। इसतरह सभी युद्धक्षेत्रसे भाग खड़े हुए, वत्सा प्रमिति अक्षत रूपमें मुक्त कर ली गई । अब आप कहें कि मैं आपकी और क्या सेवा करूँ !

श्रुति—प्रमितिको पुरुषके पास पहुँचा दो ।

आन्वीक्षिकी—प्रमितिको पुरुषके पास पहुँचा दिया है, लेकिन पुरुष प्रमितिपर विश्वास नहीं कर रहा है ।

श्रुति—( स्वगत ) क्यों नहीं विश्वास करता है ? अच्छा, इसतरह किया

कथा प्रस्तूयताम् ।

( नेपथ्ये । )

होउ जणाणं हरिसो लहउ पिअं पक्खअं परामरिसो ।
फिट्टउ मणे अमरिसो पुरिसो ओवग्गसंपअं लहउ ॥३०॥

( भवतु जनानां हर्षो लभतां प्रियां पक्षतां परामर्शः ।
अपैतु मनस्यमर्षः पुरुषोऽपवर्गसंपदं लभताम् ॥ )

आन्वीक्षिकी—इदं वादकथायाः पक्षतापरामर्शसंगमप्रतिज्ञावचनमनुवदन्ति व्योमचराणि भूतानि ।

---

क्रियताम्, कथैव हि पक्षतापरामर्शयोर्घटने क्षमेतेति तस्याः प्रवर्तनमादिश्यमानं बोध्यम् ।

[ अत्र श्रुतिव्यापारो बीजम्, आन्वीक्षिकीव्यापार आरम्भः, ताभ्यां प्रथमो मुखसन्धिः । स प्रथमेन प्रमितिपुरुषसङ्गमरूपेण फलेन परिपूर्णः । अथ बिन्दुप्रयत्नाभ्यां प्रतिमुखसन्धिरारभ्यते, तत्र 'अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्' इति लक्षितः श्रुतेरश्रद्धामलक्षालनायानुमितिपुरुषसङ्गमानुकूलो व्यापारः । स हि—न्यायतनयः पक्षतया यथा युज्यते' इत्यादिनोक्तः । प्रयत्नस्तु आन्वीक्षिकीप्रेरितकथाव्यापारः ]

भवत्विति । कथाऽऽन्वीक्षिक्या प्रेरिता पक्षतापरामर्शयोः सङ्गतिसङ्कल्पमुच्चारयति पद्येनानेन । मनस्यमर्षः—अप्रामाण्यसंशयरूपः, प्रमितौ विश्वासो जायतामिति 'अपैतु मनस्यमर्षः' इत्यस्यार्थः । अन्यत्स्पष्टम् ॥ ३० ॥

व्योमचराणि भूतानि—आकाशचारिणः प्राणिनः । अनुवदन्ति—आवर्त्तयन्ति ।

---

जाय । ( प्रकट ) वत्से गौतमि, न्यायपुत्र परामर्शके साथ पक्षताका संयोग हो इस कार्यके लिये कथाको तय्यार कर दो ।

[ नेपथ्यमें ]

लोगोंमें हर्ष बढ़े, परामर्शको पक्षतारूप स्त्री प्राप्त हो, लोगोंके मनसे अमर्ष दूर हों और लोग अपवर्ग प्राप्त करें ॥ ३० ॥

आन्वीक्षिकी—यह—पक्षता और परामर्शके मिलनके संबन्धमें कथा द्वारा की गई प्रतिज्ञाको आकाशचारी प्राणी दुहरा रहे हैं ।

श्रुतिः—बाढम् । अनुमन्यामहे ।

शचीव शक्रं गिरिजेव शंकरं निशेव चन्द्रं कमलेव माधवम् ।
सरस्वतीव त्रिजगत्पितामहं पतिं परामर्शमुपैतु पक्षता ॥३१॥

( इति निष्क्रान्ताः सर्वे । )

इति श्रवणसंपत्तिर्नाम प्रथमोऽङ्कः ।

---

शचीवेति । मालोपमया पक्षतापरामर्शयोः परस्परानुकूलता काम्यमाना बोध्या ॥ ३१ ॥

मैथिलपण्डितश्रीरामचन्द्रमिश्रप्रणीते अमृतोदय'प्रकाशे'
प्रथमाङ्क'प्रकाशः' ।

---

श्रुति—अच्छी बात है । मैं अनुमति देती हूँ ।

जैसे शचीने शक्रको, पार्वतीने शङ्करको, रात्रिने चन्द्रमाको, लक्ष्मीने विष्णुको और सरस्वतीने ब्रह्माको पतिरूपमें प्राप्त किया उसी तरह पक्षता भी परामर्शको पतिरूपमें प्राप्त करे ॥ ३१ ॥

[ सबका प्रस्थान ]

[ श्रवणसम्पत्तिरूप प्रथम अङ्क समाप्त ]

## द्वितीयोऽङ्कः

( ततः प्रविशति कञ्चुकी । )

कञ्चुकी—जराजर्जरितकलेवरस्य किमीदृशस्य जनस्य जीवितेन ।

निर्धौतः पलितेन यद्यपि मुखे कालक्रमात्कालिमा
मोहान्धस्य तथापि मे मसिमसौ लोभः पुनर्लिम्पति ।
आनाभेरपवर्जितेन चिबुकं यष्टौ श्रमान्न्यस्यता
कुब्जेन त्रिपदः पशुः शिशुजनत्रासाय सृष्टो मया ॥१॥

---

कञ्चुकी—अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः । सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥' इति लक्षितः । अयं चान्तःपुररक्षको भवति ।

जराजर्जरितकलेवरस्य—वार्धक्यक्षीणदेहस्य । ईदृशस्य–कर्मानर्हस्य मादृशस्य । जीवितेन–जीवनेन । नास्ति किमपि फलं जीर्णवपुषो मादृशस्य जीवनेन, जीवनस्य कार्यार्थत्वादित्यर्थः ।

निर्धौत इति । यद्यपि कालक्रमात् वयःपरिणामरूपसमयप्रभावात् पलितेन केशादिगतेन धावल्येन कालिमा–श्यामता निर्धौतः निःशेषभावेन क्षालितः, तथापि असौ लोभः विषयस्पृहा मोहान्धस्य मोहग्रस्तस्य मे मम मुखे मसिं कालिमसाधनं लिम्पति ( वृद्धोऽप्यहं लोभगृहीततया तरुणमिवात्मानं दर्शयितुं प्रयस्यामीति वार्धकेन शुक्लीकृतेऽपि केशादौ लोभः पुनर्मसिमिव लेपयित्वा तरुणमिव दिदर्शयिषतीति तात्पर्यम् ) आनाभेः नाभिदेशपर्यन्तम् अपवर्जितेन आकृष्टेन नतवपुषा श्रमाद् वार्धक्यकृतात्खेदात् चिबुकं यष्टौ दण्डे न्यस्यता स्थापयता मया ( कुब्जतां गच्छता दण्डधरेण च सता ) शिशुजनत्रासाय बालकानां हृदि भयं जनयितुं त्रिपदः पादत्रयचारी पशुः सृष्टः रचितः । यष्टिरेकः पादः पादौ च द्वौ

---

[ कञ्चुकी का प्रवेश ]

कञ्चुकी—वार्द्धक्य-शिथिल-शरीर मुझ जैसे आदमीके जीनेसे क्या लाभ ! यद्यपि समयक्रमसे मुखकी कालिमा ( कालापन ) बालोंकी सफेदीसे समाप्त हो

( परिक्रम्य । )

ओः, कथयत क्वेदानीं कुमारः परामर्शः ।

( प्रविश्य । )

चेटी—अज्ज पतिबन्ध, वन्दामि । ( आर्य प्रतिबन्ध, वन्दे । )

कञ्चुकी—भवति साधनसिद्धे, परिपन्थिभिरप्रधृष्या भव । कथय क्वेदानीं कुमारः ।

चेटी—केण कारणेण ढुण्ढिज्जइ कुमारो । ( केन कारणेनान्विष्यते कुमारः । )

कञ्चुकी—भवति, आदिष्टोऽस्मि देवेन न्यायेन—यथा त्वरन्ते

---

स्वीयाविति पादत्रयसञ्चारी भवन्नहं शिशूनां भयङ्करः कोपि त्रिपादः पशुरिव प्रतीये इत्याशयः ॥ १ ॥

प्रतिबन्ध इति कञ्चुकिनाम । 'प्रतिबन्धो व्याप्तिः' इति तु तत्त्वपक्षे । परिपन्थिभिः—शत्रुभिः । अप्रधृष्या—अजेया ।

त्वरन्ते—औत्सुक्यं प्रकटयन्ति । मम—न्यायस्य । अवयवाः—प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि । कुमारस्य परामर्शस्य परिमर्षाय आश्लेषाय । यथा पितुरङ्गानि स्वपुत्राश्लेषाय त्वरन्ते तथा न्यायस्य पितुरङ्गानि प्रतिज्ञादीनि परामर्श-

---

गई है तथापि मोहान्ध होनेसे हमारे चेहरे पर लोभने कालिख पोत दी है । कमरके झुक जानेसे मैं दाढ़ी लाठीपर टेककर चलता हूँ तब ऐसा लगता है मानो ब्रह्माने बच्चोंको डरानेके लिये मुझे त्रिपद पशु बनाया है ॥ १ ॥

[ चलकर ]

अरी यह तो बताओ—इस समय कुमार परामर्श कहाँ हैं ?

[ प्रवेश करके ]

चेटी—आर्य प्रतिबन्ध, प्रणाम करती हूँ ।

कञ्चुकी—साधनसिद्धे, तुम शत्रुओंसे अजेय होओ । यह तो बताओ इस समय कुमार कहाँ हैं ?

चेटी—आप कुमारका अन्वेषण क्यों कर रहे हैं ?

कञ्चुकी—साधनसिद्धे, महाराज न्यायने मुझसे कहा है—'मेरे अवयव

ममावयवाः कुमारपरामर्शपरिमर्षाय । तन्निरूपय साधनसदनभूमिकासु कतमामधितिष्ठतीति ।

चेटी—मए क्खु पढमभूमिआअठविदो विअ भूमिआरोहणे तुमं पडीच्छइ कुमारो। ( मया खलु प्रथमभूमिकास्थापित (?) इव भूमिकारोहणे त्वां प्रतीच्छति कुमारः । )

कञ्चुकी—ननु त्वमिदानीं क प्रस्थितासि ।

चेटी—अज्ज, उक्कण्ठादूमिअस्स कुमारस्स कदे भिसिणीदलाइं मुणालिआओ आहरेउम्। ( आर्य, उत्कण्ठादूनस्य कुमारस्य कृते बिसिनीदलानि मृणालीश्चाहर्तुम् । )

कञ्चुकी—भवति, किमुत्कण्ठाकारणमायुष्मतः कुमारस्य ।

---

स्यालिङ्गनायौत्सुक्यं प्रकाशयन्तीत्यर्थः । साधनसदनभूमिकासु—साधनं हेतुस्तस्य सदनभूमिकास्तिस्रः—१-लिङ्गसाक्षात्कारः, २-व्याप्तिस्मरणम्, ३-तृतीयलिङ्गपरामर्शः इति तासु कतमां भूमिकाम् अधितिष्ठति, कस्यां भूमिकायां वर्त्तते इति प्रश्नाशयः ॥

प्रस्थिता—चलिता ।

उत्कण्ठादूनस्य—औत्सुक्येन सन्ताप्यमानस्य । बिसिनीदलानि—शैत्योपपादकानि कमलपत्राणि । मृणालिकाः-कमलनालानि । आहर्त्तुम्—आनेतुम् । प्रस्थिताऽस्मीति योजनया वाक्यपूर्त्तिरुपपादनीया ।

---

कुमार परामर्शको देखनेके लिये व्यग्र हो रहे हैं, अतः पता लगाओ कि कुमार परामर्श इससमय साधनसदन की किस भूमिका ( महल ) पर हैं ?

चेटी—मैंने कुमारको प्रथम भूमिका ( महलपर ) पहुँचा दिया है वह आगेकी भूमिकापर चढ़नेके लिये तुम्हारी प्रतीक्षामें हैं ।

कञ्चुकी—तुम इस समय किधर चली हो ?

चेटी—आर्य, उत्कण्ठासे खिन्न कुमारके लिये कमलके पत्ते तथा मृणालदण्ड लाने जा रही हूँ ।

कञ्चुकी—साधनसिद्धे, आयुष्मान् कुमारकी उत्कण्ठाका क्या कारण हो नयन...

चेटी—या किर पक्खदा णाम दिव्वदारिआ कुमारस्स पुरदो कहाहिं पत्थुआ आसि, सा एव्व अस्स उक्कण्ठाणिबन्धणम्। (या किल पक्षता नाम दिव्यदारिका कुमारस्य पुरतः कथाभिः प्रस्तुतासीत्, सैवास्योत्कण्ठानिबन्धनम्।)

कञ्चुकी—परामर्शपरिग्रहाय बलवदुत्कण्ठमाना पक्षतापि पक्षद्वारेण प्रविश्य साधनसदनस्य तृतीयां भूमिकामधितिष्ठतीति मम प्रथमा कथा कथयति स्म।

---

दिव्यदारिका—अलौकिकसुन्दरी कन्या। कथाभिः—वादजल्पवितण्डानामभिः।

अथवा—पञ्चावयववाक्यैरिति कथाभिरित्यस्यार्थः, अत्र पक्षे तिसृणामपि कथानामेष्वेव पञ्चावयववाक्येषु समन्वितत्वं बोध्यम्। प्रस्तुता—कथामुखेन वर्णिता पक्षतानामकदिव्यदारिकायाः प्रस्तावः कथाभिः कृत इत्यत्र नाटकीयोऽर्थः स्फुट एव, तत्त्वार्थस्तु—विरुद्धार्थकवाक्यद्वयोच्चारणमेव विप्रतिपत्तिः, यथा शब्दोऽनित्यः कार्यत्वाद् घटवत्, नित्यः शब्दः श्रावणत्वात् शब्दत्ववत्, इति वाक्यद्वयश्रवणेन साध्यसन्देहरूपा पक्षता जायते, शब्दोऽनित्यो नित्यो वा इति। एवं साधारणधर्मज्ञानादसाधारणधर्मज्ञानाच्च संशय उत्पद्यते। तदेवं कथा विप्रतिपत्तिमुखेन पक्षतामुपपादयति, तदेव कथाकृतं पक्षताया उपपादनमत्र पक्षतायाः प्रस्तावो बोध्यः। इति।

परामर्शपरिग्रहाय—परामर्शसङ्गमाय। बलवदुत्कण्ठमाना—अत्युत्कण्ठिता। पक्षद्वारेण अमुख्यमार्गेण। सन्दिग्धसाध्यवान्पक्ष इति लक्षितेन पक्षरूपेण पथा च।

प्रथमा कथा—वादजल्पवितण्डासु कथास्वाद्या वादकथा। 'तत्त्वबुभुत्सोः कथावादः' इति हि तल्लक्षणम्।

तृतीयां भूमिकाम्—तृतीयलिङ्गपरामर्शम्। परस्परनिर्भरानुरागे—अन्योन्य-

---

चेटी—कथाओंने कुमारके आगे पक्षता नामकी जिस दिव्य कन्याका प्रस्ताव किया था, वही कुमारकी उत्कण्ठाका कारण बन रही है।

कञ्चुकी—परामर्शसे मिलनेके लिये अत्यन्त उत्कण्ठित पक्षता बगलके मार्गसे साधनसदनकी तीसरी भूमिका (महल) पर पहुँच गई है, यह बात पहली कथा मुझसे कह रही थी।

चेटी—अज्ज, एरिसे परोप्परणिब्भराणुराए केरिसो पक्खदापरामरिसाणं समागमविलम्बो। (आर्य, ईदृशे परस्परनिर्भरानुरागे कीदृशः पक्षतापरामर्शयोः समागमविलम्बः।)

कञ्चुकी—भवति, साधनसदनस्य तृतीयभूमिकामारोहतः परामर्शस्य करावलम्बाय त्वमहं च मिलितौ प्रभवावः। न च परामर्शसविधे तव मम च मेलकं सहन्ते साधनाभासाः। पश्य। मदभिमुखमभिधावत्युपाधिपुरःसरः सव्यभिचारविरुद्धगणः। हन्तुमीहन्ते त्वाममूरसिद्धयः। परामर्शमेष कुण्ठयितुमुत्कण्ठते प्रकरणसमः। सिद्धिरेषा तिरोधित्सति पक्षताम्। पक्षतागर्भबाधनाय बाधगणो निर्भरमवतिष्ठते।

चेटी—ता अम्हे अमिलिदा ज्जेव साहेम भत्तुणो कज्जम्। किं क्खु

---

गाढप्रेमणि। समागमविलम्बः—मिलने विलम्बः। त्वम्—अहञ्च—त्वम् चेटी, अहं कञ्चुकी इति नाटके, तत्त्वे तु चेटी साधनसिद्धिः कञ्चुकीप्रतिबन्धः (व्याप्तिः)। तृतीयलिङ्गपरामर्शे व्याप्तिविशिष्टे पक्षधर्मता भासते इत्यभिप्रायेणेयमुक्तिः। मेलकम्—मिलनसाधनम् किमपि। साधनाभासाः—सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिता नाम पञ्च हेत्वाभासाः।

असिद्धयः—आश्रयासिद्धि, व्याप्यत्वासिद्धि-स्वरूपासिद्धिनामानस्तिस्रोऽसिद्धयः।

---

चेटी—आर्य, ईदृश अन्योन्यानुरागके रहते हुए पक्षता तथा परामर्शके मिलनमें विलम्ब क्या है?

कञ्चुकी—साधनसदनकी तृतीय भूमिकापर आरोहण करनेवाले कुमारको करावलम्बन देनेमें हम और तुम सम्मिलित रूपमें ही समर्थ हो सकते हैं। यह हेत्वाभास परामर्श के आगे हमारे तथा तुम्हारे मिलनके ही प्रतिकूल हो रहे हैं। देखो—यह उपाधियोंको साथ करके सव्यभिचार तथा विरुद्ध मेरी ओर दौड़ता है। असिद्धियाँ तुम्हें मारनेकी चेष्टा करती हैं। प्रकरणसम परामर्शको कुण्ठित कर देना चाहता है। सिद्धि पक्षताको गुम कर देना चाहती है। बाधगण पक्षताके गर्भको ही रोकनेपर तुल जाते हैं।

चेटी—यदि ऐसी स्थिति है तो हम दोनों बिना मिले ही स्वामीका कार्य सम्पादित करें, हमारे मिलनेका क्या प्रयोजन है?

मिलिदेहिं अम्हेहिं। ( ततो वयममिलिता एव साधयामो भर्तुः कार्यम्। किं खलु मिलिताभ्यामावाभ्याम्। )

कञ्चुकी—ननु मीमांसया मन्त्र्यमाणोऽप्यर्थः प्रतिषिद्धोऽयमान्वीक्षिक्या भगवत्या। संघटितपरिवारार्पितभरा हि प्रभवो लघुना शरीरेण प्रभवन्ति कृत्येषु, न तु विघटमानपरिजनदुर्गृहीतभारगौरवग्रस्तद्विधाकृतात्मान इति।

चेटी—जत्थ साहणग्गहुद्देसे तुमं वट्टसि, तत्थ णत्थि मे ओआसो त्ति दुल्लहो तुम्हाण मेलओ। ( यत्र साधनगृहोद्देशे त्वं वर्तसे, तत्र नास्ति मेऽवकाश

---

मन्त्र्यमाणः—कथ्यमानः। अयमर्थः—आवयोः पृथक्कार्यकरणम्। आन्वीक्षिक्या—न्यायविद्यया। "अन्यत्र हेतौ पक्षधर्मता, अन्यत्र च व्याप्तेर्ज्ञानमनुमितिहेतुः, ज्ञानद्वयसाधारणी च परामर्शस्य कारणतेति" मीमांसकानां मतेन न्यायमतस्य विरोधोऽत्र मतभेदो मीमांसाऽऽन्वीक्षिक्योर्मतभेदः। इदमत्र बोध्यम्—यत्र पर्वतो धूमवानिति प्रत्यक्षं ततो धूमो वह्निव्याप्य इति व्याप्तिस्मरणं भवति, तत्र ज्ञानद्वयादेवानुमितिदर्शनाद् व्याप्तिविशिष्टवैशिष्ट्यावगाहि ज्ञानं न सर्वत्र कारणं किन्तु व्याप्यतावच्छेदकप्रकारकज्ञानत्वेनैव कारणत्वम्, आवश्यकत्वात्, विशिष्टवैशिष्ट्यावगाहिज्ञानकल्पने गौरवाच्च इति मीमांसकाः। नैयायिकास्तु—तद्विरुन्धानाः—व्याप्यतावच्छेदकाज्ञानेऽपि वह्निव्याप्यवानिति ज्ञानादनुमित्युत्पत्तेर्लाघवाच्च व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेनैव कारणत्वमाहुः। लाघवमेवात्र विरोधे कारणं तत्सूचयति—सङ्घटितेत्यादिना। विशिष्टपरामर्शस्य कारणत्वे शरीरलाघवम्, इतरथा ज्ञानद्वयस्य कारणत्वे गौरवमिति सूचितम्॥

अवकाशः—प्रवेशावसरः।

---

कञ्चुकी—मीमांसाने ऐसी बात कही थी, परन्तु भगवती आन्वीक्षिकीने इसका विरोध किया। सम्मिलित परिवार पर भार डालकर प्रभु लोग हल्के शरीरसे कार्यमें समर्थ होते हैं; परिवार विघटित रहे, वह ठीकसे भार नहीं सँभाले, भारके गौरवसे ग्रस्त होकर अपनेको द्विधा समझते हुए प्रभु लोग कार्यमें समर्थ नहीं होते।

चेटी—जिस साधनगृहमें तुम हो, वहाँ मेरे लिये स्थान नहीं है, फिर तुम्हारे साथ हमको मिलानेवाला दुर्लभ ही है।

इति दुर्लभो युष्माकं मेलकः । )

कञ्चुकी—घटयिष्यत्यावामेकत्र प्रदेशे सामान्यलक्षणा नाम दूरदर्शिनी । सर्वथा स्वस्ति नः करिष्यन्त्यान्वीक्षिकीप्रेरितास्तर्काः । इत्येहि । साधयावः ।

( इति निष्क्रान्तौ । )

इति मिश्रविष्कम्भकः ।

---

सामान्यलक्षणा—इदानीं चन्दनं घ्रातवतो दिनान्तरे चन्दने नीयमाने सुरभि चन्दनं नयतीति बुद्धौ प्राग् गृहीतं सौरभं विषयीकारयन्ती तन्नामिका दूरदर्शिनी—महानसे पूर्वं गृहीतस्य वह्निसहचरितस्य धूमस्य पर्वते दर्शने धूमे वह्निव्याप्यतां स्मारयन्त्याः सामान्यलक्षणाया दूरदर्शिनीत्वमुन्नीयोक्तम् ।

मिश्रविष्कम्भकः—अङ्कशेषकथांशानां भूतानां भाविनामपि । सङ्क्षेपेण समस्तानां विष्कम्भः सूचनात्मकः ॥ विरसोऽनुचितस्तत्र सूच्यः स्याद्वस्तुविस्तरः । शुद्धो मिश्रस्तु स द्वेधा मध्यपात्रप्रयोजितः ॥ शुद्धो भवति, मिश्रस्तु मध्यनीचप्रयोजितः । प्रधानादपरं मध्यं, नायकादेरुदात्तवाक् ॥ नीचं स्यादनुदात्तोक्तेर्विना परिजनादिकम् । इति मिश्रविष्कम्भकस्य परिचयः । उदात्तोक्तिः—संस्कृतभाषा । अनुदात्तोक्तिः—प्राकृतभाषा । तदयं विष्कम्भकः—व्याप्तिपक्षधर्मतयोरैकाधिकरण्यग्रहे सत्यपि पक्षता संभवति, सामान्यलक्षणया सर्वोपसंहारेण व्याप्तिग्रहेऽपि पक्षे साध्यसम्बन्धाग्रहसंभवादिति तत्त्वपक्षः सूचितः ॥

---

कञ्चुकी—सामान्यलक्षणा बड़ी दूरदर्शिनी है, वह तुमको और हमको एक जगह मिला देगी । आन्वीक्षिकी द्वारा प्रेरित तर्कगण सभी प्रकारसे हमारा कल्याण करेंगे । आओ, हम चलें ।

[ दोनोंका प्रस्थान ]

( मिश्रविष्कम्भक समाप्त )

( ततः प्रविशति कथा पक्षता च । )

कथा—अयि, कमपि तवान्तरं प्रकारमुपलक्षयामि ।

बाष्पायितस्तिमितलोचनमायतैक-
भ्रूदाम चिन्तयसि किंचन काञ्चनाङ्गि ।
स्वेदोदकार्द्रवपुषस्तव रोमहर्षः
शंसत्यसावविरताङ्कुरितान्विकारान् ॥ २ ॥

---

ततः—कथाव्यापारानन्तरम् । ( अत्र कथाव्यापारेणोत्पन्ने तृतीयलिङ्गपरामर्शे पक्षता घटते इति तत्त्वार्थः सूचितः ) ।

आन्तरम्—मानसिकम् । प्रकारम्—भेदम् । ( भिन्नां मनोदशाम् ) उपलक्षयामि तर्कयामि ।

बाष्पायितेति—हे काञ्चनाङ्गि सुवर्णवर्णसर्वशरीरावयवे, बाष्पायिते अश्रुपूर्णे स्तिमिते निश्चले च लोचने यत्र तादृशमिति क्रियाविशेषणम्, आयतं दीर्घतां गतम् एकं भ्रूदाम एका भ्रूलता यत्र तथा चेत्यपरं क्रियाविशेषणम्, तदित्थं त्वं कञ्चन पुरुषविशेषं चिन्तयसि भावयसि । स्वेदोदकार्द्रवपुषः—सात्त्विकभावात्मकघर्मजलप्लुतशरीरायास्तव रोमहर्षः सततमुद्यन् रोमाञ्चः अविरताङ्कुरितान् निरन्तरं जायमानान् विकारान् मनोभावान् शंसति आवेदयति । अश्रुपूर्णाभ्यां नयनाभ्यां रोमाञ्चितेन वपुषा च तव हृदये किमपि प्रियं पुमांसमुद्दिश्य जायमाना भावप्रेरिता चिन्तना व्यक्तीभवतीत्याशयः ॥ २ ॥

---

( कथाके साथ पक्षताका प्रवेश )

कथा—तुम्हारा लक्षण कुछ दूसरी तरहका देख रही हूँ । हे सुवर्णवर्णे, अश्रुपूर्ण नयन निश्चल हो रहे हैं, एक भ्रूलता कुछ विस्तृत मालूम पड़ रही है, ऐसा लगता है जैसे तुम कुछ चिन्ता कर रही हो । पसीनेसे तर इस तुम्हारे शरीरमें उत्पन्न होता हुआ यह रोमाञ्च अविरत उत्पन्न होनेवाले विकारोंकी सूचना दे रहे हैं ॥ २ ॥

पक्षता—भअवइ, तुह पुरओ च्चिअ तह तेण विप्पलम्भएण जणेण अविणअं पाविआ वञ्चिआ अ। किं भणदु मन्दभाइणी। असेसदो णादवुत्तन्ता वि किं पुच्छसि। (भगवति, तव पुरत एव तथा तेन विप्रलम्भकेन जनेनाविनयं प्रापिता वञ्चिता च। किं भणतु मन्दभागिनी। अशेषतो ज्ञातवृत्तान्तापि किं पृच्छसि।)

कथा—अयि सरले, स्तोकमपि न स्मरामि केनाविनीतेन कथं वञ्चितासि।

पक्षता—अलाहि भअवइ, ण तुए मन्तिस्सम्। तइआ क्खु तं अविणअव्ववसाइणं जणं बलामोडिअ वम्महव्ववहारेसु व्वावारेसि। एण्हिं भणसि ण संभवामि को सो जणो त्ति। (अलाहि भगवति, न त्वया मन्त्रयिष्ये। तदा खलु तमविनयव्यवसायिनं जनं बलात्कृत्य मन्मथव्यवहारेषु व्यापारयसि। इदानीं भणसि न संभवामि कः स जन इति।)

---

विप्रलम्भकेन—वञ्चकेन। अविनयम्—हृदये सकामताकृतं चाञ्चल्यम्। अशेषतो ज्ञातवृत्तान्ता—सकलवृत्तज्ञा।

स्तोकम्—अल्पम्। अविनीतेन—दुर्व्यवहारिणा।

अलाहि—'अपसर' इत्यर्थे प्राकृतो निपातः। मन्त्रयिष्ये—वार्तां करिष्ये।

बलात्कृत्य—बलात्तथा कर्तुं प्रवर्त्य। मन्मथव्यवहारेषु-कामव्यापारेषु।

व्यापारयसि—प्रवर्त्तितवत्यसि।

---

पक्षता—भगवति, तुम्हारे सामने ही उस अविनीत जनने मेरे हृदयमें अविनयकी सृष्टि की, पीछे उसने ही धोखा दिया।
मैं अभागी क्या बताऊं? तुम सारी बातें जानती हो, फिर पूछती क्या हो?

कथा—अरी भोली, मुझे तो कुछ भी याद नहीं है किसने तुम्हें अविनीत बनाया और धोखा दिया।

पक्षता—क्या कहती हो भगवती? उस समय तो तुम उस अविनीत पुरुषको काम-व्यापारके लिए प्रेरित कर रही थी, और अब कहती हो कि "वह कौन था?" "मैं नहीं स्मरण कर रही हूँ।" मैं तुमसे नहीं बोलती।

कथा—अयि, शपामि यदि कोऽपि मया दुर्विनयं व्यापारितः। नूनमसि संकल्पेन स्वप्नेन वा कमपि वृत्तान्तव्यतिकरमनुभाविता।

पक्षता—( चिरमनुध्याय। ) ता होज्ज। एसो सविणए विणअहरो वुत्तन्तो। ( तद्भवेत्। एष स्वप्ने विनयहरो वृत्तान्तः। )

कथा—कथय वत्से, कीदृशः।

पक्षता—अज्ज सिविणन्तरे प्पमअवणणलिणीकूललआहरप्पाब्भारे तुह पासे किंपि मन्तअन्तो एसो जणो तुए दिण्णसण्णेण णिहुअमेन्तेण केणवि तक्कालमणहरेण जणेण बलामोडिअ वित्थरन्तेहिं बाहूहिं गहिओ परिच्चन्तो अ। ( अद्य स्वप्नान्तरे प्रमदवननलिनीकूललतागृहप्राग्भारे तव पार्श्वे किमपि मन्त्रयमाण एष जनस्त्वया दत्तसंज्ञेन निभृतमात्रेण केनापि तत्कालमनोहरेण जनेन बलात्कृत्य विस्तरद्भ्यां बाहुभ्यां गृहीतः परित्यक्तश्च। )

---

'अयि शपे' इत्यादेर्गद्यस्यायमर्थः—अहं शपथपूर्वकं कथयामि न मया कोपि पुरुषः त्वया सह मन्मथव्यापारान्कर्त्तुं प्रेरितः इति।

सङ्कल्पेन—मनोभावेन। वृत्तान्तव्यतिकरम्—तादृशवृत्तसंबन्धम्।

तद् भवेत्—इदं सम्भवति—यन्मया स्वप्ने सङ्कल्पे वा तादृशः कोऽपि दुर्विनयव्यवहारी पुरुषो दृष्टः स्यादित्यर्थः।

प्रमदवननलिनीकूललतागृहप्राग्भारे—उद्यानसरोवरतीरवर्त्तिकुञ्जपुरोदेशे। एष

---

कथा—मैं शपथपूर्वक कहती हूँ, मैंने किसीको अविनयके लिये नहीं प्रेरित किया। निश्चय ही तुमने स्वप्न या संकल्पमें इन सारी बातोंका अनुभव किया है।

पक्षता—( बहुत देर तक सोचकर ) यह हो सकता है कि मैंने स्वप्नमें इस अविनयवाली घटना का अनुभव किया हो।

कथा—वत्से, यह तो बताओ कि क्या बात है ?

पक्षता—आज स्वप्नमें मैं तुम्हारे अन्तःपुरकी पुष्करिणीके तटपर वर्तमान लतागृहके सामने खड़ी थी, तुमने इशारे से कहा, वह व्यक्ति धीरेधीरे आया, उस समय वह बड़ा सुन्दर लग रहा था, उसने दोनों हाथ फैलाकर मुझे पकड़कर छोड़ दिया।

कथा—नूनमनेन मया बहुशः प्रस्तुतेन न्यायतनयेनान्ववायविशुद्धेन परामर्शेन स्वप्ने संगतासि । स्थाने युवयोरनुरागः ।

पक्षता—भअवइ, विशमाइ दशाइ वट्टामि ।

जइ ठाइ देइ विअणं जइ टुट्टइ झत्ति कड्ढए जीअम् ।
सहविसमगाढगेण्ठी कण्ठे वडिओ पणअपासो ॥ ३ ॥

( भगवति, विषमायां दशायां वर्ते ।
यदि तिष्ठति ददाति वेदनां यदि त्रुट्यति झटिति कर्षति जीवम् ।
समविषमगाढग्रन्थिः कण्ठे पतितः प्रणयपाशः ॥ )

---

जनः—अहम् । दत्तसंज्ञेन—इङ्गितप्रेरितेन । निभृतमागतेन—प्रच्छन्नरूपेण समीपमागतवता । तत्कालमनोहरेण—दर्शनमात्रेण हृदयं हरता । विस्तरद्भ्याम्—प्रसारिताभ्याम् । गृहीतः—आलिङ्गितः ॥

मया—कथया । बहुशः प्रस्तुतेन—अनेकधा कृतचर्चेन न्यायतनयेन—न्यायजन्येन । अन्ववायविशुद्धेन—जन्मप्रभृति निर्दोषेण सत्कुलप्रसूतेन च । युवयोः—तव तस्य च ( पक्षतायाः परामर्शस्य च ) स्थाने—युक्तः ( तुल्यगुणतया युज्यते युवयोरनुराग इत्यर्थः ) । विषमायाम्—कठिनायाम् ।

यदि तिष्ठतीति—यद्ययं प्रणयपाशः प्रीतिरज्जुबन्धः तिष्ठति तदा वेदनां व्यथां करोति जनयति, अथ त्रुट्यति नश्यति तदा जीवं कर्षति प्राणानपहरति । एतादृशोऽयं प्रणयपाशः समविषमगाढग्रन्थिः समः एकरूपवर्त्ती विषमः कदाचिद् वर्द्धितः कदाचिद् ह्रसितश्च गाढः ग्रन्थिर्बन्धनं यस्य तादृशः कण्ठे पतितः, अतोऽहमतीव विषमायां दशायां वर्त्ते इत्याशयः ॥ ३ ॥

---

कथा—जिसके विषयमें मैं अनेक वार कहचुकी हूँ, वही है यह शुद्धवंशोत्पन्न न्यायपुत्र परामर्श, जिसके साथ तुम सपनेमें मिलचुकी हो । तुम दोनोंका परस्पर प्रेम उचित है ।

पक्षता—भगवति, मैं बड़ी कठिन स्थितिसे गुजर रही हूँ । सम तथा विषम ग्रन्थिसे युक्त यह प्रणयका पाश गलेमें लटक गया है, वह यदि "वह" है तो कष्ट देता है, और यदि टूटता है तो तुरन्त प्राण लेता है ॥ ३ ॥

कथा—चिरं धारय जीवितम् । अनुभविष्यसि प्रियसमागमम् ।

पक्षता—( संस्कृतमाश्रित्य । ) भगवति, सुचिरविरहबाधादुर्दिने प्रियसंगमसुखाऽचिरद्युतयोऽपि न रोचन्ते । पश्य

ज्वलति सुलभं चित्रा चन्द्रातपे शलभायितं
दहति सुभगो देहः प्रौढे पुरोपवनानिले ।
किसलयशिलातल्पे शक्यं विपोथयितुं वपु-
र्दयितविरहव्याधेर्बाधां चिरं सहते जनः ॥ ४ ॥

---

धारय जीवितम्—चिरं जीव ।

सुचिरविरहबाधादुर्दिने—चिरकालिकवियोगरूपे मेघाच्छन्ने दिवसे । प्रियसंगमसुखाशाऽचिरद्युतयः—प्रियमिलनसंभावनारूपा विद्युतः । ( किञ्चित्कालस्थायिनि मेघाडम्बरे एव यथा विद्युतः शोभां पुष्यन्ति न तथा चिरानुवर्त्तिनि, तद्वद् अल्पकालिके वियोग एवाशाः रोचन्ते न चिरकालिके तस्मिन्निति भावः ) ।

ज्वलतीति—चित्राचन्द्रातपे चित्रानक्षत्रगतविधुदीधितौ ( चित्रानक्षत्रस्य साधारणतया शरदि निपातात् शरच्चन्द्रकान्तावित्यर्थः फलति ) ( केचित्तु चित्राचन्द्रातपे इत्यस्य चैत्रमासिकचन्द्ररुचौ इति इत्यर्थं वदन्ति, तदन्ये च चैत्रसूर्यरश्मौ इति अर्थमाहुस्तदुभयं न विचारसहम् ) शलभायितम् शलभवदाचरितं सुलभम् सरलम् ( अतीवतरां दाहके शारदशशधरातपे निपत्य वह्नौ शलभवत् प्राणत्यागोऽतिसरलक्रिय इत्याशयः ) पुरोपवनानिले उद्यानागतवायौ प्रौढे प्रवृद्धे दहति दाहकतां गते च सति तत्र देहः सुहवः सुखेन होतुं शक्यः । ( उद्यानवायौ दाहके वर्त्तमाने तत्र कायो होतुं शक्य इत्यर्थः ) किसलयशिलातल्पे किसलयै-

---

कथा—बहुत दिनों तक जीती रहो, तुमको अवश्य प्रियसमागम प्राप्त होगा ।

पक्षता—( संस्कृत का आश्रयण करके ) भगवति, चिरकालिकवियोग रूप मेघाच्छन्न दिनमें प्रियमिलनकी आशारूप बिजलियाँ भी भली नहीं लगती हैं । देखिये—

चित्रा नक्षत्रके चन्द्रातपमें शलभकी तरह प्राणविसर्जन सरल है, उपवनकी झुलसानेवाली इस वायुरूप अग्निमें शरीरका होम कर देना भी साध्य है,

कथा—ननु चिरकालिकोऽपि प्रियसंगमश्चिरमपत्योत्पत्तिसुखेन परमाभ्युदयाय कल्पते।

( ततः प्रविशति परामर्शो विदूषकश्च )

विदूषकः—एसा सा साहणप्पासाअस्स तइआ भूमिआ। णं आरोहउ पिअवअस्सो। ( एषा सा साधनप्रासादस्य तृतीया भूमिका। नन्वाहरोहतु प्रिय वयस्यः। )

परामर्शः—वयस्य, रमणीयतमोऽयमुद्देशः। इह हि

**ऐक्यं गतासु नभसा स्फटिकाश्मखण्ड-**
**सोपानपङ्क्तिषु विलोचनवञ्चिकासु।**

---

श्छन्ना शिला किसलयशिला तस्याः तल्पे शयनीये वपुः शरीरं विपोथयितुं चूर्णयितुं शक्यम्। ( एवं विरहव्यथाशान्तेर्बहुषूपायेषु सत्सु ) जनः लोकः वृथा व्यर्थमेव दयितविरहव्याधेर्बाधां प्रियवियोगकष्टं सहते। वियोगे प्राणत्यागस्य सुखसाध्यतया व्यर्थं कष्टसहनमिति भावः ॥ ४ ॥

चिरकालिकः—सुबहुकालोत्पन्नः। अपत्योत्पत्तिसुखेन—अनुमितिरूपकन्याजन्मजन्येनानन्देन। परमाभ्युदयाय—महते श्रेयसे। कल्पते—जायते।

रमणीयतमः—नितान्तरम्यः। उद्देशः—स्थानम् ( तथा च स्थानरूपार्थे उद्देशशब्दप्रयोगः—'उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी' साहित्यदर्पणे।

ऐक्यमिति—नभसा आकाशेन सह ऐक्यं गतासु अभिन्नतां गतवतीषु

---

पल्लवकी इस शिलोपम शय्यापर गिरकर शरीरको चूर्णकर देना भी संभव है, फिर वियोगीजन व्यर्थ ही वियोगव्यथाको सहते रहते हैं ॥ ४ ॥

कथा—चिरकाल पर होने वाला भी प्रियमिलन सन्तानोत्पत्तिके द्वारा सुदीर्घकालके लिये सुखप्रद होनेसे कल्याणकर होता है।

[ परामर्श तथा विदूषकका प्रवेश ]

विदूषक—यही है वह साधनसदन की तृतीय भूमिका, आप इसपर आरोहण करें।

परामर्श—वयस्य, यह स्थानतो बहुत सुन्दर है। यहाँ पर—

६. स्फटिक मणिके टुकड़ोंसे बनी हुई सीढ़ियोंकी परम्परायें स्वच्छताके कारण

व्योम्नि व्रजाम्यहमधोमुखलम्बमान-
च्छायामनुष्यचरणेषु पदानि दत्त्वा ॥ ५ ॥

अपि च ।

अग्रे चलत्यभिमुखं सहचारिपार्श्वे
पश्चात्पराङ्मुखमधश्च विलम्बमानम् ।
एकस्य मे मणिमयीषु निशान्तसौध-
सोपानभित्तिषु वपुर्बहुतामुपैति ॥ ६ ॥

---

(आकाशे मिलितासु ) स्फटिकाश्मखण्डसोपानपङ्क्तिषु स्फटिकमणीनां खण्डैः कृतासु आरोहणपरम्परासु ( आकाशसाम्यात्पृथगदृश्यमानतया ) विलोचनवञ्चिकासु नेत्र-प्रतारणपरायणासु सतीषु अहं अधोमुखलम्बमानाः ये छायामनुष्याः मणिमयकुट्टिमप्रतिफलिता ममैव मनुष्याकृतयश्छायाः तेषां चरणेषु पदानि दत्त्वा व्योम्नि आकाशे चरामि । यथाऽन्योऽपि अज्ञायमाने वर्त्मनि पूर्वसञ्चारिजनपदसञ्चरणचिह्नेषु चरणौ विन्यस्यन् गच्छति तथैवाहमिह स्फटिकमणिनिर्मितासु स्वच्छतयाऽऽकाशा-त्पृथगप्रतीयमानासु सोपानपरम्परासु लोचनं वञ्चयितुं प्रवर्त्तमानासु अधोमुखीभूय प्रतिफलन्तीनां ( सोपानानां बहुत्वेन ) भूयसीनां स्वच्छायानां चरणेषु चरणमर्पयन्सञ्चरामीत्यर्थः । सोपानानां व्योमाभेदे सोपानसञ्चारोऽपि व्योमसञ्चार एवेति भावः ॥ ५ ॥

अग्रे चलतीति । मणिमयीषु स्फटिकमणिनिर्मितासु निशान्तसौधसोपान-

---

आकाशमें मिलगई हैं जो नयनोंको धोखा दे रही हैं, ( उनपर पैर रखते समय मुझे ऐसा लगता है कि ) नीचे की ओर मुखकर लटकते हुए छाया-पुरुषोंके चरणचिह्नों पर पैर रखता हुआ मैं आकाशमें चल रहा हूँ ॥ ५ ॥

और—मैं अकेला हूँ, अन्तःपुरकी इन मणिमय सोपान-परम्पराओं पर चल रहा हूँ, सोपान-परम्परा पर प्रतिबिम्बित होनेके कारण बहुरूप होकर मेरा एक रूप आगे चलरहा है एक साथ चल रहा है, एक बगल में चल रहा है, एक पीछे है, एक पीठ की ओर है; और एक अधोमुख है, ऐसा प्रतीत हो रहा है कि मेरे बहुतसे शरीर हो गये हों ॥ ६ ॥

पक्षता—भअवइ, संवदइ सिविणए सुदस्स सद्दस्स सरसंयोओ। ता जाणे सो व्विअ भअवइ, पत्थुओ जणो इमं देसमनुसरइ। ता अम्हे कुड्डन्तरिआ ठामो। ( भगवति, संवदति स्वप्ने श्रुतस्य शब्दस्य स्वरसंयोगः। तज्जाने स एव भगवति, प्रस्तुतो जन इमं देशमनुसरति। तदावां कुड्यान्तरिते तिष्ठावः।

( इति तथा कुरुतः। )

विदूषकः—णं आसणपरिग्गहं काउण पत्थुअकहासेसं वण्णेदु वअस्सो। ( नन्वासनपरिग्रहं कृत्वा प्रस्तुतकथाशेषं वर्णयतु वयस्यः।

( इत्युभौ तथा कुरुतः। )

---

भित्तिषु गृहारोहणश्रेणीषु ( बहुसंख्यकश्रेणीषु सर्वत्र प्रतिबिम्बसंक्रान्त्यां जायमानायाम् ) एकस्य मे मम वपुः शरीरं बहुताम् नानाभावम् उपैति भजते, तथा हि अग्रे चलति, अभिमुखम् चलति पार्श्वे सहचारि, पश्चात् पराङ्मुखं चलति अधः च विलम्बमानम्। अत्र अग्र-सम्मुख-पार्श्व-पश्चात्-स्थितासु सोपानपरम्परासु प्रतिबिम्बानां चरणेन स्वस्य वपुष एव भेदेन सर्वत्र सञ्चरणं प्रतिभातीति भावः। 'सौधोऽस्त्री राजसदनम्' 'निशान्तपस्त्यसदनम्' इति चोभयत्रामरः॥ ६॥

संवदति—तुल्यतां श्रयति। यादृशः स्वरो मया तस्य पुरुषस्य श्रुतस्तादृश एवास्यापि स्वर इत्यर्थः। भवत्प्रस्तुतः—त्वया कृतचर्चः ( भवत्या प्रस्तुत इति विग्रहे 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पुंवत्त्वम्॥ कुड्यान्तरिते—भित्तिव्यवहिते।

आसनपरिग्रहं कृत्वा—कुत्राप्यासने उपविश्य प्रस्तुतकथाशेषम्—वर्ण्यमानकथावशिष्टांशम्।

का प्रवृत्तिः—का वार्त्ता? तदनन्तरं किं जातमिति जिज्ञासा॥

---

पक्षता—भगवति, स्वप्नमें मेरे द्वारा सुने गये स्वरसे इसका स्वर मिल रहा है। मालूम पड़ता है वही आदमी यह आ रहा है जिसके विषयमें आपने चर्चा की थी। अतः हम दोनों दीवाल की ओटमें हो जायें॥

[ दोनों दीवाल की ओटमें हो जाती हैं ]

विदूषक—वयस्य, आप आसनपर बैठकर प्रस्तुत कथाके शेषका वर्णन करें,

[ दोनों आसन ग्रहण करते हैं ]

विदूषकः—तदो का पउत्ती । ( ततः का प्रवृत्तिः । )

परामर्शः—ततस्तद्दर्शनक्षणमारभ्य ।

टङ्कोत्कीर्णा त्वचि, विलिखिता नेत्रपत्रे, निषिक्ता
स्वान्ते, स्यूता वचसि, निचिता पार्श्वतः पृष्ठतश्च ।
धारारूढा हरिति पुरतः काचसद्मेव काचि-
न्नानाभूत्वा वरतनुरिह प्रायशः प्राविशन्माम् ॥ ७ ॥

टङ्कोत्कीर्णा इति । त्वचि त्वचादेशे टङ्केन पाषाणदारणेन उत्कीर्णा खचिता इव, नेत्रपत्रे विलिखिता चित्रिता इव, स्वान्ते हृद्देशे निषिक्ता गूढं स्थापिता इव वचसि वस्यूता सूचीद्वारा संबन्धिता इव, पार्श्वतः पार्श्वदेशे पृष्ठतः पृष्ठदेशे च निचिता व्याप्ता इव एवं हरिति दिशायां धारारूढा चक्रयन्त्रारूढा इव नानाभूत्वा बहुरूपतां गमिता सा वरतनुः सुन्दरी पुरतः पुरो वर्त्तमानं काचगृहम् माम् प्रायशः प्राविशत् प्रायः प्रविष्टेत्युत्प्रेक्षा । त्वचि टङ्कोत्कीर्णेति सर्वदा तत्स्पर्शस्मरणम् , नेत्रपत्रे विलिखितेति सर्वदा तद्रूपावलोकनम् , स्वान्ते निषिक्तेति सर्वदा तत्स्मरणम् , वचसि स्यूतेति सर्वदा तद्विषयव्याहारः, पार्श्वतः पृष्ठतश्च निचितेति सर्वतस्तदुपस्थितिः प्रतीतिः, हरिति धारारूढेति सर्वासु दिशासु तदवलोकनमित्यादि विरहोत्कण्ठाकृतं भावाविष्टत्वं सूच्यते । काचसद्मेत्युपमया—यथा काचगृहे एकस्यापि पुरःस्थितस्य नानारूपाणि भासन्ते तथैव मयि तस्याष्टङ्कोत्कीर्णत्वादीन्यनेकानि रूपाणि भासन्त इति ज्ञायते 'टङ्कः पाषाणदारणः' इत्यमरः ॥ ७ ॥

विदूषक—उसके बाद क्या हुआ ?

परामर्श—उसके उस दर्शनके समयसे ही—

जैसे सीसेके घरमें एक ही व्यक्तिके प्रवेश करनेपर नाना रूपमें वह दीखता है, उसी तरह वह सुन्दरी—त्वचामें गाड़ दी गई की तरह, आंखोंमें चित्रित कर दी गई की तरह, हृदयमें ढाल दी गई की तरह, वाणीमें सी दी गई की तरह, आगे और पीछे बैठा दी गई की तरह नाना रूपमें धारारूढसी होकर मेरे हृदयमें प्रवेश कर गई है ॥ ७ ॥

पक्षता—(अपवार्य । सासूयम् । ) भअवइ, कए वि गहिअहिअओ एसो जणो । ( भगवति, कयापि गृहीतहृदय एष जनः । )

विदूषकः—वअस्स, तदो तदो । ( वयस्य, ततस्ततः । )

परामर्शः—

प्रथमं निपपात या समग्रा
मयि दृष्टिर्वलदम्बुजायताक्ष्याः ।
न चचाल कथंचिदप्यमुष्याः
स्मरबाणैरिव कीलितस्त्रिभागः ॥ ८ ॥

पक्षता—( अपवार्य । ) एव्वं परकलत्तप्पसत्तहिअए अस्सिं जणे तुअ वअणेण णिहितचिन्ताए मम णवरं मरणं ब्जेव्व परिणअम् । ( एवं

---

कयापि गृहीतहृदयः—कस्यामप्यन्यस्यां वनितायामासक्तमनाः ।

प्रथममिति । वलदम्बुजायताक्ष्याः विकसत्कमलतुल्यविशाललोचनायाः या समग्रा सम्पूर्णा दृष्टिः मयि मदुपरि निपपात, अमुष्याः दृष्टेः त्रिभागः तृतीयो भागः कटाक्षः स्मरबाणैः कीलितः गाढं निखात इव न चचाल मम हृदयात् न निश्चक्राम यथा क्वापि पतितः कोऽपि पदार्थः केनापि वस्तुना निखातः सन् ततो न चलति तथैव मयि निपतितस्तदीयः कटाक्षः कामबाणेन कीलितः सन् सदा मदीये हृदये वर्त्तत एव, नाहं तं विस्मरामीति भावः । कीलित इवेति चलनाभावे हेतुरुत्प्रेक्षितो बोध्यः ॥ ८ ॥

---

पक्षता—( छिपाकर, क्रोधके साथ ) भगवति, यह आदमी किसी स्त्री पर आसक्त है ।

विदूषक—वयस्य, फिर क्या हुआ ?

परामर्श—विकसित कमलके समान दीर्घनयनों वाली उस सुन्दरी की जो दृष्टि पहली बार मेरे ऊपर पड़ी, उसका थोड़ा हिस्सा कामबाणोंसे हृदयमें गाड़ दिया गया, अतः वह दृष्टि मेरे हृदयसे किसी प्रकार नहीं निकल सकी ॥ ८ ॥

पक्षता—( छिपाकर ) इस प्रकार दूसरी स्त्री पर आसक्त इस पुरुष पर

परकलत्रप्रसक्तहृदयेऽस्मिञ्जने तव वचनेन निहितचिन्ताया मम केवलं मरणमेव परिणतम्। )

कथा—अविदितकथाशेषा किमुत्ताम्यसि।

विदूषकः—वअस्स्य, तस्सिं अवसरे तए किं पि किअं भणिअं वा।

( वयस्य, तस्मिन्नवसरे तया किमपि कृतं भणितं वा। )

परामर्शः—वयस्य,

स्तम्भेन कर्मणि तनोः स्थगितेऽपि काम-
काष्ठां परामधिरुरोहतरां वरोरूः।
गीर्गद्गदेन यदपि ग्लपिता तथापि
वाचामगोचरमवोचत लोचनान्तः॥ ९॥

---

परकलत्रप्रसक्तहृदये—अन्यवनितासक्तचित्ते। निहितचित्तायाः—हृदयं समर्पितवत्याः। परिणतम्—फलितम्।

अविदितकथाशेषा—कथाया अवशिष्टं भागमजानती।

स्तम्भेनेति। वरोरूः सुन्दरजघना सुन्दरी सा, स्तम्भेन सात्त्विकभावान्यतमेन तनोः देहस्य कर्मणि चलादिकार्ये स्थगिते रुद्धे सत्यपि परां सर्वातिशायिनीम् कामकाष्ठाम् कन्दर्पदशाम् ( कामुकताम् ) अधिरुरोह प्राप्ता। यदपि यद्यपि गीः तदीया वाणी गद्गदेन स्वरभङ्गेन ग्लपिता निरुद्धा तथापि लोचनान्तः नेत्रत्रिकोणभागः वाचामगोचरम् वचसा प्रकाशयितुमशक्यं किमपि भावतत्त्वम् अवोचत उक्तवान्। श्लथेनापि वपुषा कामकाष्ठाधिरोहणमिति कारणविरहे कार्यनिवेदना-

---

मैंने तुम्हारे वचन पर विश्वास करके स्नेह किया, जिसका परिणाम मरण ही होगा।

कथा—कहानीके अन्तको बिना सुने ही तुम क्यों अधीर हो रही हो?।

विदूषक—वयस्य, उसनें उस अवसर पर कुछ किया या कुछ कहा?

परामर्श—वयस्य, स्तम्भरूप सात्त्विक भावके उदित हो जानेसे शारीरिक चेष्टा बन्द हो गई, तथापि वह सुन्दरी कामकी पराकाष्ठापर पहुँचगई, यद्यपि कण्ठके गद्गद हो जानेके कारण वाणी अवरुद्ध थी तथापि नेत्रके कोणने वह बात कह दी जिसे वाणी कभी नहीं बता सकती थी॥ ९॥

पक्षता—( अपवार्यं । ) भअवइ, पणिवडामि तुह पाआणम् । एरिस-दुव्विणीअजणगहिअहिअआ क्खणं पि ण जीविउं महेमि । अणुमण्णस्व मम् । परिच्चइस्सं दाव इदं सरीरम् । दुल्लहो क्खु इमस्सिं जम्मस्सिं परकलत्तप्पसत्तहिअओ जणो । ( भगवति, प्रणिपतामि तव पादयोः । ईदृश-दुर्विनीतजनगृहीतहृदया क्षणमपि न जीवितुमिच्छामि । अनुमन्यस्व माम् । परित्यक्ष्यामि तावदेतच्छरीरम् । दुर्लभः खल्वस्मिञ्जन्मनि परकलत्रप्रसक्तहृदयो जनः ।

विदूषकः—तदो । ( ततः । )

परामर्शः—ततश्च

कथाकथितरूपानुरूपामेनां विलोकयन् ।
प्रभातमङ्गलध्वानैर्धिग्जनोऽयमजागरीत् ॥ १० ॥

---

द्विभावना । अत्र श्लोके स्तम्भो गद्गदभावश्च सात्त्विकभावौ निबद्धौ, सात्त्विकभावाश्चोक्ता यथा :—"स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ॥" स्वरभङ्ग एव गद्गदभावः ॥ ९ ॥

प्रणिपतामि—पतामि—प्रणमामि । ईदृशदुर्विनीतजनगृहीतहृदया —एतादृशेन अन्यवनिताप्रसक्तेन जनेन ( सह ) गृहीतहृदया—कृतप्रणया । अनुमन्यस्व—आज्ञापय । परकलत्रप्रसक्तहृदयः—अन्यवनितासक्तः । दुर्लभः—दुरवापः ( कष्टलभ्यप्रेमा )

कथेति । कथाकथितरूपानुरूपाम् यादृशं कथया तद्रूपं वर्णितं तादृशमेव रूपं धारयन्तीम् एनाम् ( मनसि मम स्थितां मम प्रियाम् ) विलोकयन् पश्यन्

---

पक्षता—( छिपाकर ) भगवति, मैं आपके पैरों पड़ती हूँ, ऐसे अविनीत दुष्ट व्यक्तिपर प्रेम करके अब मैं क्षणभर भी नहीं जीना चाहती हूँ । आप अनुमति दें, मैं अपना यह शरीर छोड़ूंगी । जो दूसरी स्त्री पर आसक्त है वह पुरुष इस जन्ममें अब मुझे नहीं मिल सकता है ।

विदूषक—इसके बाद ?

परामर्श—इसके अनन्तर—कथाके द्वारा कहे गये रूपके अनुरूप इस सुन्दरीको मैं देख ही रहा था, तब तक प्रातःकालिक मङ्गलवाद्य की ध्वनिसे मैं जाग गया ॥ १० ॥

कथा—अयि चपले, शृणु तावत्त्वामाश्रित्य निशास्वप्नवृत्तान्तमुदाहरत्यायुष्मान्परामर्शः।

पक्षता—( अपवार्य। ) भअवइ, एण्हिं विपरिणओ मे संसारो। येहिं सुव्वन्तेहिं आसि दद्धा हिमेण भिसिणि व्व निव्वावअन्ति ते व्विअ पिअवअणा मं संभरिज्जन्ता। ( भगवति, इदानीं विपरिणतो मे संसारः। यैः श्रूयमाणैरासन्दग्धा हिमेन विसिनीव निर्वापयन्ति तान्येव प्रियवचनानि मां स्मर्यमाणा। )

परामर्शः—वयस्य, अवलम्बस्व माम्। तिरयति चेतनां प्रियजनकथाप्रसङ्गोत्थितो मोहः। ( इति मूर्च्छति। )

---

अयं मल्लक्षणः जनः प्रभातमङ्गलध्वानैः प्राभातिकमङ्गलसूचकवाद्यशब्दैः अजागरीत् विनिद्रो जातः, तदस्य जागरणं धिक्, तादृशप्रियरूपप्रियाविलोकनावसरापहारकृतमेवात्र जागरणस्य धिक्कृतिपात्रत्वमिति बोध्यम् ॥ १० ॥

चपले—चञ्चले। ( अर्धवृत्तान्तश्रवणेनैवान्यासक्तहृदयं प्रियं तर्कयन्त्याः पक्षतायास्त्वरितप्रवृत्तिकतयाऽत्र कथया चञ्चलेति कथनाद् भर्त्सना कृतेति बोध्यम्। )

विपरिणतः—विरुद्धरूपतां गतः। ( यं प्रियमहमन्यासक्तं संभाव्य प्राणांस्त्यक्तुमिच्छामकृषि स एव मम प्रियो ममैव विषये तथा कथयन्नासीदिति ज्ञात्वा चिरं जिजीविषामि तत्स्नेहार्थिनीति विपरीततां गतो मे संसार इत्यर्थः )

तिरयति—लुम्पति। प्रियजनकथाप्रसङ्गोत्थितः—स्निग्धजनसम्बन्धिन्या वार्त्तयोत्पन्नः, साम्प्रतम्-अधुना। साम्प्रतम्-युक्तम्। ( आकर्षति—परामर्शसकाशं गन्तुं गृहीत्वा प्रेरयति )।

---

कथा—अरी चञ्चले, सुनले, अयुष्मान् परामर्श तुम्हारे ही संबन्धमें रात्रिस्वप्न की बात कह रहे हैं।

पक्षता—( छिपाकर ) भगवती, इस समय मेरा संसार बदलगया है, जिन बातों से मैं हिमपातसे कमलिनीकी तरह दग्ध होती जा रही थी, वही प्रिय की बातें मुझे शान्ति दे रही हैं, जब कि मैं उन्हें याद करती हूँ॥

परामर्श—वयस्य, पकड़ लो मुझको, प्रियजन की कथाके स्मरणसे उत्पन्न मोह मेरी चेतना को लुप्त करती जा रही है।

कथा—संप्रति सांप्रतं तवोपसर्तुम । ( इति पक्षतामाकर्षति । )

पक्षता—( उपसृत्य परामर्शस्य ललाटे हस्तं दत्त्वा । ) बुज्झस्व महाभाअ, ण जुज्जदि ते मोहो । ( बुध्यस्व महाभाग, न युज्यते ते मोहः ।

परामर्शः—( संज्ञा लब्ध्वा । ) भगवति, नमस्ते । स्वागतमस्मै नूतनातिथये जनाय ।

कथा—अद्य भगवतीभ्यां श्रुत्यान्वीक्षिकीभ्यामादिष्टया मया सकलवाङ्मयसाम्राज्यसुभगस्य स्वीकृतप्रमाणसमवायस्य न्यायस्य प्रथमपुत्राय गोतमगोत्राय तुभ्यमयोनिजन्मा संशयानुमित्सयोरपत्यकृतिका पक्षता नाम कन्यका प्रतिपाद्यते ।

---

बुध्यस्व—चैतन्यं प्राप्नुहि ।

आदिष्टया—आज्ञप्तया । सकलवाङ्मयसाम्राज्यसुभगस्य—समस्तेऽपि वचननिबद्धे साम्राज्ये रम्यवपुषः । स्वीकृतप्रमाणसमवायस्य—प्रमाणसमवायं चतुर्विधं प्रत्यक्षानुमानोपमानशब्दस्वरूपं प्रमाणगणं स्वीकुर्वतः । अथवा प्रमाणानि पूर्वोक्तानि समवायं नाम संबन्धविशेषं चाद्रियमाणस्य । गोतमगोत्राय—न्यायस्य गोतमप्रणीततया न्यायजन्मनः परामर्शस्य गोतमगोत्रत्वमुक्तम् । अपत्यकृतिका—कृत्रिममपत्यम् । प्रतिपाद्यते—दीयते ।

---

कथा—अब उचित है कि तुम परामर्शके पास जाओ ( पक्षता को खींचती है )

पक्षता—( समीप जाकर, परामर्श का ललाट छूकर ) महानुभाव, जागिये, आपका यह मोह अनावश्यक है ।

परामर्श—( होश में आकर ) भगवति नमस्ते, स्वागत है इस नये अतिथिका ?

कथा—भगवती श्रुति तथा आन्वीक्षिकी की आज्ञासे आज मैं समस्तवाणीराज्यसे सुभग, प्रमाणसमवायको स्वीकार करनेवाले, न्यायके प्रथम पुत्र, गोतम गोत्र परामर्श ( आप ) को यह अयोनिजा तथा संशय एवं अनुमित्सा की गोद ली गई कन्या पक्षता सौंप रही हूँ ।

परामर्शः—स्वस्ति । प्रतिगृहीतोऽयमार्याप्रसादः ।

विदूषकः—कथं बम्हणो इमो न परमण्णं भोजिओ ण सोत्थिवाअणं पडिवादिओ । ( कथं ब्राह्मणोऽयं न परमान्नं भोजितो न स्वस्तिवादनं प्रतिपादितः । )

( सर्वे स्मयन्ते । )

( नेपथ्ये कलकलः । )

विदूषकः—कीस एसो कप्पन्तघडन्तघणघडाघोरणिग्घोसघग्घरभीसणो धरणिभारुद्धरणुद्धुरमहावराहघोणाघुरीघुग्घुराइअगहिओ बहिरिअसअलजीअलोओ लोआलोअन्तमहिवेट्ठणभइरओ दुन्दुही ताडीअदि । ( किमित्येष कल्पान्तघटमानघनघटाघोरनिर्घोषघर्घरभीषणः धरणिभारोद्धरणोद्धुरमहावराह-

---

आर्याप्रसादः—आर्यायाः भगवत्याः पूज्यायाः प्रसादः अनुग्रहः ( कृपापूर्वकं दीयमाना पक्षता मया स्वीकृतेति भावः । )

ब्राह्मणः—मल्लक्षणो विप्रः । परमान्नम्—पायसम् । स्वस्तिवादनं प्रतिपादितः—स्वस्तिवाचनार्थं द्रव्यादिना सत्कृतः । ( विवाहे सम्पाद्ये ब्राह्मणानां भोजनं स्वस्तिवाचनार्थं तेभ्यो यथासामर्थ्यं द्रव्यदानं च प्रथते, तदत्र पक्षतापरामर्शयोर्विवाहे न कृतमिति तदाशयः )

स्मयन्ते—ईषत् ( शिष्टभावेन ) हसन्ति । हासश्चात्र विदूषकोक्तिप्रयोज्यः । कल्पान्तेति । कल्पान्ते प्रलयप्रारम्भकाले घटमाना वर्धमाना या घनघटा

---

परामर्श—अच्छी बात है, आपका यह अनुग्रह मुझे शिरोधार्य है ।

विदूषक—क्यों, मुझ ( ब्राह्मण ) को इसने न परमान्न खिलाया न मुझसे स्वस्तिवाचन कराया ( और विवाह सम्पन्न ! )

[ सब हँसते हैं ]

[ नेपथ्यमें कलकल ]

विदूषक—यह कैसा डङ्का बजरहा है जिसका शब्द प्रलयकालमें उठने वाली घनघटाके गर्जनकी तरह भीषण, पृथ्वीके उद्धारमें व्यस्त महावराहकी नासाके अग्रभागसे पैदाहोनेवाले शब्दसे तुलित, समस्त विश्वको बधिर कर देनेवाला, एवं सुमेरुपर्यन्त पृथ्वीमण्डलको पूर्ण करने वाला है ।

घोणाघुरीघुर्घुरायितगभीरो बधिरितसकलजीवलोको लोकालोकान्तमहीवेष्टनभरितभैरवो दुन्दुभिस्ताड्यते । )

कथा—ननु समासन्नमिदमुदग्रसर्वाङ्गदुर्वारतरं चार्वाकबलम् । पश्य ।

माद्यद्दर्पान्धगन्धद्विपघटितघटाबन्धमास्कन्ध बन्ध-
प्रेङ्खत्पर्याणपर्याकुलतुरगबलक्रुष्टहेषाविशेषम् ।
एतत्सूतप्रतोदाहतहयचलितस्यन्दनोद्घातघाटी-
धावत्पादातपादक्षुभितगति समभ्येति पारक्यचक्रम् ॥११॥

---

मेघमण्डली तस्या यो घोरो भीषणः निर्घोषः शब्दः स इव घर्घरः तदनुकृतिकशब्द-कोऽत एव भीषणः भयङ्कर इत्येकं ताड्यमानदुन्दुभिविशेषणम् । धरणिभारस्य पृथ्वीमण्डलस्य उद्धरणाय उपरि नयनाय उद्धुरः उद्यतो यो महावराहः वराहा-वतारधरो विष्णुः तस्य घोणा नासिका तस्याः धुरी अग्रभागस्तस्या घुर्घुरायितं शब्दायितविशेषस्तद्वत् गभीरः इदमपरं ताड्यमानदुन्दुभिविशेषणम् । बधिरित-सकलजीवलोकः—सकलस्यापि प्राणिवर्गस्य शब्दान्तरश्रवणसामर्थ्यमपहरन् । लोका-लोकान्तायाः सुमेरुपर्यन्ताया मह्याः पृथिव्याः वेष्टनेन व्यापनेन भरितः दीर्घीभू-तोऽत एव भैरवः भयङ्करः ॥

समासन्नम्—समीपमायातम् । उदग्रैः उन्नतैः सम्पन्नैरित्यर्थः, सर्वैरङ्गैर्हस्त्य-श्वरथपदातिरूपैश्चतुर्भिः सेनाऽङ्गैः दुर्वारतरम् अतिदुःखसाध्यनिवारणम् ।

माद्यदिति । माद्यन्तः मदमत्ताः अत एव दर्पान्धा अतिदर्पशालिनो ये गन्धद्विपाः राज्ञां विजयस्य साधनभूताः महादन्तिनः तैः घटितः निर्मितः घटा-बन्धो मण्डलाकृतिहस्तिसन्निवेशो यत्र तादृशम् । पुनश्च आस्कन्धम् स्कन्धदेशावधि बन्धेन प्रेङ्खन्ति दृढनिबद्धतया शोभमानानि यानि पर्याणानि पृष्ठास्तरणानि तैः पर्याकुलस्य अग्रेसरतां प्राप्तुमधीरस्य तुरगबलस्य अश्वसैन्यस्य हेषाविशेषो भिन्न-प्रकारको युद्धकालमात्रश्रव्यः शब्दो यत्र तादृशम् ।

सूतानां सारथीनाम् प्रतोदैः अश्वदमकैः ( कशाभिः ) आहताः ताडिता ये

---

कथा—सभी अङ्गोंमें अजेय यह चार्वाक-सैन्य समीप आ रहा है। देखो मदमस्त लड़ाकू हाथियों की घटासे परिपूर्ण, कन्धे तक बंधे हुए जीनके

परामर्शः—( निरूप्य । सहर्षम् । ) तथा निमित्तानि सूचयन्ति यदचिरेण नश्यत्यसौ सेनेति । पश्य ।

ऊर्ध्वं धावन्ति मूर्धस्खलितभटशिरस्त्राणनिष्पिष्टशस्त्र-
श्रेणीसंसर्गदूरज्वलदहनकणप्लुष्यमाणाः पताकाः ।
उत्पातोल्कानिपातव्यतिकरवशतो विष्वगावर्तमाना
निर्मान्ति भ्रान्तियोगादपरमिव रवेरम्बरे बिम्बवर्गम् ॥१२॥

---

हयाः रथाश्वास्तैः चलितानां स्यन्दनानां रथानाम् उद्घातैः निम्नोन्नतदेशप्रतिघातैः या घाटी आक्रमणं तेन धावन्तो ये पादाताः पादचारिणो भटाः तेषां पादैः क्षुभिता भयचकिता गतिर्यत्र तादृशं पारक्यचक्रम् परकीयसैन्यबलम् समभ्येति समायाति । 'अभ्यवस्कन्दनं त्वभ्यासादनम्' इत्यमरः । छलादाक्रमणमिति तदाशयः ॥ ११ ॥

निमित्तानि—शकुनानि । अत्र पताकादाहलक्षणमशकुनमस्याः सेनाया अचिरेण भाविनं विनाशं सूचयतीति वक्ष्यत्यग्रेतनेन श्लोकेन ॥

ऊर्ध्वं धावन्तीति । मूर्धभ्यः मस्तकदेशेभ्यः स्खलितानि अधःपतितानि शिरस्त्राणानि मस्तकप्रहारनिवारणार्थीनि लौहरचितानि शीर्षण्यानि तैः निरन्तरं पिष्टानाम् आहतानां शस्त्रश्रेणीनाम् आयुधानाम् संसर्गेण दूरज्वलः अधिकप्रभो यो दहनः वह्निस्तस्य कणैः स्फुलिङ्गैः प्लुष्यमाणाः दह्यमानाः पताकाः ऊर्ध्वं धावन्ति वायुप्रेरिताग्निज्वालावशादुपरि गच्छन्ति, ( अपि च ) उत्पातस्य प्राणिनाममङ्गलं

---

बन्धनोंसे व्याकुल अश्वोंकी हिनहिनाहटसे मुखरित, रथवाहकके चाबुकसे आहत होकर चल निकलने वाले अश्वोंद्वारा वाहित रथोंसे निर्मित शून्य स्थानमें तेजीके साथ दौड़नेवाले पादचारी सैन्यसे क्षुभित यह शत्रुओंका सैन्य इधर ही आ रहा है ॥ ११ ॥

परामर्श—( देखकर—सहर्ष ) लक्षण ऐसे दीखते हैं कि यह सेना शीघ्र ही नष्ट होगी । देखिये—

सैनिकोंके माथेसे गिरने वाले शिरस्त्राण ( लौहमय ) परस्पर टकराते हैं जिससे पैदा होकर अग्निकण पताकाओंको जला रहे हैं, जलती हुई

पक्षता—को क्खु एसो सरअचन्दचन्दिआसोहणसरीरेण तुरएण परवलाहिमुहं पअट्टो। (कः खल्वेष शरच्चन्द्रचन्द्रिकाशोभनशरीरेण तुरगेण परबलाभिमुखं प्रवृत्तः।)

कथा—नूनमसौ न्यायनिबन्धप्रणेता विद्वानुदयनो निर्दयं परेषु प्रहर्तुमभिधावति। (निरूप्य।) अहो न्यायविद्दुदयनाधिष्ठितस्य शीतकर-

---

सूचयतः उल्कानिपातस्य व्यतिकरः संबन्धः तद्वशतः तद्द्वारा विष्वक् सर्वतः आवर्त्तमानाः भ्रमन्त्यः सत्यः भ्रान्तियोगात् सर्वतो भ्रमणवशात् अम्बरे आकाशे अपरम् द्वितीयम् रवेः सूर्यस्य बिम्बवर्गम् मण्डलसमूहम् निर्मान्ति जनयन्ति दर्शयन्तीति पर्यवसितम्। इवेत्युत्प्रेक्षा। संभ्रमेणागच्छतां सैनिकानां लौहघटितानि शिरस्त्राणानि पतन्ति, तानि च शस्त्रैराहन्यमानानि सन्ति वह्निकणमुद्वमन्ति, तैर्वह्निकणैः पताकावस्त्रखण्डा दह्यन्ते, दह्यमानाश्च ते पताकावस्त्रखण्डा उल्कानिपातैः सम्बद्धा वायुवशादाकाशे भ्रमन्तश्च रवेरपरेषां मण्डलानां शङ्कां दर्शकानां मनस्सु प्रादुर्भावयन्तीति भावार्थः। भ्रान्तिमान्स्फुटोऽलङ्कारः इवशब्देनोत्प्रेक्षा चेति द्वयोः सङ्करः। 'लवलेशकणाणवः' 'सर्वतो विष्वगित्यपि' इत्युभयत्रामरः ॥ १२ ॥

शरच्चन्द्रचन्द्रिकाशोभनशरीरेण—शारदशशधरधवलद्युतिना वपुषा।

परबलाभिमुखम्—आगच्छच्छत्रुसैन्यसम्मुखम्। प्रवृत्तः—प्रस्थितः॥

न्यायनिबन्धप्रणेता—न्यायशास्त्रीयाणां ग्रन्थानां कुसुमाञ्जल्यादीनां प्रणेता रचयिता। परेषु प्रहरति—शत्रूणामुपरि प्रहारं करोति। अन्येषां विरुद्धमतानां तत्तदाचार्याणां मतानि खण्डयतीति तात्पर्यम्।

शीतकरश्वेतस्य—चन्द्रधवलस्य। प्लुतगतिपाटवम्—शीघ्रगामिताचातुर्यम्।

---

पताकायें औत्पातिक उल्कापातके द्वारा आकाशमें चारो ओर घूमा करती हैं जिससे आकाशमें अन्यान्य सूर्यबिम्बोंकी सृष्टि सी हो रही है॥ १२॥

पक्षता—शरद् ऋतुकी चन्द्रिकाके समान स्वच्छ शरीर अश्वपर आरूढ़ यह कौन शत्रुसैन्यकी ओर बढ़ रहा है?

कथा—यह हैं न्यायग्रन्थोंके निर्माता उदयन, जो शत्रुओंपर निर्दय प्रहारकर रहे हैं। (देखकर) नैयायिक उदयन द्वारा अधिष्ठित और

श्वेतस्याश्वस्य प्लुतगतिपाटवम्।

> क्ष्मापृष्ठे खुरलक्षणेन पदवीमालक्ष्य शिक्षां गतेः
> काङ्क्षन्तोऽनुसरन्ति धूलिमलिना दूरादमी वायवः।
> तस्माल्लोचनवञ्चनोऽयमवनौ पादं न दत्ते प्लुतै-
> र्बिम्बार्धाङ्कपरम्परामिव लिखत्याकाशभित्तौ हयः ॥१३॥

अपि च।

---

क्ष्मापृष्ठे इति। क्ष्मापृष्ठे भुवि खुरलक्षणेन खुरचिह्नद्वारा पदवीम् अश्वगमन-मार्गम् आलक्ष्य तर्कयित्वा गतेः गमनस्य शिक्षाम् अश्वसकाशात् अध्ययनं काङ्क्षन्तः अभिलष्यन्तः धूलिमलिनाः पृथ्वीरजोधूसराः अमी वायवः अनुसरन्ति तमश्वमनु-धावन्ति, तस्मात् लोचनवञ्चनः वायोर्दृशोः प्रतारणनिपुणः अयम् उदयनाधि-ष्ठितोऽश्वः अवनौ पृथिव्यां पादं न दत्ते चरणं न स्थापयति, (किन्तु) प्लुतैः शीघ्रोच्छलनैः आकाशभित्तौ गगनकुड्ये बिम्बार्द्धपरम्पराम् बिम्बार्धरूपां चिह्नावलीम् लिखतीव। अयमाशयः—यथा कोऽपि कुत्रचन विद्यायामतिप्रवीणः स्वां विद्यां गोपयित्वा स्वमात्रवेद्यां रक्षयितुं यैर्व्यापारैः सा प्रकाशिता स्यादिति संभाव्यते तान् व्यापारान्नैव करोति, कृत्वापि वा तच्चिह्नानि लुम्पति, तद्विद्याज्ञान-लालसानां तदभिसन्धिपराणां च जनानां लोचनानि वञ्चयति, तद्वदयमुदयना-धिष्ठितोऽश्वः वायोरप्यधिकतीव्रगतिः कदाचिद्वायुर्मम गतिवेगं शिक्षितुं पृथ्वीपृष्ठे मच्चरणपातचिह्नानि दृष्ट्वा मामनुसरेदतः पृथिव्यां चरणमेव न धत्ते, केवलमाकाशे एव भ्रमति, आकाशे भ्रमतश्च तस्य कान्तयोऽतितीव्रया गत्याऽऽकाशे प्रसरन्ति, येन मण्डलीभूतास्तत्कान्तयो बिम्बार्धरूपामङ्कपरम्परामिव सृजन्ति, तदयं स्वविद्या-रहस्यगोपकविद्वद्वृत्तान्तोऽश्वे तज्जिज्ञासुशिष्यवृत्तान्तश्च वायावारोपित इति वायोर-प्यधिकशीघ्रगामी उदयनाश्वोऽयमिति तात्पर्यार्थः ॥ १३ ॥

---

चन्द्रमाकी तरह स्वच्छ इस अश्वकी शीघ्रगामिता आश्चर्यजनक है।

(अगर मैं पृथ्वीपर चलूंगा तब) पृथ्वीपर मेरे खुरोंके चिह्न देखकर धूलि-मलिन यह वायु गति-शिक्षाके लिये मेरा अनुसरण करेगी, इसीलिये उस वायु-की आखोंको वञ्चित करने वाला यह अश्व पृथ्वीपर पैर ही नहीं रखता है, केवल आकाश-भित्तिपर बिम्बार्ध-परम्पराकी सृष्टि करता जा रहा है ॥ १३ ॥

काष्ठान्तसंघटितदूरविलम्बमान-
मार्तण्डरश्मिवलयानवलम्बमानः ।
गामस्पृशन्नपि दधन्नतिमुन्नतिं च
हिन्दोलयेव तुरगो रमते प्लुतेषु ॥ १४ ॥

परामर्शः—अहो धावितलाघवमुदयनहयस्य ।
विच्छिन्नाममुनैव यावदवनौ भानुः प्रभां पातयेत्
प्रायस्तावदयं रयेण तुरगो गव्यूतिमुल्लङ्घते ।

---

काष्ठान्तेति । काष्ठान्ते दिगन्ते सङ्घटितान् बद्धान् दूरविलम्बमानान् अति-दूरपर्यन्तं लम्बमानान् मार्त्तण्डरश्मिवलयान् सूर्यकिरणमण्डलानि (प्रग्रहसमूहानिति ध्वन्यते) अवलम्बमानः आश्रयन् (अयम् उदयनाधिष्ठितः) तुरगः अश्वः गाम् भुवम् अस्पृशन् अपि नतिम् अधोदेशसम्पर्कम् उन्नतिम् ऊर्ध्वदेशसम्पर्कं च दधत् धारयन् प्लुतेषु शीघ्रगतिभेदेषु हिन्दोलया तदाख्यप्रसिद्धया क्रीडया रमते क्रीडति यथा कश्चित् हिन्दोलारूढो जनः दूरलम्बितान्प्रग्रहान् अवलम्बमानः सन् कदा-चिदुच्चैर्गच्छति कदाचिच्च नीचैरायाति, तद्वदयमश्वो दिगन्तलम्बमानान् सूर्य-रश्मीनाश्रयन् कदाचिदूर्ध्वं याति कदाचिदधश्चागच्छति गतिवेगवशादिति भावः । अत्र हिन्दोलारूढजनवृतान्तः शीघ्रगामिन्यश्वेऽध्यारोपितो बोध्यः । 'दिशस्तु ककुभः काष्ठाः' 'आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् । गतयोऽमूः पञ्च' इति चाश्वोपक्रमेऽमरः । "पूर्वापरोन्नमनतः क्रमादारोपणं प्लुतम्" इति चामर-टीका ॥ १४ ॥

विच्छिन्नामिति । भानुः सूर्यः अमुना उदयनाधिष्ठितेन एव तुरगेण अश्वेन

---

और—दिशाओंकी छोर पर बँधी हुई लटकनेवाली सूर्यकी किरण-स्वरूप रस्सियोंको पकड़कर विना पृथ्वीका स्पर्श किये ही ऊपर-नीचे आता हुआ यह अश्व द्रुतगतिरूप झूलेपर झूल रहा है ॥ १४ ॥

परामर्श—उदयनके अश्वकी द्रुतगामिता तो आश्चर्यजनक है :—

इसी अश्वके द्वारा विच्छिन्न होनेवाली अपनी प्रभाको सूर्य जब तक पृथ्वी तक पहुँचावे इतनी ही देरमें यह अश्व दो कोस चला जाता है।

ग्रामीणा जनता नितान्तचकिता दूराञ्चिते चक्षुषी ।
निक्षिप्य क्षणमीक्षते पथि हयच्छायामयीं विद्युतम् ॥१५॥

अपि चायमुदयनः—

अमुना हयवेगेन क्षणोत्तीर्णाध्वविस्तरः ।
समभिव्याहृतं वेत्ति नानाजनपदाक्षरम् ॥ १६ ॥

---

विच्छिन्नाम् भूसम्बन्धविरहं प्रापिताम् प्रभाम् कान्तिं यावत्, यावता कालेन अवनौ पृथिव्यां पातयेत् तावदयं तुरगः रयेण वेगेन प्रायः गव्यूतिमात्रं क्रोशयुगम् लङ्घते उल्लङ्घ्य गच्छति ग्रामीणा जनता जनपदलोकः नितान्तचकिता अत्याश्चर्यिता सती दूराञ्चिते सुदूरप्रसारिते लोचने चक्षुषी नेत्रे निक्षिप्य पातयित्वा पथि मार्गे हयच्छायामयीं तुरगकान्तिस्वरूपां विद्युतं विद्युल्लताम् ईक्षते पश्यति । यत्राश्वशरीरं तत्र च्छाया जायतेऽतस्तत्र सूर्यप्रभा च्छिन्नेव जायते तत्र प्रभाहीने देशे यावत्सूर्यः पुनः स्वां प्रभां पातयेत्तावतैवातिसूक्ष्मेण कालेनायमुदयनाश्वः क्रोशद्वयं क्रामति, तमिममतिजवनं द्रष्टुकामा ग्रामीणा जनता दूरप्रसारिते नयने निक्षिप्यापि मार्गे हयच्छायामयीं विद्युतमेव केवलामीक्षते नतु वस्तुतोऽश्वस्य देहमीक्षते तस्य सुदूरगतत्वादिति भावः । सूर्यकरापेक्षयापि हयस्य तीव्रगतितया वर्णनादतिशयोक्तिरियम् ॥ १५ ॥

अमुनेति । अमुना स्फुटानुमेयेन हयवेगेन अश्वस्य शीघ्रगामितया क्षणेन अतिस्वल्पकालेन उत्तीर्णः लङ्घितः अध्वविस्तरः मार्गायामो येन तादृशः ( अयमुदयनः ) नानाजनपदाक्षरम् बहुविधदेशनामवर्णनम् समभिव्याहृतम् एकतां गतम् वेत्ति । अतिजवनाश्वयायी अयमुदयनः क्षणमात्रेण विशालं वर्त्म लङ्घयतीति तद्वर्त्मपतितानां वङ्ग-कलिङ्ग-सुघ्न-मथुरादिनानाजनपदानां नामान्यपि पूर्णरूपेण ज्ञातुमवसरं न लभते, सर्वेषामपि वर्त्मपतितानां देशानामादिमानि नामाक्षराण्येव

---

ग्रामीण जनता आश्चर्यित होकर दूरतक आंखोंको फेंककर भी थोड़ी देरके लिये मार्गमें घोड़ेकी कान्तिसे बनी बिजली भरको ही देखपाती है ॥ १५ ॥

और—यह उदयन घोड़ेकी शीघ्रगामितासे क्षणभरमें मार्गविस्तारको पार करके नानादेशोंके नामाक्षरोंको एक ही साथ जानते हैं ॥ १६ ॥

आश्चर्यम् ।

यो वेगतो गतो दूरमध्वानमुदलङ्घत ।
पश्चादनुसरत्येषा हेषा तस्यैव वाजिनः ॥ १७ ॥

कथा—कथमगणयित्वा शस्त्रवृष्टिमेषः—

उदयनतुषारधामा लोकं सहजं निजं परित्यज्य ।

---

यावदवगच्छति तावत्ते देशा अतिक्रमन्त्येवातो द्रुतगामितातिशयेन बहूनामेव देशानां नामान्यसौ सहैव जानातीति भावः । अत्र नानादेशाक्षरज्ञानेन तत्तद्भाषासु पाली-प्राकृतादिषु लिखितानां तत्तन्नास्तिकादिग्रन्थानां ज्ञानमप्युदयनस्यासीदिति ध्वन्यते, तथा सति तत्पक्षज्ञानद्वारा तन्निरासममर्थतापि प्रतिभातीति बोध्यम् ॥ १६ ॥

यो वेगेनेति । यो वाजी वेगेन गतः रयेणोत्तरदेशं संक्रान्तः दूरमध्वानम् विस्तृतं वर्त्म अलङ्घत, तस्यैव वेगेन गतस्य वाजिनः एषा श्रूयमाणा हेषा अश्वशब्दः पश्चादनुसरति अग्रतो यायिनं तमश्वमनुधावतीत्यर्थः । हेषां कुर्वन्नश्वः पुरः सरतीति प्रसिद्धिः, अत्र हेषां पश्चादनस्याप्याश्वस्याग्रे गत्युत्प्रेक्षया शब्दादपि शीघ्रगामित्वमश्वस्याभिधीयमानं ध्वनयत्यतिशयोक्तिम् ॥ 'अश्वानां हेषा ह्रेषा च निःस्वनः' इति शाश्वतामरौ ॥ १७ ॥

अगणयित्वा—अविभाव्य । शस्त्रवृष्टिम्—शस्त्रप्रपातम् । पतन्तमपि शस्त्रराशिं तृणवदवमत्येत्यर्थः ।

उदयनेति । उदयनः उदयनाचार्य एव तुषारधामा शीतकरश्चन्द्रः सहजं स्वाभाविकं निजं लोकं स्वावासदेशं परित्यज्य विहाय कलाराशेः स्वीयतेजःसमूहस्य प्रतिपदम् सर्वेषु स्थानेषु अनुवृद्धये प्रकर्षाय परचक्ररविम् शत्रुमण्डलरूपं सूर्यं प्रविशति सङ्क्रामति । ज्यौतिषाधारेण चन्द्रस्य कलावृद्धिः सूर्यकृता स्वीक्रियते, ततश्च यथा चन्द्रः (प्रतिपदमनु—प्रतिपदं तिथिमनुलक्ष्य) सूर्यं स्वकलाराशेः वृद्धये

---

आश्चर्य है, जो अश्व वेगसे सुदूरमार्गको पार कर चुका है, उसी अश्वकी यह हिनहिनाहट उसके पीछे दौड़ी जा रही है ॥ १७ ॥

कथा—शस्त्रवृष्टि की चिन्ता को भूलकर—

यह उदयनरूपी चन्द्रमा अपने लोकको स्वाभाविक परलोकरूप

प्रविशति परचक्ररविं प्रतिपदमनुवृद्धये कलाराशेः ॥ १८ ॥

परामर्शः—परितः पतदस्त्रवर्षमिषुधारया वारयन्नयमुदयनो हयरयवशात्तथा भ्रमणिकामातनोति यथा ।

भूमौ तुरङ्गममयं गगने मुखेन्दु-
ज्योत्स्नामयं नतधनुर्मयमन्तराले ।
आशासु सायकमयं तदिति क्रमेण
चत्वारि चक्षुषि चकासति मण्डलानि ॥ १९ ॥

---

प्रविशति, तथायमुदयनः सर्वत्र स्वीयविद्यावैशद्यरूपकलाराशेरभिवृद्धये अतिदस्युशत्रुचक्रं पराभवितुं प्रविशतीत्यर्थः, अत्रोदयनस्य तुषारधामत्वोक्त्या तदीयकररूपाणां तत्सिद्धान्तानां जगत्सन्तापनिवर्त्तनक्षमताऽभिव्यञ्जनविधया स्वच्छशास्त्रत्वेन ग्राह्यत्वम् परचक्रस्य रवित्वोक्त्या च तत्सिद्धान्तानां पुमर्थासाधकतया सन्तापप्रदायित्वेन परिवर्जनीयत्वं प्रति चेङ्गितं कृतम् । परचक्रस्य रवित्वोक्त्या प्रबलत्वं प्रतीयमानं तत्पराजेतुरुदयनस्यैव परमार्थतः प्राबल्यमभिव्यञ्जयति, विजेतव्योत्कर्षवर्णनस्य विजेतुरुत्कर्षवर्णनपर्यवसायित्वादिति बोध्यम् । रूपकमलङ्कारः ॥ १८ ॥

परितः—समन्ततः । पतत्—निपतनशीलम् । इषुधारया—बाणप्रक्षेपद्वारा । वारयन्—निषेधन् । हयरयवशात्—अश्ववेगप्रभावात् । भ्रमणिकाम्—चङ्क्रमणम् । समन्ततः पततः परप्रहरणप्रकरस्य निवारणायाजस्रं बाणान् वर्षन्नुदयनस्तथा भ्राम्यति यथाश्वारूढोऽसौ चत्वारि मण्डलानि दृशोऽग्रे समुपस्थापयति । तदेव मण्डलचतुष्टयमुपपादयिष्यति भूमौ तुरङ्गममयमित्यादिनोत्तरश्लोकेन ॥

भूमौ तुरङ्गमेति । भूमौ पृथिवीपृष्ठे तुरङ्गममयम् अश्वस्वरूपम्, गगने आकाशदेशे मुखेन्दुज्योत्स्नामयम् मुखचन्द्रिकास्वरूपम्, अन्तराले पृथ्वीगगनयोर्मध्यभागे नतधनुर्मयम् सप्रत्यञ्चचापस्वरूपम्, आशासु दिशासु सायकमयं बाणस्वरूपं

---

सूर्यमण्डलमें प्रवेश कर रहा है जिससे उसकी कलाका वृद्धि होगी ॥ १८ ॥

परामर्श—चारो ओर गिरने वाली अस्त्रवृष्टिको बाणोंकी धारासे रोकता हुआ यह उदयन अश्वकी द्रुतगामितासे इसतरह चक्कर मार रहा है कि—

पृथ्वीपर अश्वमय, आकाशमें मुखचन्द्र-चन्द्रिकामय, पृथ्वी तथा आकाशके

कथा—इमौ किल कुमारिलप्रभाकरौ परान्पराभवन्तमुदयनमनुसृत्य मन्त्रयेते—'भ्रातरुदयन, किमात्मानमायासयसि। हरन्तु पक्षतां किन्तु खण्डयन्तु परे परामर्शम्। ननु द्विधाविभक्ततनुरप्यसौ पक्षतया धर्मदारै-

---

तदिति तदेवं क्रमेण चक्षुषि दृष्टौ चत्वारि मण्डलानि प्रोक्तरूपाणि चकासति प्रतिभान्ति। भूमौ तीव्रया गत्या भ्रमणिकामाचरतोऽश्वस्य तेजो मण्डलाकारं दृश्यते, आकाशे तदश्वमारूढस्योदयनस्य मुखज्योतिरालोक्यते, भूगगनयोश्चान्तराले चक्रीकृतस्य चापस्य तेजो दीप्यते, दिशासु च बाणमयं दीप्तं तेजः प्रकाशते, तदिति क्रमशः पश्यतां जनानां दृष्टौ चत्वारि अश्वमुखधनुर्बाणतेजोमण्डलानि प्रतिभासन्त इति तात्पर्यम्। 'चकासति' इति दीप्त्यर्थाच्चकासतेर्लटि प्रथमपुरुषबहुवचने रूपम् ॥ १९ ॥

कुमारिलप्रभाकरौ—भाट्टमतप्रवर्त्तको मीमांसकधुर्यः कुमारिलः, प्रभाकरस्तदीयशिष्यो गुरुमतप्रवर्त्तको मीमांसकैकदेशी च। परान्—शत्रून् विरुद्धमतानुगान्। पराभवन्तम्—खण्डयन्तम्। आयासयसि—खेदं गमयसि।

खण्डयन्तु—खण्डशः कुर्वन्तु। अयमाशयः—मीमांसकाः पक्षतां न स्वीकुर्वन्ति, ते हि विनैव पक्षतामनुमितिमभ्युपगच्छन्ति, परामर्शस्य च खण्डद्वयं कृत्वा ताभ्यामेव खण्डाभ्याम ज्ञानद्वयस्वरूपाभ्यां सर्वत्रापि कार्यं निर्वाहयन्ति। व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः इति हि नैयायिकानां परामर्शस्वरूपम्, वह्निव्याप्यधूमवानयं पर्वत इति ज्ञानं परामर्श इति च प्रादेशिकं तदुदाहरणम्, तत्र मीमांसकाः—धूमो वह्निव्याप्यः इत्येकम् धूमवांश्च पर्वतः इत्यपरमिति ज्ञानद्वयमेव अनुमितिसाधनं स्वीकुर्वते, तदेवात्र कुमारिलप्रभाकरयोरभिमतमुदयनाय ताभ्यां

---

बीचमें तने हुए धनुर्मय, एवं दिशाओंमें बाणमय—इसप्रकार चारतरहके मण्डल आंख के सामने आते हैं ॥ ॥ १९ ॥

कथा—यह कुमारिल तथा प्रभाकर शत्रुओंके पराजयमें संलग्न उदयनके पास जाकर कहते हैं कि भाई उदयन, क्यों अपनेको क्लेश दे रहे हो? ये शत्रु ले जांय पक्षताको, परामर्शके दो टुकड़े कर दें। परामर्शकी देहके दो टुकड़े हो जानेपर भी पक्षतास्वरूप पत्नीके नहीं रहनेपर भी वह अयोनिजा कन्या अनुमितिको उत्पन्न कर सकता है।

विनापि प्रभवति जनयितुमयोनिजां निजामनुमितिम्' इति।

पक्षता—अहो कुडिलत्तणमिमाणम्। (अहो कुटिलत्वमनयोः।)

विदूषकः—भअवइ, भिआमि इमासुं। तदो पक्खदं कत्थ अवाहिए त्थले ठवेमि। (भगवति, बिभेम्याभ्याम्। ततः पक्षतां क्वचिदप्यबाधिते स्थले स्थापयामि।) [इति पक्षतया सह निष्क्रान्तः।]

परामर्शः—इमौ कुमारिलप्रभाकरौ स्मितपूर्वमुदयनेनावधीरितौ कोप-

---

निवेदितम्, परामर्शस्य खण्डनं द्विधाकरणमेव, पक्षतायाश्च हरणमस्वीकरणम्। द्विधा विभक्ततनुः-द्विधाकृतदेहः। नैयायिकाः परामर्शस्य यमेकमाकारमामनन्ति, तमेवाकारं मीमांसकाः खण्डद्वये परिणमय्यानुमितिसाधकं ज्ञानद्वयं स्वीकुर्वते, तदेवात्र द्विधाविभक्ततनुत्वेन विवक्षितम्। पक्षतया धर्मदारैर्विनापि-विनापि पक्षता-स्वीकारमिति बोध्यम्। जनयितुं प्रभवति-उत्पादयितुं क्षमते। अयोनिजाम्-विनैव मातृकुक्षिमुत्पत्तियोग्याम् (श्रूयते हि सीतायाः धरण्या द्रौपद्याश्चाग्निकुण्डा-दुत्पत्तिरित्ययोनिजोत्पत्तिः शक्यसमर्थना)

कुटिलत्वम्—खलता। कुमारिलप्रभाकरौ आस्तिकदर्शनानुगामितया उदयनस्य सपक्षौ सन्तावपि प्रवर्त्तमाने परैर्युद्धे परामर्शद्विधाखण्डनं पक्षताहरणं च स्वीकर्त्तुमनु-रुन्धानाववश्यमेव कौटिल्यमाचरत इति तथोक्तम्, अन्योपि लौकिकयुद्धे सपक्षतया स्थितो जनः प्रवृत्ते युद्धे विवादास्पदभूमेः परित्यागं स्वपक्षीययोधखण्डनं च स्वीकर्त्तुं कुतोपि कारणवशादनुरुन्धन् कुटिलतयोच्यते॥ अनयोः-कुमारिलप्रभा-करयोः। आभ्याम्-कुमारिलप्रभाकराभ्याम्।

स्मितपूर्वम्—सहासम्। अवधीरितौ-तिरस्कृतौ। स्मितपूर्वकतिरस्कृत्यात्यन्ता-नवधेयवचनता व्यज्यते। कोपकपिलाननौ-क्रोधरक्तमुखौ।

---

पक्षता—आश्चर्यजनक है इनकी कुटिलता।

विदूषक—भगवति, मुझे इनका भय है। इसलिये मैं पक्षताको किसी निर्बाधस्थानमें रखना चाहता हूँ।

(पक्षताके साथ विदूषकका प्रस्थान)

परामर्श—कुमारिल तथा प्रभाकरको ओर विहँसकर उदयनने उन

कपिलाननो भूत्वा मां सदारं शपतः—

'गर्भं धत्तां परामर्शसंनिकर्षेण पक्षता ।

अपत्ये जातमात्रे तु दम्पती न भविष्यतः ॥ २० ॥

कथा—अहो दुराचारयोरनयोर्दारुणानि दुरन्तवचनानि ।

परामर्शः—भगवति, तथाविधापत्यवदनदर्शनकृतार्थयोरावयोः क्षणमात्रमपि प्राणनं परमनिःश्रेयसाय ।

---

सदारम्—पक्षतया दारैः सहितम् । माम्–परामर्शम् ।

गर्भं धत्तामिति । पक्षता सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपा स्त्री 'परामर्शसन्निकर्षेण परामर्शाख्यस्य व्याप्तिविशिष्टपक्षधर्मताज्ञानरूपस्य पुंसः संबन्धेन संयोगेन गर्भं धत्ताम् अनुमित्युत्पादकतां प्राप्नोतु, परन्तु अपत्येऽनुमितिरूपायां सन्ततौ जातमात्रे उत्पन्नमात्रे सति दम्पती पक्षतापरामर्शरूपौ जायापती न भविष्यतः विनङ्क्ष्यतः । अनुमितौ जातायां सिद्ध्यभावस्य निवृत्त्या पक्षता विनश्यति, ततश्च परामर्शोऽपि विनश्यति । इति न्यायमतमेतेन शापरूपतया वर्णितम् ॥ २० ॥

दुराचारयोः—दुष्टव्यवहारयोः । दारुणानि–भीषणानि । दुरन्तवचनानि मरणाशंसितया दुष्टानि अक्षराणि ।

तथाविधापत्यदर्शनकृतार्थयोः–तथाविधस्य अयोनिजस्य अपत्यस्य अनुमितिरूपस्य कन्यासन्तानस्य दर्शनेन कृतार्थयोः प्राप्तजन्मफलयोः । आवयोः पक्षतापरामर्शयोः । क्षणमात्रम्–एकं क्षणं यावत् । प्राणनम्–जीवनधारणम् । परमनिः-

---

दोनोंका अनादर कर दिया, इसपर वे दोनों क्रोधसे रक्तमुख हो उठे, और उन्होंने हम तथा हमारी स्त्रीको शाप दे दिया—

परामर्शके संसर्गको पाकर पक्षता गर्भधारण करले, परन्तु अपत्यके पैदा होते ही दम्पति—पक्षता तथा परामर्श नहीं रहेंगे, इन दोनोंका अन्त हो जायगा ॥ २० ॥

कथा—आश्चर्यजनक है इनकी दुष्टता तथा अत्यन्त दारुण है इनके वचन ।

परामर्श—भगवति, उसतरहकी सन्तानके मुखको देखनेके बाद क्षणमात्रके लिये भी हमारा जीवन परमकल्याणकर है ।

( नेपथ्ये कलकलः । )

कथा—हा, किमेतत् । जगदवसानदिवसोदित्वरदिवाकरप्रकरकरचक्रनिष्कथनकदर्थितमिव युगविगमवर्धमानवडवावीतिहोत्रहेतिलिह्यमानमिव धूर्जटिललाटलोचनपुटपच्यमानमिव जनजातमकाण्डचण्डिमापन्नशुष्मोष्मणा कृच्छ्रं प्राणिति । ( प्रणिधाय । ) नूनमुदयनेन परेषां क्षुद्राणामुपद्रवमसहमानेनोदीरितमिदमाग्नेयमस्त्रम् ।

---

श्रेयसाय-महते कल्याणाय । परामर्शो ज्ञानभेदः, स हि एकस्मिन् क्षणे उत्पद्य द्वितीयक्षणे स्थित्वा तृतीयक्षणे नश्येदिति मनसिकृत्य क्षणमात्रमपि प्राणनमुक्तम् ।

जगदवसानेति । जगतः अवसानदिवसे प्रलयदिने उदित्वराः उदिताः ये दिवाकरप्रकराः द्वादश सूर्याः तेषां द्वादशसंख्यकानां सूर्याणां करचक्रेण तेजःसमुदयेन यत् निष्कथनं सन्तापनं तेन कदर्थितं पीडितम् इव । (इदमेकं वक्ष्यमाणस्य जनजातमित्यस्य विशेषणम् ) युगविगमे युगान्ते वर्धमानस्य वडवावीतिहोत्रस्य वडवानलस्य हेतिभिः परम्पराभिः लिह्यमानम् आस्वाद्यमानम् दह्यमानम् इव ( इदमपरं तद्विशेषणम् ) धूर्जटेः शिवस्य ललाटलोचनपुटेन नेत्रवह्निज्वालया पच्यमानम् इव ( इदमपि तस्यैव विशेषणम् ) जनजातम्—लोकसमूहः । अकाण्डे असमये चण्डिमापन्नः प्रचण्डतां गतो यः शुष्मा अग्निः तस्य ऊष्मणा तापेन । कृच्छ्रं प्राणिति—कष्टं जीवति । ( प्रणिधाय-ध्यानदृष्ट्या विभाव्य ) नूनम्—निश्चयेन । परेषाम्—शत्रुभूतानाम् चार्वाकादीनाम् । क्षुद्राणाम्—नीचानाम् । उपद्रवम्—वृथावाक्प्रयोगरूपम् । असहमानेन—सोढुमपारयता । उदीरितम्—प्रयुक्तम् । लोकस्य प्राणान् कष्टे पातयन्नयं सन्तापः किंकृत इति पूर्वं प्रकटीकृतायाश्चिन्तायाः समाधानाय

---

[ नेपथ्यमें कलकल ]

कथा—हाय, यह क्या हुआ ? प्रलयकालमें उगनेवाले दिवाकरसमुदायके किरणसमूह द्वारा झुलसा हुआ सा, प्रलयमें वर्द्धमान वडवानलसे दह्यमान सा, महादेवकी नेत्रज्वालासे पकता, संसारका लोकसमुदाय असमयमें ही प्रचण्डताको प्राप्त अग्निकी गर्मीसे कष्टमय जीवन बिता रहा है । ( ध्यान करके ) निश्चय ही उदयनने क्षुद्र शत्रुओंके उपद्रवोंके असह्य हो जानेपर यह आग्नेय अस्त्र छोड़ा है ( उसीकी यह गर्मी है )

ग

परामर्शः—अहो, दहनक्रियालाघवमुदयनोदीरिताग्नेयशस्त्रानलस्य ।
तथा हि—

सेनेति धूमपटलीति हुताशवीथी-
त्यङ्गाररराजिरिति भस्मपरम्परेति ।
दृष्टिर्विचित्रमतिमादधती विहाय
वस्तुक्रमं युगपदुल्लिखति प्रकारान् ॥ २१ ॥

ध्यानोपनीतमिदमुत्तरम्—उदयनेन शत्रून् पराभवितुं यदाग्नेयास्त्रं प्रयुक्तं तस्यैव ज्वालया जगत्कदर्थितमिव जायत इत्यर्थः । 'वीतिहोत्रो धनञ्जयः' इत्यग्निपर्यायेऽमरः । 'बर्हिः शुष्मा कृष्णवर्त्मा' इत्यपि अग्निपर्यायेऽमरः ।

जातम्—सामान्यम् समूहः, 'जातिर्जातञ्च सामान्यम्' इत्यमरः ॥

अहो—आश्चर्यम् । दहनक्रियालाघवम्–दाहकतानैपुण्यम् । उदयनोदीरिताग्नेयशस्त्रस्य—उदयनप्रयुक्तस्य आग्नेयास्त्रस्य । उदयनप्रयुक्ताग्नेयास्त्रस्य दहनक्रियानैपुण्यमेव दर्शयितुमग्रेतनं श्लोकं वक्ष्यति ।

सेनेति । ( पूर्वं ) सेना परकीयं सैन्यम् इति । ( तदनन्तरम् ) धूमपटली धूमराशिः इति ( ततश्च ) अङ्गारराजिः ज्वलदङ्गारपरम्परा इति ( ततश्च ) भस्मपरम्परा भसितसमूहः इति एवं प्रकारेण विचित्रमतिम् एकत्रैव वस्तुनि भिन्नप्रकारां बुद्धिपरम्पराम् आदधती बिभ्राणा दृष्टिः दर्शकजनदृक् वस्तुक्रमं विहाय वास्तविकीं वस्तुसत्तां परित्यज्य युगपत् एककालेन प्रकारान् प्रतीतिभेदान् उल्लिखति प्रकाशयति । एकस्मिन्नेव क्षणे सेनासन्निवेशदेशे पात्यमाना दृष्टिः प्रथमं सेनामात्मगोचरीकुरुते, तदनन्तरं तत्क्षणमेव दाहे प्रवृत्ते धूमपटलीमवगाहते ततश्च तत्रैव क्षणे वह्निमालामालोकते ततश्च तस्मिन्नेव क्षणेऽङ्गारराजिमध्यक्षयति, अथ तथैव तत्रैव क्षणे भस्मपरम्परामीक्षते, एवमेकत्रैव क्षणे नानावस्तुसम्बन्धस्याशक्यक्रियतया सा दृष्टिर्वस्तुक्रमं विहाय प्रतीतिभेदानेव केवलानुपस्थापयतीति भावः । दृष्टिः यस्मि-

परामर्श—आश्चर्य-जनक है यह उदयनके द्वारा चलायेगये आग्नेय अस्त्रकी शीघ्रकारिता ।

सेना, धूमपरम्परा, अग्निराशि फिर अङ्गारराजि इस प्रकार विचित्ररूपमें

( नेपथ्ये । )

अरे दुरात्मन्, अयं न भवसि ।

कथा—अयमसावुदयनेन दग्धे सकलबले समरमवतरन्नेक एव—

चार्वाकाणां सार्वभौमः समग्रा-
मुर्वीं क्रामन्नर्वता कर्बुरेण ।
सर्वैर्वन्द्यैर्विक्रमैर्वीरवर्गं
खर्वीकुर्वन्नेति दुर्वारगर्वः ॥ २२ ॥

---

न्नेव क्षणे सेनायां निपतति तस्मिन्नेव क्षणे तस्याः सेनायाः पञ्चापि सेनाधूमपटली-हुताशवीथीपुञ्जीभूताङ्गारचयभस्मपरम्परारूपाः अवस्था युगपदुत्पद्यन्ते, तत्तत्र दृष्टिः पञ्चापि वस्तूनि पृथक् पृथक् उपस्थापयितुमशक्यमाना केवलं पञ्च प्रतीतिभेदानेवोपस्थापयतीति रहस्यम् ॥ २१ ॥

अयं न भवसि—अयं मया हन्यसे ( अतो न जीवसीत्यर्थः ) इदं चार्वाकस्योदयनमुद्दिश्य कोपपूर्वकं वचनम् । चार्वाकस्य कोपश्च स्वपक्षसैन्यसंहारदर्शनकृतः ।

सकलबले—समस्ते सैनिकगणे । समरमवतरन्—युद्धभूमौ समागच्छन् । एकः—सहायकान्तररहितः ।

चार्वाकाणामिति । चार्वाकाणाम् नास्तिकभेदानाम् सार्वभौमः सम्राट् कर्बुरेण चित्रवर्णशालिना अर्वता अश्वेन समग्राम् समस्ताम् उर्वीं पृथ्वीम् क्रामन् सञ्चरमाणः सर्वैः वन्द्यैः प्रशंसनीयैः विक्रमैः पराक्रमप्रभेदैः वीरवर्गम् शूरसमुदयं खर्वीकुर्वन् लघूकुर्वन् दुर्वारगर्वः अदम्येन दर्पेण युक्तः एति रणभुवमागच्छति ।

---

देखनेवाली दर्शकोंकी आंखें वस्तुक्रमको छोड़कर केवल प्रकारका ही उल्लेख करती हैं ॥ २१ ॥

[ नेपथ्यमें ]

अरे दुरात्मा, अभी अभी तुम्हारा अन्त हो रहा है ।

कथा—उदयनके द्वारा समस्त सैन्यके दग्ध हो जानेपर एकाकी चार्वाक युद्ध क्षेत्रमें उतर रहा है—

यह चार्वाकोंका राजा चितकबरे अश्वपर चढ़कर समूची पृथ्वीका

परामर्शः—हा, कथमापतन्नव चार्वाकवीरोऽयमुदयनकरनुन्नशरभिन्नवर्मा प्राणानपहाय पतितः।

खलः पाटच्चरीं वृत्तिमवसानेऽपि नोज्झति।
असावसूनां व्रजतामादत्ते पश्यतावनम् ॥ २३ ॥

---

समस्तेषु स्वोपजीविषु नास्तिकमतेषु परास्तेषु सत्सु प्रधानभूतश्चार्वाकः शास्त्रार्थसङ्गरायोदयनमाह्वयमानः समरभुवमायातीत्यर्थः चार्वाकसिद्धान्तसंक्षेपो यथा—

"अत्र चत्वारि भूतानि भूमिवार्यनलानिलाः।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते ॥
किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत्।
अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः ॥
देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः।
मम देहोऽयमित्युक्तिः संभवेदौपचारिकी ॥
यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः? ॥
अग्निरुष्णो जलं शीतं शीतस्पर्शस्तथाऽनिलः।
केनेदं चित्रितं तस्मात्स्वभावात्तद्व्यवस्थितिः" ॥ २२ ॥

आपतन्—समरभूमिमागच्छन्। उदयनेति। उदयनस्य तदाख्यस्य चार्वाकशत्रोः करेण हस्तेन नुन्नैः प्रेरितैः क्षिप्तैर्बाणैर्भिन्नं विदारितं वर्म कवचं यस्य तथाभूतः। क्वचित् पुस्तके 'भिन्नमर्मा' इति पठ्यते, तत्र मर्म हृदयम्।

खल इति। खलः दुष्टस्वभावोऽसौ चार्वाकः अवसाने अन्तिमायामवस्थायामपि पाटच्चरीं वृत्तिम् चौर्यवृत्तिम् नोज्झति न त्यजति (यतः) व्रजताम् देह-

---

चक्कर काटता हुआ, सारे पराक्रमसे वीरोंको पराजित करता हुआ अतिगर्वसे पूर्णहोकर आरहा है ॥ २२ ॥

परामर्श—हाय, चार्वाकवीर आते ही उदयनके हाथसे छूटे हुए बाणसे मर्ममें आहत होकर प्राणोंको छोड़ चला।

यह दुष्ट मरनेके समयमें भी अपनी लुटेरेकी वृत्तिसे बाज नहीं आ

कथा—श्लाघनीयोऽयमीदृशः शूरस्य प्रतिशूरशरशीर्णस्य शरीरक्षयः। तथा हि—

**गृध्रैरुद्धूयमाने क्षरदसृगुदके पक्षपालीजलार्द्रा-**
**स्तोमे स्तोमावदातद्युतिभृति यशसा तायमाने विताने।**

---

मपहाय गच्छताम् प्राणानाम् शरीरान्तःसञ्चारिणां वायूनाम् पञ्चताधनम् पञ्चसंख्यकत्वरूपां सम्पदम् आदत्ते गृह्णाति। म्रियमाणोऽप्ययं चार्वाको दुष्टस्वभावतया परधनापहारं न त्यजति, यतो गच्छतामेषां प्राणानां पञ्चसंख्यकतामादाय स्वयं पञ्चतावान् ( मृतो ) भवति, प्राणानां पञ्चता पञ्चसंख्यकता चार्वाकेण स्वीया कृता स्वयमसौ पञ्चत्वं गत इति भावः। तत्त्वार्थस्तु चार्वाकः प्राणानामेकविधत्वमातिष्ठते नास्तिकदर्शनवत्पञ्चविधत्वमिति प्राणानां पञ्चविधत्वमसौ दुष्टतया हरतीति। 'चौरैकागारिकस्तेनदस्युतस्करमोषकाः। प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः॥' इत्यमरः॥ २३॥

ईदृशः—रणे जायमानः। प्रतिशूरशरशीर्णस्य—प्रतिपक्षवीरबाणक्षतस्य। शरीरक्षयः—देहपातः।

गृध्रैरिति। गृध्रैः स्वनामख्यातैः पक्षिभिः क्षरत् पतत् असृक् शोणितमेव उदकं जलं यतस्तादृशे पक्षपाल्यः पक्षप्रान्ताः एव जलार्द्राः तालव्यजनानि तासां स्तोमे संमूहे उद्धूयमाने सञ्चार्यमाणे सति, सोमः चन्द्रस्तद्वदवदातां शुद्धां द्युतिं कान्तिं बिभर्तीति सोमावदातद्युतिभृत् तादृशे विताने चन्द्रिकाख्ये वाससि यशसा कीर्त्या वितायमाने विस्तार्यमाणे सति, असौ चार्वाकोऽभिभुजङ्गः चार्वाकनामा भुवः उपपतिः संविभक्तः प्रकटीभूतः अनुरागः रुधिररक्तिमा अनुरागश्च यस्यास्तादृशीम्

---

रहा है, देखिये—जाते हुए प्राणोंकी पञ्चता ( पञ्चसंख्या ) रूप सम्पत्तिको यह ( स्वाधीन बनाके—स्वयं पञ्चत्व प्राप्त करके ) हड़प लेना चाहता है॥ २३॥

कथा—इस बहादुरका प्रतिपक्षी बहादुरके बाणों द्वारा इस प्रकार मारा-जाना प्रशंसनीय है।

गृध्रगण खूनसे आर्द्र पक्षोंको जलार्द्र तालव्यजनकी जगह चला रहे हैं, चन्द्रमाकी तरह स्वच्छ यशकी चांदनी तनी हुई है, इस स्थितिमें पृथ्वीका

चार्वाकोर्वीभुजङ्गः समरभुवमसौ संविभक्तानुरागा-

मङ्गेनालिङ्ग्य निद्रां निरवधिमधुना सेवते वीरतल्पे ॥२४॥

परामर्शः—भगवति, जानामि चार्वाकमरहाय सांप्रतमुदयनमसौ विश्वंभरा कामयते ।

कथा—एवंविधप्रकृतिरेव कुलपांसुला काश्यपी कस्य परिचयं प्रमाणयति ।

---

समरभुवम् युद्धभूमिरूपां वनिताम् अङ्गेन स्वीयवपुषा आलिङ्ग्य आश्लिष्य वीरतल्पे वीरशय्यायां युद्धक्षेत्रे अधुना निरवधि कदाप्यवसानमगमिष्यन्तीम् निद्राम् मृत्युरूपाम् सेवते । यथा कश्चित्कामुकः कस्यांचिद्वनितायामासक्तः स्वभृत्यान् जलाप्लावितं व्यजनं सञ्चारयितुमादिश्य अपरेण भृत्येन च वितानं स्वच्छं शीतातपाद्यपसारणाय विस्तार्य सुखदायां शय्यायां स्वप्रेयसीमाश्लिष्य स्वपिति तथायं चार्वाको नाम पृथिव्या भुजङ्गः गृध्रैः रक्तजलाप्लाविते पक्षरूपे व्यजने सञ्चार्यमाणे रणनिहिततया स्वच्छयशोरूपे धवले विताने च तायमाने रुधिररक्ततया प्रकटितरागां पृथिवीं नाम प्रेयसीमाश्लिष्य समरभूरूपवीरशय्यायां निरवधिं निद्रामाश्रयतीत्यर्थः । रूपकसङ्कीर्णा समासोक्तिरलङ्कारः । 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्' इति, 'धवित्रं तालवृन्तं स्यादुत्क्षिप्तव्यजनं च तत् । जलेनार्द्रं जलार्द्रा स्यात्' इति चामरवैजयन्त्यौ ॥ २४ ॥

विश्वम्भरा—पृथिवी ।

एवंविधप्रकृतिः—ईदृशस्वभावा । कुलपांसुला—कुलमालिन्यकरी व्यभिचारिणी । काश्यपी—पृथिवी । परिचयम्—प्राक्तनं सम्बन्धम् । प्रमाणयति—रक्षति ।

---

प्रेमी यह चार्वाक अनुराग ( रक्त ) की लालीसे भरी अपनी युद्धभूमि रूप प्रियाका अपने समस्त अङ्गोंसे आलिङ्गन करके इस वीरतल्प ( रणभूमि ) में सदाके लिये सो रहा है ॥ २४ ॥

परामर्श—भगवति, मुझे मालूम पड़ता है कि यह पृथ्वी अब चार्वाकको छोड़कर उदयनको चाहने लगी है ।

कथा—यही इस पृथ्वीका स्वभाव है, इसने अपने वंशको कलङ्कित किया है, बताओ इसने कब किसके परिचयकी रक्षा की है ? ।

पश्यैषा नरकप्रसूर्वसुमती गर्जद्गजग्रामणी-
पर्जन्यच्युतदानवारिसमरप्रावृण्निशीथे पुनः ।
बद्धाश्लेषमपास्य वीरशयने निद्रान्तमेकं पतिं
को जानात्वभिसृत्य गच्छति कया गत्या परं कामुकम् ॥२५॥

परामर्शः—क एष नाम न्यायाचार्यमुदयनं मूलराज्येऽभिषिञ्चति ।

पश्यैषेति । एषा नरकप्रसूः नरकासुरमाता वसुमती पृथिवी गर्जन्तः शब्दायमानाः ये गजग्रामण्यः गजराजास्तद्रूपेभ्यः पर्जन्येभ्यो मेघेभ्यः च्युतानि पतितानि दानवारि दानजलानि यत्र तादृशे समरप्रावृण्निशीथे युद्धरूपवर्षर्तुमध्यरात्रे पुनः विशिष्य वीरशयने वीरशय्यायां सङ्ग्रामभूमौ निद्रान्तं शयानम् बद्धाश्लेषम् कृतगाढालिङ्गनञ्च एकं प्राक्तनम् पतिम् अपास्य त्यक्त्वा परम् अन्यम् कामुकम् उपपतिम् कया गत्या अभिसृत्य गच्छति इति को जानातु ? अयमर्थः—यथा काचित्कुलटा दुरपत्यजनकतया घृणाभूमिश्च स्त्री गर्जद्घनायां प्रवृत्तवर्षायाञ्च वर्षर्तुरात्रौ शय्यायां सुखशयितं गाढमाश्लिष्यन्तं च पतिं परित्यज्य कमप्युपपतिं केनापि गुप्तेन प्रकारेणाभिसरति तद्वदियमपि नरकासुरप्रसूर्धरणी मदस्राविषु गजेषु गर्जत्सु युद्धरूपे निशीथे विशिष्य वीरशयनरूपायां समरभुवि शयानं धरणीं तामेवाश्लिष्यन्तं च प्राक्तनं पतिं परित्यज्य परं कामुकं विजेतारं नृपं कया गत्याऽभिसरतीति को जानातु ? कथमिव ज्ञायतां तदीयं तद्रहस्यं तस्या नितान्तदुष्टस्वभावत्वादिति भावः ॥ अत्र कुलटारमणीवृत्तान्तो धरण्यामारोप्यमाणः स्वदते ॥ २५ ॥

मूलराज्ये—प्रतिष्ठाराजपदे । प्रकाशप्रणेता वर्द्धमानः प्रकाशं नाम उदयनकृतकुसुमाञ्जलिग्रन्थस्य टीकां प्रणीयोदयनं प्रतिष्ठायामारोपितवानिति मनसिकृत्यायं प्रश्नः ।

नरकासुरकी जननी यह पृथिवी गरजते हुए गजराजरूप मेघके दानजलरूप जलकी वर्षा करते रहने पर, युद्धरूप बरसातकी रातमें आलिङ्गनसंलग्न एकपतिको वीरशयनपर सोते छोड़कर—कौन जानता है—किस गतिसे दूसरे कामुकके पास चली जाती है ॥ २५ ॥

परामर्श—यह कौन उदयनाचार्यको मूल राज्यपर अभिषिक्त कर रहा ?

कथा—एष परिशिष्टप्रकाशकर्वयिता बुधो वर्धमानः। तं किल चार्वाकस्य बन्धुरतिनृशंसः सोमसिद्धान्तः समरायाह्वयते।

परामर्शः—हन्त, आहूतकुपितो वर्धमानो मण्डलाग्रमुद्यम्य सोमसिद्धान्तमभिधावति।

कथा—वत्स, पश्य—

स्कन्धे व्यापारयन्नस्य कृपाणमुपवीतवत्।
वर्धमानो द्विजवरः संस्करोतीव वैरिणम्॥ २६॥

---

परिशिष्टप्रकाशकर्वयिता—कुसुमाञ्जलिपरिशिष्टप्रकाशनामकग्रन्थस्य रचयिता। वर्धमानः—गङ्गेशोपाध्यायसुतो वर्द्धमानोपाध्यायः। चार्वाकस्य बन्धुः—चार्वाकस्य यः सिद्धान्तः तादृशमेव सिद्धान्तं प्रचारयन् सोमसिद्धान्तोऽत्र चार्वाकबन्धुतयोक्तः, सोमसिद्धान्तानां चार्वाकसमानसिद्धान्तप्रचारपरता च—वादिविनोदे बौद्धाधिकारटीकायाञ्च शङ्करमिश्रस्य "सोमसिद्धान्तोऽपि चार्वाकरीत्या सङ्गमनीयः" इत्युक्त्या सिद्ध्यति। अतिनृशंसः—अतिक्रूरः। समराय—युद्धार्थम्। आह्वयते—स्पर्द्धयाऽऽकारयति। आहूतकुपितः—युद्धार्थमाहूयमानतया क्रुद्धः। मण्डलाग्रम्—खड्गम्। उद्यम्य—उत्तोल्य।

स्कन्धे इति। अस्य सोमसिद्धान्तनामकस्य रिपोः स्कन्धे अंसदेशे कृपाणं खड्गम् उपवीतवत् यज्ञसूत्रवत् व्यापारयन् स्थापयन् (खड्गेन सोमसिद्धान्तं खण्डयन्) द्विजवरो वर्धमानः वैरिणं शत्रुं सोमसिद्धान्तम् संस्करोति उपनयनसंस्कारं प्रापयतीव। अत्र संस्कर्त्तुर्वर्धमानस्य द्विजवर इति विशेषणं संस्कारकर्तृत्वयोग्यता-

---

कथा—यह परिशिष्ट प्रकाशके निर्माता वर्द्धमानोपाध्याय हैं, उन्हें भी यह चार्वाकका भाई अतिक्रूर सोमसिद्धान्त युद्धके लिये ललकार रहा है।

परामर्श—ललकार सुनते ही वर्द्धमान तलवार लेकर सोमसिद्धान्तका पीछा कर रहे हैं।

कथा—वत्स देखो—

सोमसिद्धान्तके कन्धे पर यज्ञोपवीतकी तरह तलवार डाल कर यह द्विजवर -वर्द्धमान शत्रुका संस्कार सा कर रहे हैं॥ २६॥

परामर्शः—नूनमसावस्य पाखण्डाखण्डलस्य ।

कण्ठे गृह्णाति, वक्षो विमृशति, वलते पार्श्वतो, मध्यभागे
शिलष्यत्यूरुं रुणद्धि, प्रणिपतति पदे वर्धमानासिवल्ली ।
इत्थं व्यक्तानुरागाप्यनुनयविमुखे सोमतन्त्रस्य पत्या-
वुत्पत्य स्वर्वधूटी प्रणयिनि धरणौ लज्जया मज्जतीयम् ॥२७॥

---

व्यञ्जनाय इवपदं च तेन खड्गपातद्वारा संस्कारे प्रक्रम्यमाणोऽपि वास्तविकम-संस्कृतत्वं गमयति ॥ २६ ॥

पाखण्डाखण्डलस्य—नास्तिकराजस्य ( नास्तिकानामिन्द्रस्य ) ।

कण्ठे गृह्णतीति । इयम् वर्द्धमानासिवल्ली वर्द्धमाननामकस्याचार्यस्य कृपाणलता कण्ठे गृह्णाति कण्ठमाश्लिष्यति, वक्षो विमृशति उरोदेशं परामृशति, पार्श्वतः पार्श्वदेशे वलते भ्राम्यति, मध्यभागे कटिप्रदेशे श्लिष्यति आलिङ्गति, ऊरुं जङ्घां रुणद्धि आवृणोति, पदे प्रणिपतति चरणे प्रणमति, इत्थं पूर्वोक्तप्रकारेण व्यक्तानुरागा प्रकटीकृतप्रणयापि ( वर्द्धमानासिवल्ली ) सोमतन्त्रस्य पत्यौ सोम-सिद्धान्ताचार्येऽनुनयविमुखे प्रतिकूलव्यवहारपरे उत्पत्य पृथ्वीप्रदेशादुत्प्लुत्य स्व-र्वधूटी प्रणयिनि दिव्याङ्गनाकामुके सति लज्जया प्रियजनानादरकृतया त्रपया धरणौ पृथिव्यां मज्जति निलीयते । यथा काचन रमणी स्वप्रेयांसं कण्ठे गृहीत्वा तद्वक्षो विमृश्य, तत्पार्श्वे भ्रान्त्वा, तदूरुमावृत्य, तत्कटिं समाश्लिष्य, तत्पादयोः पतित्वा, च प्रसादयति, एवं प्रेयस्या प्रसाद्यमानोऽपि प्रेयान्यदा तदनुनयमनादृत्य स्थानान्तरे स्थितायां कस्यांचनान्यस्यां नायिकायां प्रेम बध्नाति, तदा सा प्रेयसी प्रेयःकृतानादरलज्जितत्वाद् भुवं प्रवेष्टुं कामयते, तद्वदियं वर्द्धमानासिवल्ली सोमतन्त्र-

---

परामर्श—वर्द्धमानकी यह तलवार पाखण्डोंके राजा इस सोमसिद्धान्तके गलेसे लगती है, छाती छूती है, बगलमें जाती है । मध्यभागका आलिङ्गन करती है, जङ्घाको रोकती है, और चरणों पर गिरती है, इस प्रकार अनुराग प्रकट करके भी जब वह देखती है कि सोमसिद्धान्त रूप उसका प्रियतम उसके प्रति अनुराग-विमुख ही बना है, प्रत्युत देवाङ्गनाका प्रणयी हो रहा है तब वह तलवार उछलकर लाजसे पृथ्वीमें गड़ जाती है ॥ २७ ॥

अपि च ।

प्रौढच्छेदोच्छलितो व्योमगतः सोमतन्त्रकायार्धः ।
रूढैकबाहुराहुभ्रान्त्या मिहिरं विभीषयति ॥ २८ ॥

कथा—दृढासिप्रहारपतिते सोमसिद्धान्ते कापालिकनीललोहितमहा-

सिद्धान्तस्य कण्ठे वक्षसि पार्श्वयोर्मध्यदेशे जङ्घयोः पादयोश्च पतित्वा प्रकटीकृतशोणितरागा च जाता, अथापि सोमसिद्धान्तः खण्डितदेहः सन् भुवं विहाय स्वर्गं गच्छँस्तत्र प्राप्यायां दिव्ययोषित्यनुरागं प्रकटयतीति लज्जितेव साऽसिवल्ली धरणीं-प्रविशतीति भावः । छेद्यच्छेदनात्परं खड्गस्य धरणीप्रवेशोक्त्या प्रहारे प्रौढता व्यज्यते । अत्रानुरागवत्या दयितानादृतायाश्च वनिताया वृत्तान्तो वर्द्धमानासि-वल्ल्यामारोप्यमाणश्चमत्करोति । समासोक्तिरलङ्कारः सा चात्र लिङ्गव्यवहारोभय-साम्यकृता । स्वर्वधूटी–स्वर्गीया युवतिः, वधूटचिरण्टशब्दौ यौवनवाचिनौ ॥ २७ ॥

प्रौढच्छेदेति । प्रौढच्छेदेन दृढहस्तप्रहारकृतेन द्विधाकरणेन उच्छलितः उपरिक्षिप्तः अत एव व्योमगतः आकाशवर्त्ती सोमतन्त्रस्य कायार्द्धः तिर्यक्छिन्न-शरीरार्धभागः रूढ उत्पन्नः एको बाहुर्यस्य तादृशस्य राहोः भ्रान्त्या भ्रममुत्पाद्य मिहिरं सूर्यं विभीषयति भयं प्रापयति । दृढेनासिप्रहारेण तिर्यक्छिद्यमानः सोमतन्त्रस्य कायार्धभाग उपरि उच्छलन् व्योम गाहते, व्योमगतश्चासौ कायार्द्धः एकेन बाहुना युक्ततया रूढैकबाहुराहुभ्रमं जनयन् सूर्यस्य भयं जनयति, यो राहुर्बाहुराहित्येऽपि सूर्यमग्रसीत्सोऽधुनैकेन बाहुना युक्तः सूर्यस्य कां दशामुपपादयेदिति भयबीजं तस्य । स्कन्धे दृढे तिर्यक्प्रहारे जाते छिन्ने एकत्रभागे ऊर्ध्वरूपे एको हस्तस्तिष्ठे-दिति मनसिकृत्येययुक्तिः ॥ २८ ॥

दृढासिप्रहारपतिते—दृढेन असेः खड्गस्य प्रहारेण आघातेन पतिते भूमिगते ।

और—

जबर्दस्त आघातसे उछलता हुआ सोमसिद्धान्तका अगला भाग आकाशमें उड़ता है तो ऐसा लगता है मानो राहुको एक हाथ निकल आया है, उसे देखकर सूर्यको भय होता है ॥ २८ ॥

कथा—तलवारके दृढ प्रहारसे सोमसिद्धान्तके गिरते ही कापालिक,

भैरवभूतडामरोमामहेश्वरादयो रणादपक्रान्ताः। वत्स परामर्श, जातं निष्कण्टकम्। एते च (?) प्रतिबन्धसाधनसिद्धिभ्यां प्रतिसंस्कृताः कार्यायोजनधृतिसंहृतिपदप्रत्ययप्रभृतयः साधनप्रासादप्रदेशाः। तेषु पक्षतया सह विहरमाणो जनयिष्यसि भगवतीमनुमितिम्। अनया च संघटित पुरुषः प्राप्स्यति सिद्धिमिति। प्रवर्तते चेयमुत्तमचामीकरद्रवनिकरैरिवाम्बरपरभागमापूरयन्ती पितृप्रसूः।

यदपि सृजति पूर्ववन्न तापं
समयवशेन विलीनपश्चिमार्धः।

---

कापालिकेत्यादि सोमसिद्धान्तानुगामिन आचार्याः। प्रधाने सोमसिद्धान्ते खण्डिते तदनुगामिनां पलायनं प्रसिद्धव्यवहारम्।

निष्कण्टकम्—शत्रुसामान्याभावः।

प्रतिबन्धो व्याप्तिः। साधनसिद्धिः—पक्षधर्मता च ताभ्याम्। नाटके तु प्रतिबन्धनामा कञ्चुकी, साधनसिद्धिश्च चेटीति बोध्यम्।

प्रतिसंस्कृताः—प्रत्यवयवं प्रसाधिताः। साधनप्रदेशाः—हेतुरूपस्थानानि। कार्यायोजनादयो हेतव ईश्वरमनुमापयन्तीति कतिधोक्तम्। तेषु—साधनप्रदेशेषु। अनया—अनुमित्या। उत्तमेति। उत्तमस्य धात्वन्तरासङ्कीर्णस्य चामीकरस्य सुवर्णस्य यो द्रवः तन्निकरैः (रक्तपीतैः सूर्यकरैः) इव अम्बरपरभागम्—व्योमपरार्द्धम्। आपूरयन्ती—भृतं कुर्वती। पितृप्रसूः—सन्ध्या। 'सायं सन्ध्या पितृप्रसूः' इत्यमरः॥

यदपीति। यदपि यद्यपि समयवशेन कालमहिम्ना विलीनपश्चिमार्धः

---

नीललोहित, महाभैरव, डामर, उमामहेश्वर आदि युद्धसे भाग खड़े हुए। वत्स परामर्श, अब निष्कण्टक हो गया, प्रतिबन्ध और साधनसिद्धिने साधनप्रासादके प्रदेश कार्य आयोजन धृति संहृति पद प्रत्यय प्रभृतिको प्रतिसंस्कृत कर रखा है, उन प्रदेशोंमें पक्षताके साथ विहारकरके आप अनुमितिको जन्म देंगे, अनुमितिसे युक्त होकर पुरुष सिद्धि प्राप्त करेगा। उत्तम सुवर्णके द्रवसे आकाशको पूर्णसी करती हुई यह सायं सन्ध्या आ रही है—

यद्यपि समयवश सूर्यका आधा मण्डल डूब चुका है, अब वह पहले की

अवतमसमलीमसं तथापि
त्यजति न रागसमागमं पतङ्गः ॥ २९ ॥

( इति निष्क्रान्ताः सर्वे । )

इति मननसिद्धिर्नाम द्वितीयोऽङ्कः ।

---

पश्चिमसमुद्रनिमग्नार्धमण्डलः पतङ्गः सूर्यः पूर्ववत् पूर्वतनमध्याह्नकाल इव तापं न सृजति न जनयति, तथापि अवतमसमलीमसम् गाढान्धकारमलिनं रागसमागमम् सन्ध्याकृतरक्तिमसम्पर्कम् न त्यजति, समयवशाज्जलमग्नमण्डलार्धभागः सूर्यो यद्यपि पूर्ववन्न तपति, तथापि गाढान्धकारकृतमालिन्यपूर्णोऽस्य सन्ध्यारागः सम्प्रत्यपि सर्वात्मना न निवृत्त इत्यर्थः ॥ २९ ॥

इदमत्र बोध्यम्—इदं पद्यं पताकास्थानरूपम्, पताकास्थाने श्लेषः समासोक्तिः साधारणधर्मोपन्यासश्चेति त्रयः प्रकाराः संभवन्ति । तेष्वत्र यदपीत्यादि समासोक्त्या पतङ्गपदोपात्तस्य जीवस्य श्रवणमननसिद्धावपि परोक्षानुभवेन परोक्षस्यैव दोषत्रैराश्यस्य हानिः, तत्प्रयुक्ता च कियतां चन क्लेशानामपि हानिः सिद्ध्यति । ( सूर्ये पश्चिमार्धनिमग्ने सन्तापकताहानिवत् ) अस्यामपि स्थितौ अपरोक्षमोहजनितो रागादिर्न निवर्त्तते ( सूर्ये सान्ध्यरागवत् ) ।

अतः साक्षात्कारसिद्ध्यर्थं तृतीयाद्यङ्कावतार इति बिन्दुरपि सूच्यमानो बोध्यः ॥

इति मैथिलपण्डितश्रीरामचन्द्रमिश्रप्रणीते अमृतोदयप्रकाशे
द्वितीयाङ्क-प्रकाशः ।

---

तरह सन्तापप्रद नहीं रह गया है, अभी भी अन्धकारसे मलिन सन्ध्यारागकी लालिमाको सूर्य पूर्णरूपसे नहीं छोड़ रहा है ॥ २९ ॥

[ सबका प्रस्थान ]

मननसिद्धि नामक द्वितीय अङ्क समाप्त ।

## तृतीयोऽङ्कः

( ततः प्रविशति श्रद्धा निर्वेदश्च । )

निर्वेदः—हन्त हन्त, बिभ्रति विश्वमदभ्रवैभवे भगवति विश्वंभरे कमन्यमाश्रयाम्यगाधगर्धगदगृहीतः । तेन हि ।

जहिहि तरलां लक्ष्मीमेतां त्यजामरपादपान्

---

ततः प्रविशतीति । इयं तृतीयाङ्कप्रारम्भे विष्कम्भकसूचना, अत्र विष्कम्भके श्रद्धानिर्वेदयोर्वार्तालापद्वाराऽवान्तरकथा निर्देक्ष्यते । पूर्ववृत्ताभ्यामङ्काभ्यां वस्तुगत्या श्रवणमनने निरूपिते, ताभ्यां श्रवणमननाभ्यां संसारविषयालंप्रत्ययस्वरूपस्य आत्मावमानरूपस्य वा निर्वेदस्य या दृढभूमिकता सञ्जायते स एव विवेकः, विवेकिनस्तु आयतिमालोचयन्तः संसारसुखमपि कुपितफणिफणामण्डलच्छायप्रतिममित्यपजहतीति टीकादर्शनात् । निर्वेदे दृढभूमिके सति श्रद्धाविविदिषां नाम साक्षाच्चिकीर्षां जनयति, "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतेः । विविदिषाव्यापारितश्च पुरुषो निदिध्यासनादौ प्रवर्त्तते, सेयं निदिध्यासनपूर्वारम्भावस्थाऽनेन विष्कम्भकेण प्रस्तूयमाना बोध्या ॥

अदभ्रवैभवे—बहुलसामर्थ्यशालिनि । 'अदभ्रं बहुलं बहु' इत्यमरः । अगाधेति । अगाधो दुष्पारो यो गर्द्धः लोभः स एव गदः रोगः ( कष्टप्रदत्वाल्लोभे रोगोपचारः ) तेन गृहीतः बलात्स्वपात्रतां गमितः । अत्र गर्द्धो लोभो—विषयभोगेच्छा, सा द्विधा-तृष्णा कामश्च । तत्र प्रथमगर्धान्निर्वेदो वर्ण्यते—जहिहीत्यादिना । द्वितीयगर्द्धान्निर्वेदोऽपि वर्णयिष्यतेऽग्रे स्त्रीनिन्दाप्रकरणे ।

जहिहीति । हे हृदय, मदीयचित्त, तरलां स्वभावचपलां लक्ष्मीं जहिहि

---

[ श्रद्धा तथा निर्वेदका प्रवेश ]

निर्वेद—हन्त हन्त, समस्तवैभवसे पूर्ण विश्वम्भर भगवान् स्वयं जब विश्वका भरणकर रहे हैं, तब अगाध लोभसे अभिभूत होकर मैं किसका आश्रयण करूं ! इस लिये—

हृदय, इस चञ्चला लक्ष्मीका परित्याग करो, छोड़ो इन कल्पवृक्षोंको,

हृदय हतया किं ते चिन्तामणेरपि चिन्तया ।
जठरदहनज्वालाशान्त्यै यदि स्युरमी तदा
स्वपितुरुदधेरौर्वं निर्वापयेयुरुषर्बुधः ॥ १ ॥

श्रद्धा—वत्स, ज्वलितं जगज्जीवितमनेन तृष्णाज्वरैर्जनं जरयता दुर्जातेन जठरजातवेदसा । न जातु कोऽपि जन्तुरनेनानभिजातेनागोचरीकृतो जीवति । पश्य ।

---

परित्यज, एतानमरपादपान् कल्पवृक्षान् त्यज परिहर, हतया तुच्छया चिन्तामणेः अपि चिन्तया ते किम् ? त्वया चिन्तामणिचिन्तां कृत्वाऽपि न किमपि फलं प्राप्तुं शक्यमतस्तामपि त्यजेत्यर्थः । ननु जठरज्वालाशमनायाहं लक्ष्मीकल्पवृक्षचिन्तामणीनन्विष्यामीति किमिति त्वं मां वारयसीति चेत्तत्राह—जठरेति । यदि अमी लक्ष्मीकल्पवृक्षचिन्तामणयो जठरज्वालाशान्त्यै स्युः प्रभवेयुस्तदा स्वपितुः स्वेषामुत्पादकस्य उदधेः सागरस्य ( जठरे स्थितम् ) और्वम् उषर्बुधम् बडवानलम् निर्वापयेयुः शमयेयुः । ये स्वपितुरपि जठरे स्थितमग्निं न शमयितुमशक्नुवँस्ते तव जठरानलज्वालां शमयिष्यन्तीति कथा वृथाऽतो वृथा तदनुवृत्तिरिति भावः । "और्वस्तु वाडवो वडवानलः" इति "बर्हिः शुष्मा कृष्णवर्त्मा रोचिः शोचिरुषर्बुधः" इत्युभयत्राप्यमरः ॥ १ ॥

दुर्जातेन—दुष्कुलप्रसूतेन । जठरजातवेदसा—जठरानलेन । जरयता—जीर्णीकुर्वता । अनभिजातेन—दुष्कुलप्रसूतेन । अगोचरीकृतः—त्यक्तः । अत्र—जीवन् जनो न शक्नोति बुभुक्षालक्षणं गर्द्धं हातुम्, स हि गर्द्धो जठरानलसमनियतः, स चाजीवनमनुवर्त्तत एव, अत आजीवनं गर्धहानं कर्त्तुं शक्यमिति

---

चिन्तामणिकी चिन्ता भी तेरे लिये निरर्थक ही है । यदि लक्ष्मी, कल्पवृक्ष तथा चिन्तामणिमें जठरानलकी ज्वालाको शान्त करनेकी क्षमता होती तो ये अपने पिता समुद्रके जठरमें जलती हुई बड़वाग्निको ही सबसे पहले शान्त करते ॥ १ ॥

श्रद्धा—इस दुष्ट जठरानलने तृष्णाकी ज्वालासे जगत्को प्रज्वलितकरके जगत्के जीवनको दग्धकर दिया है । कोई भी ऐसा आदमी जीवित नहीं है जो इससे अछूता हो । देखो—

का मैत्री मरुता समं हुतभुजो भौमस्य यद्वायुना
स्पृष्टः प्रज्वलति प्रतीपवलनां धत्ते च वैश्वानरः ।
तथ्यं प्राणसमीरकोष्ठशिखिनोः सख्यं यतस्ताविमौ
विश्वेषामुदरं सहैव विशतः काले सहोत्क्रामतः ॥ २ ॥

किंच महदनादरबीजमिदम्, यदकिंचनता नाम, यया गृहीतो धनोपायमनुसरन्नवगृह्यते जनः । पश्य

---

श्रद्धायाः कथनम् । 'अभिजातः कुलीने स्यात्' इति मेदिनी । न अभिजातोऽनभिजातो दुष्कुलोत्पन्नः ।

का मैत्रीति । भौमस्य हुतवहो वह्नेः मरुतो बाह्यवायुना समं सह का कीदृशी मैत्री सखिता, यत् यस्या मैत्र्याः प्रभावात् वायुना स्पृष्टः वैश्वानरः अग्निः प्रज्वलति प्रतीपवलनाम् प्रतिकूलं ज्वलनं निर्वर्तितां च धत्ते धारयति । ( वायोरग्नेश्च सख्यं सुदृढं भौमेन वह्निना वायोः सख्यस्य तदाचारप्रमापितत्वात्, दृश्यते हि वायुस्पृष्टो वह्निः प्रज्वलन्, तत् प्राणवायुसहचरो जठरानलः प्राणेषु सत्सु न निर्वाणं यास्यतीति भावः, तदेव कथयति— ) प्राणसमीरकोष्ठशिखिनोः प्राणवायुजठरानलयोः सख्यं मैत्री तथ्यम् सम्यक्, यतस्ताविमौ प्राणवायुजठरानलौ विश्वेषां सर्वेषाम् प्राणिनाम् उदरम् सहैव उत्पत्तिकाले विशतः प्रविशतः काले विनाशावसरे च सहैव उत्क्रामतः निर्गच्छतः ॥ २ ॥

अनादरबीजम्—तिरस्कारस्य कारणम् । अकिञ्चनता—दारिद्र्यम् । यया—अकिञ्चनतया । धनोपायमनुसरन्—धनप्राप्तिवर्त्म अन्विष्यन् । अवगृह्यते—अनादरभाजनं भवति । अकिञ्चनताऽनादरप्रसूतोऽनादरादुद्विग्नो जनो धनोपाये प्रव-

---

वायुके साथ भौमवह्निकी कौनसी मैत्री है कि वायुके स्पर्शमात्रसे ही वह प्रज्वलित हो उठती है, और प्रतिकूल दिशामें बढ़ने लगती है । सच्ची दोस्ती तो है प्राणवायु तथा जठरानलमें, क्योंकि यह दोनों ही प्राणियोंके जठरमें एकही साथ आते तथा एक ही साथ वहाँसे अन्तमें निकलते हैं ॥ २ ॥

गरीबी बहुत बड़ा अनादरका स्थान है; इसीसे गृहीत होनेपर आदमी धनका उपाय करने लगता है और अपमानित होता है । देखो:—

कन्यारत्नं हयपरिवृढं नागराजं मणीनां
श्रेष्ठं दत्त्वा विबुधपरिषत्तोषिता सागरेण ।
धिग्दारिद्र्यं परिभवपदं यस्य दोषात्पुरारे-
र्मूर्ध्नि क्षिप्तो विबुधविघसग्रासपिण्डस्य खण्डः ॥ ३ ॥

निर्वेदः—जननि, गर्ध एव गर्हामूलममुष्य, न पुनरकिंचनता ।

---

चैतैवेति धनगर्धोऽपि न शक्यते परिहर्तुमिति भावः । धनाभावेऽनादरस्योदाहरणं वक्ष्यति—कन्यारत्नमित्यादिना श्लोकेन ।

कन्यारत्नमिति । सागरेण समुद्रेण कन्यारत्नम् रत्नस्वरूपां कन्याम् , हयपरिवृढम् अश्वश्रेष्ठम् उच्चैःश्रवसम् , नागराजम् ऐरावतम् , मणीनां श्रेष्ठं कौस्तुभञ्च दत्त्वा विबुधपरिषद् विष्णुशक्रादिदेवमण्डली तोषिता तुष्टीकृता । परिभवपदम् अनादरकारणम् दारिद्र्यम् निर्धनत्वम् धिक् , यस्य दारिद्र्यस्य दोषात् पुरारेः शिवस्य मूर्ध्नि मस्तके विबुधानाम् देवानाम् विघसो भोजनशेषः यः ग्रासपिण्डश्चन्द्रस्तस्य खण्ड एकदेशो बालचन्द्रः क्षिप्तः न्यस्तः । सर्वेषां देवानां धनशालितया तेभ्यः समुद्रः कन्यारत्नहयगजराजमणीन् दत्त्वा तान्सन्तुष्टान् कर्त्तुमचेष्टत, दरिद्राय च शिवाय देवभुक्तशेषचन्द्रखण्डः प्रदत्तः, दृश्यते हि लोके धनिकान् सन्तोषयद्भिर्गृहिभिर्दरिद्रेभ्यो धनिभुक्तोच्छिष्टखण्डः प्रदीयमानस्तदनुध्यायेत्थमत्रोक्तम् । 'विघसो यज्ञशेषभोजनशेषयोरपि' इति ह्यमरः ॥ ३ ॥

प्राणयात्रामात्रोपयुक्तो गर्धोऽशक्यपरिहारतया यावज्जीवनमवतिष्ठताम् , तथापि तदधिकधनगर्धस्तु शक्यक्रियः, अतश्च स परिहरणीयः, स एव परिभवस्य निदानम् , इत्याह—जननीति । गर्धः लोभः । शिवो दारिद्र्येण नानादृतोऽपि तु लोभेनानादृत

---

समुद्रने किसीको अपनी सुन्दरी कन्या दी, किसीको हाथी तथा अश्व दिया, किसीको मणिश्रेष्ठ कौस्तुभ दिया, इसप्रकार उसने देवमण्डलीको सन्तुष्ट किया । अनादरके बीज दारिद्र्यको धिक्कार है जिसके चलते उसी समुद्रने शिवजीके मस्तक पर देवोंका उच्छिष्ट अमृतका पिण्ड फेंक दिया ( चन्द्रमा डाल दिया )॥ ३ ॥

निर्वेद—महादेवके अपमानका कारण लोभही है, दरिद्रता नहीं ।

तथा हि।

जातिं विहाय कनके रमते पशूनां
भर्ता बिभर्ति शिरसा कृपणः कपर्दम्।
राजेति वक्रशशिनं तिलकीकरोति
तस्मादसौ परिभवास्पदमीश्वरोऽपि ॥ ४ ॥

श्रद्धा—वत्स, न तथा किमपीतरद्वस्तुगर्धगोचरो यथा स्त्रियो नाम।

---

इति भावः। लोभशीलतां तस्य समर्थयिष्यति वक्ष्यमाणश्लोकेन।

जातिमिति। पशूनां भर्त्ता पशुपतिः जातिं मालतीं विहाय त्यक्त्वा कनके धत्तूर-पुष्पे रमते सज्जते। ( अविवेकिनां स्वामी स्वजात्युचितं कार्यं परित्यज्य सुवर्णाञ्जने समासङ्गं बध्नातीति च ध्वन्यते ) कृपणः दरिद्रः शिवः शिरसा मस्तकेन कपर्दं जटाजूटं बिभर्त्ति धारयति। ( अतिलोभासक्तः वराटकमपि भाग्यासादितं शिरसि स्थापयतीति च ध्वन्यते ) राजा इति ब्राह्मणानां प्रभुः इति बुद्धया वक्रशशिनम् बालभावात् वक्रं चन्द्रम् तिलकीकरोति शिरोभूषणतां नयति ( राजायमिति मत्वा ततोऽपि धनागमसंभावनया चन्द्रं शिरसि धारयति बहु मानयति इति च ध्वन्यते ) तस्मात् लोभातिशयवशात् असौ ईश्वरः शिवोऽपि परिभवास्पदम् अनादरभूमि-र्जायते। न शिवस्य दारिद्र्येणानादरोऽपि तु ध्वन्यमानार्थप्रतीतलोभातिशयेनैव तस्यानादर इति भावः। 'सुमना मालती जातिः' 'धत्तूरः कनकाह्वयः' 'कपर्दको वराटे स्याज्जटाजूटे च धूर्जटेः' 'राजा प्रभौ नृपे चन्द्रे' इति च सर्वत्र कोषः ॥ ४ ॥

सम्प्रति धनगर्धादपि दुष्परिहरः कामगर्ध इति प्रतिपादयिष्यन्नाह—वत्सेति।

---

जाति ( जूही ) परित्याग करके कनक ( धत्तूरे ) के प्रति अनुराग रखते हैं, कृपणताके कारण कपर्द ( कौड़ी-जटाजूट ) सिरपर रखते हैं, राजा समझकर कुटिल चन्द्रमाको सिरपर धारण करते हैं इसी ( लोभसूचक कार्यों ) के चलते महादेवका भी अनादर होता है ॥ ४ ॥

श्रद्धा—वत्स, कोई भी दूसरी वस्तु उतना लोभजनक नहीं है जितना कि स्त्री।

निर्वेदः—शान्तम् । अविषयो विदुषामभिलाषस्य मानुषगणः । विशेषतस्तु—

अशुचिवपुषामेषां मध्येऽप्यमेध्यतमाः स्त्रियः
क्वचिदपि न हि श्रौते कर्मण्यमूरधिकुर्वते ।
विगलदसृजः पूयग्रन्थिप्ररूढदुरुद्धुर-
द्विपदकृमयो नित्यं यासां गलन्त्यधरव्रणाः ॥ ५ ॥

स्त्रियो हि सर्वातिशायिगर्धविषया इति भावः ।

शान्तम्—अलमुक्त्वापि स्त्रीनाम । मानुषगणान् विद्वांसो नैवाभिलषन्ति, तत्रापि स्त्रियस्तु विद्वद्भिर्नितान्तमुपेक्ष्यन्ते, तदेव समर्थयिष्यति स्त्रीकुत्सनद्वारा ।

अशुचिवपुषामिति । अशुचिवपुषाम् अमेध्यशरीराणाम् एषां मानुषाणां मध्येऽपि स्त्रियः अमेध्यतमाः अतिशयेनापवित्राः, हि यतः अमूः स्त्रियः क्वचित् कस्मिँश्चित् अपि श्रौते अतिसाध्ये कर्मणि यागादौ न अधिकुर्वते अधिकारं धारयन्ति । स्त्रीणां वेदाध्ययनवर्जनाच्छ्रौतेषु कर्मस्वनधिकारः साधितो मीमांसासु । यासां स्त्रीणाम् विगलदसृजः रक्तस्रावकाः ( अपि च ) पूयग्रन्थेः रुधिरग्रन्थिसकाशात् प्ररूढा उत्पन्नाः दुरुद्धराः कष्टेन निष्कासयितुं शक्याः द्विपदाः मनुष्यरूपाः कृमयः कीटाः येभ्यः तथोक्ताः अधरव्रणाः नीचैःस्थिता व्रणाः: योनिदेशाः नित्यम् अनारतं गलन्ति स्रवन्ति । स्त्रीणां योनेः रक्तग्रन्थेः सकाशादेव पुरुषा जायन्ते ते च कष्टेन ततो निःसरन्ति, कृमयश्च त एवात्रोक्ताः, स्त्रीणां पुरुषदर्शने कामतन्त्रोक्तः स्विन्नभाव एवात्र गलनतयोक्तः, सर्वैस्तैस्तासाममेध्यतमत्वं समर्थितं बोध्यम् ॥५॥

निर्वेद—शान्त । विद्वानोंको मनुष्यपर लोभको नहीं केन्द्रित करना चाहिये, उसमें भी विशेषतः स्त्रियोंपर ।

अपवित्र शरीर मनुष्योंमें भी स्त्रियाँ अत्यन्त अपवित्र होती हैं, इसीलिये उन्हें किसी प्रकारके वैदिक कार्यमें अधिकार नहीं दिया गया है । रक्तस्रावी पूयकी गुठलीमें पैदा होनेवाले द्विपद कीटोंसे पूर्ण जिनके अधोभागवर्त्ती व्रण बराबर बहते ही रहते हैं ॥ ५ ॥

श्रद्धा—वत्स, प्रबलयोरनयोरर्थकामयोर्विरामाय किमपि यतते श्रुतिः।

निर्वेदः—मातः, तदभिसंधाय दुहितरं प्रमितिमर्पयति स्म पुरुषाय।

श्रद्धा—वत्स निर्वेद, जानासि पुरुषमाश्रित्य वर्तते श्रौती प्रमितिः।

निर्वेदः—परैः प्रसह्यापहृतामपि प्रमितिमान्वीक्षिकी प्रत्याहृत्य पुरुषसादकरोत्। परं तु—

**परबलपरिमर्दायासतान्तां नितान्तं**

**पुरुषमुपगतान्तां कापि शङ्का पिशाची।**

---

अभिसन्धाय—गूढमाशयं मनसिकृत्य। दुहितरम्—सुताम्। (अत्र श्रुतिजन्यतया प्रमितेः श्रुतिपुत्रीत्वमुक्तं बोध्यम्)।

पुरुषमाश्रित्य वर्त्तते—पुरुषेण सङ्गता।

परैः—बौद्धादिभिः। अपहृताम्—अपनीताम्। (बौद्धाः श्रुतेः प्रामाणिकतामपलपन्तीति ते प्रमित्यपहारिणः कथिताः) आन्वीक्षिकी—तर्कविद्या। तर्कविद्या श्रुतेः प्रामाण्यं साधयतीति साऽत्र प्रमितेः प्रत्याहारकतयोक्ता) पुरुषसात्—पुरुषाधीनाम्।

परन्तु—तर्कविद्या बौद्धैरपहृतां तां प्रमितिं पुनः प्रत्याहृत्य पुरुषसात्कृतवतीति सत्यं किन्तु—

परबलेति। नितान्तं प्रचुरमात्रया परेषां शत्रूणां बलैः सैन्यैः (बौद्धादिप्रतिपक्षप्रयुक्तयुक्तिसहस्रैरिति तत्त्वपक्षे) यः परिमर्दः (परस्यान्यपुरुषस्य बलेन परिमर्दो गाढालिङ्गनम् चेति कामिनीपक्षे) तत्र यः आयासः शारीरिकः श्रमस्तेन तान्ताम् ग्लानिमुपगताम् तां प्रमितिम् पुरुषमुपगतां प्राप्तां सतीं कापि कुतोऽपि देशादक-

---

श्रद्धा—वत्स प्रबल अर्थलोभ तथा कामकी निवृत्तिके लिये क्या श्रुति कुछ प्रयासकर रही है।

निर्वेद—मातः, इसी अभिप्रायसे श्रुतिने अपनी पुत्री प्रमिति पुरुषको अर्पितकी है।

श्रद्धा—वत्स, तुम जानते हो प्रमिति पुरुषके आश्रयमें है?

निर्वेद—हाँ, शत्रुओं द्वारा बलपूर्वक हरी गई प्रमितिको आन्वीक्षिकीने

अविशद्वशमस्या येन सर्वं शरीरं
प्रभवति न कथंचित्कर्मणः साधनाय ॥ ६ ॥

पिशाचावेशविवशां प्रमितिं तनयां श्रुते ।
न श्रद्दधाति पुरुषः प्रमाणयतु तां कुतः ॥ ७ ॥

स्मादागता शङ्का सन्देह एव पिशाची अविशत् स्वविषयमकरोत् । येन पिशाच्या-वेशेन हेतुना अस्याः प्रमितेः सर्वम् शरीरम् विवशम् अस्वाधीनम् सत् कथञ्चित् केनापि प्रकारेण कर्मणः पुरुषानुरञ्जनव्यापारस्य साधनाय अनुष्ठानाय न प्रभवति न क्षमते । यथा कस्याश्चित् कामिन्याः केन चित्पुरुषेण गाढमालिङ्गितायाः अकस्मात् पिशाचीगृहीतायाश्च सत्या अवयवं शरीरम् कस्मैचिदपि कर्मणे नोत्सहते, तथैव बौद्धैः प्रबलतर्कद्वारा युध्यमानैः कृतेनापहारेण जनितैः श्रमैः खिन्नायाः सन्देहपिशाचीगृहीतायाश्चास्याः प्रमितेः पुरुषसंगमे जायमानेऽपि ( अनुमित्या पुरुषसंशयेऽश्रतो दूरीकृते सति पुरुषः प्रमितिसमीपम् गच्छति तथापि ) अवशशरीरा सा ( अथ च संदेहकदर्थिता ) पुरुषानुरञ्जनरूपे कर्मणि नोत्सहते इत्याशयः ॥ ६ ॥

पिशाचेति । पिशाचावेशेन शङ्कापराहतिरूपेण पिशाचाक्रमणेन विवशाम् पराधीनाम् श्रुतेः तनयां प्रमितिम् पुरुषः न श्रद्दधाति श्रद्धादृष्ट्या न पश्यति, ततश्च ( श्रद्धादृष्ट्याऽदृष्टाम् अत एव चाविश्वस्ताम् ) ताम् प्रमितिम् पुरुषः कुतः प्रमाणयतु प्रमाणत्वेन स्वीकरोतु । श्रद्धया प्रामाण्यं जननीयमिति श्रद्धाभावे प्रामाण्याभावः स्वतः सिद्ध इति भावः ॥ ७ ॥

शत्रुओंसे छीनकर पुरुषके जिम्मेकर दिया है, परन्तु—शत्रुओंके सैन्य ( युक्ति ) के आक्रमणसे खिन्न प्रमिति पुरुषके समीप जाकर भी शङ्कापिशाचीसे मुक्त नहीं हुई है, जिस शङ्काके कारण उसका समस्त शरीर अकार्यंकर हो रहा है, किसी कर्मके साधनके योग्य वह नहीं रह गया है ॥ ६ ॥

इस प्रकार शङ्कारूप पिशाचके आवेशसे पूराभूत श्रुतिपुत्री प्रमितिपर पुरुषकी श्रद्धा ही नहीं होती है, वह उसे कैसे प्रमाण मानें ? किसप्रकार उसपर विश्वास करे ॥ ७ ॥

पठति चायमतिमात्रप्रवृद्धमहामोहः पुरुषो दुरक्षराणि ।

'अपरिचिततातजन्मा श्रुतिरभिजातिं न चेद्भजते ।
कथमनभिजातवंश्यां प्रमितिं पुरुषः प्रमाणयतु ॥८॥' इति ।

श्रद्धा—ततस्ततः ।

निर्वेदः—ततो भगवती श्रुतिरान्वीक्षिकीमादिष्टवती—'घटय पक्षतया परामर्शम् । प्रभवति हि दुर्घटघटने त्वदनुशिष्टानां कथानां प्रथमा' इति ।

श्रद्धा—तत्किं घटितः पक्षतया परामर्शः ।

---

अतिमात्रेति । अतिमात्रम् अत्यन्तम् प्रवृद्धः वृद्धिगतो महामोहः यस्य तथाभूतः अयं पुरुषः दुरक्षराणि दुष्टवचनानि पठति व्याहरति ।

अपरिचितेति । अपरिचितम् अज्ञातम् तातस्य जन्म यस्याः सा तथोक्ता श्रुतिः चेत् यदि अभिजातिम् सत्कुलप्रसूतत्वम् न भजते, तदा अनभिजातवंश्याम् अकुलीनवंशोद्भवाम् प्रमितिम् पुरुषः कथं प्रमाणयतु केन प्रकारेण प्रमाणं मन्यताम् । यस्याः प्रमितेर्माता श्रुतिर्येन परमात्मना जनिता तस्य जन्म कुत इति न ज्ञातं केनापि, तस्यां मातामहकुलाप्रसिद्ध्याऽकुलीनां प्रमितिं पुरुषः कथं प्रमाणयत्वित्यर्थः ॥ ८ ॥

दुर्घटघटने—वियुक्तजनसङ्गमने, असाध्यसाधने च । (अत एव साऽत्र पक्षतापरामर्शयोः सङ्गमे व्यापारिता सती साफल्यमासादयेत्) त्वदनुशिष्टानाम्—त्वया

---

पुरुष का मोह बहुत बढ़ गया है, वह बराबर यही बुरी बात दुहराता रहता है :—

"अज्ञातकुलशील पिता (परमेश्वर) की पुत्री श्रुति स्वयं जब कुलशुद्धिका दावा नहीं कर सकती है, तब अकुलीनमातासे उत्पन्ना प्रमिति पर पुरुष किस-प्रकार प्रामाण्य-विश्वास करें ॥ ८ ॥

श्रद्धा—इसके बाद ?

निर्वेद—इसके बाद भगवती श्रुतिने आन्वीक्षिकीसे कहा—पक्षतासे परामर्शको मिला दो । तुम्हारी आज्ञाकारिणी प्रथमा कथा कठिन से कठिन कार्य भी सम्पन्न कर सकती है ।

श्रद्धा—तो क्या उसने पक्षतासे परामर्श को मिला दिया ?

निर्वेदः—न केवलं घटितो, यावदनुमितिं नाम कन्यकामजनयत्। तामिमां दारिकाम्, अन्तःकरणाय बादरायणी, बुद्धिसत्त्वाय कापिली, चिदालयसंतानाय सौगतीसंहिता दातुमारभते। गौतमी काणादी जैमिनीया च पुरुषसात्कर्तुमीहन्ते।

श्रद्धा—अपि नाम सिद्ध्यै संपद्येत पुरुषानुमित्योः संगतम्।

( प्रविश्य। )

---

आन्वीक्षिक्या स्वीकृतानाम्। कथानाम्—वादजल्पवितण्डानामकानाम् तिसृणाम्। प्रथमा–वादकथा। तल्लक्षणम्—'प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः' इति गौतमसूत्रे उक्तम्। इयं तत्त्वबुभुत्सोः कथा मन्यते।

दारिकाम्—कन्यां नाम्नानुमितिम्। 'अन्तःकरणाय बादरायणी' इत्यस्य दातुमारभते इत्यग्रे कथयिष्यमाणेनान्वयः, "अनुमितिरन्तःकरणस्य वृत्तिः" इत्युपनिषदनुसारिणां सिद्धान्तोऽत्र वर्णयितुमिष्टः। 'बुद्धितत्त्वाय कापिली' 'कापिली साङ्ख्यविद्या अनुमितिं बुद्धितत्त्वाय दातुमारभते' इति योजना। सांख्ययोगशास्त्रानुसारेण अनुमितिः प्रकृतिपरिणामस्य बुद्धितत्त्वस्य वृत्तिः स्वीक्रियते तदनुसारेणेयमुक्तिः। 'चिदालयसन्तानाय' दातुमारभत इति पूर्ववत्, तत्र प्रवृत्तिविज्ञानसन्ततौ अन्तर्भूताऽनुमितिरियमालयविज्ञानसन्ततौ समवैतीति बौद्धशास्त्रसिद्धान्तोऽनुरुध्यमानो बोध्यः। नैयायिका वैशेषिका मीमांसकाश्च पुरुषाणामेव गुणोऽनुमितिरिति स्वीकुर्वते तदनुरोधेन—"गौतमी काणादी जैमिनीया च पुरुषसात्कर्त्तुमीहन्ते" इत्युक्तम्।

---

निर्वेद—केवल मिला ही नहीं दिया, अनुमितिनामक कन्या भी पैदा हो गई, उस कन्याको बादरायणी विद्या अन्तःकरणके, कापिली विद्या बुद्धिसत्त्वके, और सौगतीसंहिता चिदालयसन्तानके लिये देना चाहती हैं, गौतमी तथा काणादी एवं जैमिनीया विद्या चाहती हैं कि अनुमिति पुरुषके अधिकारमें रहे।

श्रद्धा—पुरुष और अनुमिति का मिलन सिद्धिके लिये होता तो ( बड़ा अच्छा होता )।

( प्रवेशकरके )

विविदिषा—भगवति श्रद्धे, पुरुषस्त्वां द्रष्टुमिच्छति।

श्रद्धा—पुरुषः प्रथमं तथा भजमानामपि मां निराकरोत्। अधुना मम केन हेतुना वदनालोकनमाहते शठः।

विविदिषा—भगवति, सांप्रतमनुमित्या सह संगतः पुरुषस्तस्या जल्पितेन बोधितः श्रौतीं प्रमितिं भवतीं च बहु मन्यते। शशाम किलानुमितिजल्पितेन श्रौतप्रमितेः पिशाचावेशः, पुरुषस्य च श्रुतावनभिजातभ्रमः।

श्रद्धा—कथय कीदृशमनुमितिजल्पितम्।

विविदिषा—एवमाह पुरुषसंगतानुमितिः—

'भुवनघटनभङ्गौ निर्मिमाणस्य यस्य
प्रभवति परमाणुप्रेरणाय प्रयत्नः।

---

भजमानाम्—आश्रयन्तीम्। निराकरोत्—अपमतवान्। शठः-दुष्टः।

अनभिजातिभ्रमः—अकुलीनताभ्रमः।

भुवनेति। भुवनानां त्रयाणां चतुर्दशानां वा जगताम् घटनभङ्गौ सृष्टिप्रलयौ निर्मिमाणस्य कुर्वतः यस्य परमात्मनः प्रयत्नः परमाणूनाम् प्रेरणाय संयोगाय वियोगाय च प्रभवति, विधिवचनानाम् लिङादिघटितवेदवाक्यानाम् विधातुः तस्य

---

( प्रवेश करके )

विविदिषा—भगवति श्रद्धे, पुरुष तुम्हें देखना चाहते हैं।

श्रद्धा—प्रथमावस्थामें मैं पुरुषकी उसतरह सेवा करती थी, तब तो उसने मुझे भगा दिया, क्या कारण है कि वह शठ अब मुझे देखना चाहता है।

विविदिषा—भगवति, इन दिनों पुरुष अनुमितिसे संयुक्त है, अनुमितिके कथनसे पुरुष समझ गया है और अब वह प्रमिति तथा तुम्हारा बड़ा आदर करता है। अनुमितिके कहने भरसे ही प्रमितिका भूतावेश शान्त होगया, और पुरुषका श्रुतिके संबन्धमें अकुलीनत्व-संशय भी दूर होगया।

श्रद्धा—कहोतो—अनुमितिने क्या कहा?

विविदिषा—पुरुषसे मिलित अनुमिति ने कहा :—

संसार की उत्पत्ति तथा संहार करने वाले जिस ( परमात्मा ) की चेष्टा सृष्टिके आदिकालमें परमाणुओंको ( परस्पर ) मिलनेके लिये प्रेरित करती

परिणतिहितहेतौ विश्ववृत्तिं विधत्ते
विधिवचनविधातुस्तस्य पुंसो नियोगः ॥ ९ ॥

अपि च।

यस्य त्रैगुण्यशक्तिद्रढिमभरवतः सिद्धिलिङ्गानि कार्यं
वाक्यं संख्याविशेषश्रुतिपदधृतयः प्रत्ययायोजने च।
कर्ता कार्यस्य धर्ता भुवननिगमयोः संप्रदायप्रवक्ता
विश्वस्याश्वासमूलं स जयति पुरुषश्चेतनाराशिरेकः ॥ १० ॥

पुंसः नियोगः आदेशः परिणतिहितहेतौ परिणामसुखे यज्ञादौ विश्वेषां सर्वेषां वृत्तिं प्रवृत्तिं विधत्ते। यो जगन्निर्मातुकामः सिसृक्षावशात् परमाणून्संयोजयति, समस्तं विश्वं प्रलयेन योजयिष्यंश्च संजिहीर्षावशादेव परमाणून् विश्लेषयति तदाज्ञैव लिङादिघटितवेदवाणी, सा समस्तमपि विश्वं स्वहितसाधने यज्ञादौ प्रवर्त्तयतीत्यर्थः ॥ ९ ॥

यस्येति। त्रयो गुणाः बुद्धीच्छाप्रयत्ना एव त्रैगुण्यम् ( चतुर्वर्णादित्वात्स्वार्थे ष्यञ् ) तस्य त्रैगुण्यस्य द्रढिमा नित्यता तस्य भरः भारः सर्वात्मनाऽवस्थितिः तद्वतो यस्य पुरुषस्य-कार्यं जन्यभावः, वाक्यं वेदादिवाक्यम् संख्याविशेषः सर्गादिकालिकपरमाण्वादिसंख्या, श्रुतिः वेदः, पदं व्यवहारः, धृतिः ब्रह्माण्डादिधारणम्, प्रत्ययः आश्वासः, आयोजनम् परमाणुषु आरम्भजनकं सृष्ट्यादिकालिकं कर्म एतानि सिद्धेः अस्तित्वस्य लिङ्गानि अनुमापकानि ( भवन्ति ) अथ च यः कार्यस्य दृश्यप्रपञ्चस्य कर्त्ता, भुवननिगमयोः संसारस्य वेदस्य च धर्त्ता, संप्रदायस्य प्रवक्ता विश्वस्य जगतः आश्वासस्य विश्वासस्य मूलः ( आस्थाविषयः ) स चेतनाराशिः

---

है, लिङादिघटित वेदवचनोंके निर्माता उस पुरुषकी आज्ञा ( विधिवाक्य ) ही परिणामसुख यज्ञादिमें सबोंकी प्रवृत्तिको उत्पन्न करती है ॥ ९ ॥

नित्यज्ञान नित्यइच्छा तथा नित्यप्रयत्नशाली सर्वात्मना नित्य जिसपुरुषकी सिद्धिके हेतु—कार्य, वाक्य, संख्या, श्रुति, पद, धृति, प्रत्यय एवं आयोजन हैं, ऐसा कार्यमात्रका कर्त्ता, संसार तथा वेदका धर्त्ता एवं वेदका वक्ता, संसारका आश्रय एवं चैतन्यका आश्रय वह पुरुष सर्वोत्कृष्ट है ॥ १० ॥

श्रद्धा—घटितः प्रमित्यानुमित्या च पुरुषः। सांप्रतमत्रसरोऽस्य सिद्धिसंगमाय।

---

चैतन्यसमूहात्मकः एकः अद्वितीयः पुरुषो जयति सर्वोत्कर्षेण वर्त्तते ( जयत्यर्थेन च नमस्कार आक्षिप्यते इति तं प्रति प्रणतोऽस्मीति लभ्यते ) अत्र श्लोके ईश्वरस्य स्वरूपं तत्प्रमाणं च न्यायदृष्ट्या निरूपितम्। 'त्रैगुण्यशक्तिद्रढिमभरवतः' इत्यनेन ईश्वरस्य बुद्धिप्रयत्नेच्छानां नित्यत्वं तेषां च सर्वात्मनेश्वर एवावस्थानं चोक्तम्। कार्यं वाक्यं सङ्ख्याविशेषः, श्रुतिः, पदं धृतिः, प्रत्ययः, आयोजनं चेत्येतानि यस्य सिद्धेः लिङ्गानि एतेनेश्वरसाधकानुमानलिङ्गानि विवक्षितानि, तथा चोक्तं न्यायकुसुमाञ्जलौ—

"कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः।
वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः॥" इति।

अत्रोक्तैः कार्यादिभिः ईश्वरस्यानुमानं क्रियते। यथा—(१) कार्यम्—क्षित्यादिकं सकर्त्तृकम् कार्यत्वात् घटवत्। सकर्त्तृकत्वञ्च उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वम्। (२) आयोजनम् कर्म। सर्गाद्यकालिकद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं चेतनप्रयत्नपूर्वकम् कर्मत्वात् अस्मदादिशरीरकर्मवत्। (३) धृतिः ( गुरुत्ववतां पतनाभावः ) ब्रह्माण्डादिपतनप्रतिबन्धकीभूतप्रयत्नवदधिष्ठितम् धृतिमत्त्वात् वियति विहङ्गमधृतकाष्ठवत्। ( धृत्यादेरित्यत्रादिपदं विनाशग्राहकम् ) (४) विनाशः ब्रह्माण्डादिप्रयत्नवद्विनाश्यम् विनाशित्वात् पाट्यमानपटवत्। (५) पदम्—( पद्यतेऽनेनेति व्युत्पत्त्या पदं व्यवहारः ) पटादिसंप्रदायव्यवहारः स्वतन्त्रपुरुषप्रयोज्यः व्यवहारत्वात् आधुनिकलिप्यादिव्यवहारवत्। (६) प्रत्ययः—( प्रत्ययः प्रामाण्यम् ) वेदजन्यज्ञानं कारणगुणजन्यं प्रमात्वात् प्रत्यक्षादिप्रमावत्। (७) श्रुतिः—वेदः पौरुषेयः वेदत्वात् आयुर्वेदवत्। (८) वाक्यम्—वेदः पौरुषेयः, वाक्यत्वात् भारतवत्। (९) संख्याविशेषः—द्व्यणुकपरिमाणं संख्याजन्यम् परिमाणप्रचयाजन्यत्वे सति जन्यपरिमाणत्वात् तुल्यपरिमाणकपालद्वयारब्धघटपरिमाणात् प्रकृष्ट-

---

श्रद्धा—पुरुष प्रमिति एवं अनुमितिसे संयुक्त कर दिया गया, अब अवसर हुआ है कि उसे सिद्धिसे संयुक्त कराया जाय।

निर्वेदः—भगवति, भगवान्पतञ्जलिः संयमदुहितुः सिद्धेः पुरुषसंगमाय व्यवस्यति।

विविदिषा—भगवति श्रद्धे, सखे निर्वेद, सर्वे वयमुपसर्पाम पुरुषम्।

( इति निष्क्रान्ताः सर्वे । )

इति विष्कम्भकः।

---

तादृशकपालत्रयारब्धघटपरिमाणवत्। अणु परिमाणं च न परिमाणजनकम् नित्यपरिमाणत्वात्। एवञ्च द्व्यणुकपरिमाणहेतुपरमाणुनिष्ठद्वित्वसंख्या च नास्मदाद्यपेक्षाबुद्धिजन्याऽतस्तदानीन्तनापेक्षाबुद्धिरीश्वरस्यैव मन्यते ॥ 'कर्त्ता कार्यस्य धर्त्ता भुवननिगमयोः'—'द्यावाभूमी जनयन्देव एको विश्वस्य कर्त्ता भुवनस्य गोप्ता' इत्यभिप्रायेणोक्तः। विश्वस्याश्वासमूलम्—यस्मिन् परमेश्वरे भ्रमप्रमाद विप्रलिप्सादिदोषराहित्येन निरवधिकरुणासिन्धुतया चास्थां कृत्वा तद्वचसि विधिवाक्ये विश्वासं कृत्वा विश्वमैहिकामुष्मिकश्रेयसे यततेऽतोऽसौ विश्वस्याश्वासमूलतयोक्तः ॥ १० ॥

पतञ्जलिः—अत्र योगशास्त्रप्रवर्त्तकः।

विष्कम्भकः—

"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥"

स चायं शुद्धविष्कम्भकः, उत्तमपात्रप्रयोजितत्वात्।

अत्र—स्वरूपफलभागी स्वामी पुरुष उपनायकः। तदितिवृत्तं प्रासङ्गिकं व्यापकञ्चेति पताकास्थानम्—'व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते' अत्र प्रकरी पतञ्जलिवृत्तम् अल्पकालानुवर्त्तित्वात्।

---

निर्वेद—भगवति, भगवान् पतञ्जलि संयमकी पुत्री सिद्धिसे पुरुषको संयुक्त करनेका प्रयास कर रहे हैं।

विविदिषा—भगवति, श्रद्धे, सखे निर्वेद, हम सभी पुरुषके पास चलें।

[ सबका प्रस्थान ]

( विष्कम्भक समाप्त )

( ततः प्रविशति पतञ्जलिः । )

पतञ्जलिः—प्रसादयति बुद्धिमसौ चतुर्दशो निशामुहूर्तः ।

परिणतनिशाकेशस्तोमे प्रभापलितोन्मुखे
भजति तमसश्चक्रे चक्रीवदङ्गपिशङ्गताम् ।
अपगतगुणद्वन्द्वा सत्त्वे स्थिता समयक्रमा-
न्मलिनविषयाकारस्पर्शं विमुञ्चति चेतना ॥ ११ ॥

---

मुहुर्मुहुर्विघ्नैः प्रतिहन्यमानः फलानुकूलो व्यापारः प्रत्याशाऽप्यत्र । पताका प्राप्त्याशयोर्योगाद् गर्भसन्धिः । प्रकरीनियताप्त्योः सङ्गमादत्र विमर्शसन्धिरपीति नाटकमर्मविदो विभावयन्तु ।

बुद्धिं प्रसादयति चेतनां निर्मलीकरोति । चतुर्दशो निशामुहूर्त्तः रात्रिः पञ्चदशभिर्मुहूर्त्तैर्घटिता तेन तस्याश्चतुर्दश उपचरमः ब्राह्मो मुहूर्त्तः ।

परिणतेति । परिणता परिपक्वा समाप्तप्राया निशा रात्रिः एव केशस्तोमः कचसमुदायो यस्य तादृशे तथोक्ते, अपि च प्रभा अरुणकरसम्पर्ककृता द्युतिः एव पलितम् जराकृतं शुक्लत्वं तदुन्मुखे तमसश्चक्रे अन्धकारसमूहे चक्रीवदङ्गपिशङ्गताम् गर्दभशरीरपिङ्गलवर्णतां भजति प्राप्नुवति सति अपगतगुणद्वन्द्वा रजस्तमोरूपयुगलगुणसंबन्धरहिताऽत एव सत्त्वे नाम प्रकाशके गुणभेदे स्थिता चेतना बुद्धिः समयक्रमात् कालप्रभावात् मलिनविषयाकारस्पर्शम् मलिनविषयतासम्पर्कम् मालिन्यम् विमुञ्चति जहाति । यस्यान्धकारस्य निशारूपकेशसमुदायः परिपक्वः, यच्च प्रभासम्पर्कवशाद् गर्दभाङ्गपिशङ्गताङ्गम् सत्पलितोन्मुखमिव प्रतिभाति तादृशे क्षीणेऽन्धकारे प्रभाते जायमाने इत्यर्थः, रजस्तमसोरपगमे सति शुद्धसत्त्व-

---

[ पतञ्जलिका प्रवेश ]

पतञ्जलि—रात्रिका यह चौदहवां मुहूर्त्त बुद्धिको स्फीत बना रहा है । समाप्तप्रायरात्रिरूप केश, प्रकाशरूप उज्ज्वलता की ओर बढ़ रहे हैं, अन्धकार-मण्डल क्रमशः रासभरोमधूसर होता जा रहा है, रजोगुण तथा तमोगुणके दूर हट जानेसे सत्त्वगुणमें अवस्थित चेतना कालक्रमसे मलिन विषयसम्पर्कका त्याग कर रही है ॥ ११ ॥

( निरूप्य । )

नूनमत्रसानदशायां वर्तते विभावरीतुरीययामः ।

निर्वान्त्यः पुनरुद्भवन्ति भवने प्रातःप्रदीपत्विषः
प्रान्तेभ्यो मुहुरन्तरं निविशते निर्याति चान्धंतमः ।
औदर्यानलमान्द्यदोषशमनीमासेवमानः क्रियां
सौधो धूममिव प्रणालनलकैः पीत्वायमुन्मुञ्चति ॥१२॥

---

प्रतिष्ठिता बुद्धिर्मालिन्यं परित्यजतीत्याशयः । 'पलितं जरसा शौक्ल्यम्' 'चक्रीवन्तस्तु गर्दभाः' इत्युभयत्राप्यमरः ॥ ११ ॥

विभावरीतुरीययामः—रात्रेश्चतुर्थः प्रहरः अवसानदशायां वर्त्तते—समाप्तो भवति ।

निर्वान्त्य इति । भवने सौधगृहे निर्वान्त्यः समाप्तिं गच्छन्त्यः प्रातः प्रदीपत्विषः प्रातःकालिकप्रदीपद्युतयः पुनरुद्भवन्ति पुनर्भूयसीं द्युतिमाश्रित्य दीप्यन्ते । अन्धंतमः दृष्ट्युपघातकोऽन्धकारः प्रान्तेभ्यः प्राकारपरिसरेभ्यः मुहुः पुनः अन्तरम् गृहाभ्यन्तरभागम् निविशते प्रविशति निर्याति बहिर्गच्छति च । ( स चायं धूमस्य निर्गमः प्रवेशश्चोत्प्रेक्ष्यते यथा ) अयं सौधो राजसदनम् औदर्यानलस्य जठराग्नेर्यो मान्द्यदोषः मन्दतारूपोऽवगुणस्तस्य शमनीं शान्तिकरीं क्रियाम् धूमयानरूपाम् आसेवमानः अनुतिष्ठन् धूमं प्रणालनलकैः नलकरूपैर्यन्त्रविशेषैः पीत्वा उन्मुञ्चति त्यजतीव इति । इदमत्र बोध्यम्, प्रातःकाले जायमाने निर्वाणोन्मुखा गृहप्रदीपाः अवसानसूचनार्थमिवाधिकया द्युत्या प्रकाशन्ते, किञ्च गाढं तमो यद् गृहाद् बहिर्निर्गत्य समस्तमपि गृहपरिसरं व्याप्यातिष्ठत् तत्सम्प्रति पुनर्गृहं प्रविशत्

---

( देखकर ) निश्चय ही रातका चौथा प्रहर समाप्ति पर है ।

प्रातःकालिक प्रदीपकी शिखा बुतते समय जोरोंसे प्रकाशित हो रही है, अन्धकार बाहर घरमें आकर फिर घरसे बाहर निकल रहा है, ऐसा लगता है कि घर अग्निमान्द्यरूप दोषको दूर करनेके लिये धूमपानरूप क्रियाकर रहा है जिसमें प्रणालीस्वरूप नलके द्वारा अन्धकारस्वरूप धूमको खींचता तथा छोड़ता है ॥ १२ ॥

अपि च।

सौधस्य प्रतिफलितं निकुञ्जगर्भे-
ष्वभ्यर्णोन्मिषितकपोतनादपुष्टम्।
एकस्याप्यनुगुणने कृतोद्यमस्य
स्वाध्यायध्वनितमनेकधा विभाति ॥ १३ ॥

( नेपथ्ये । )

नाथ, कथमुपेक्षसे।

कुजगति कतमाह्निकस्य हेतो-
रहमिह बद्ध इति त्वमेव वेत्थ।

प्रतीयतेंऽशतश्च ततो निर्गत्य प्रभाभरे लीयत इव, सोऽयं धूमस्य निर्गमप्रवेशश्च जठरानलमान्द्यदोषशमनाय सौधेन पीत्वा पुनस्त्यज्यमानो धूम इव प्रतिभातीत्यर्थः। स्फुटा उत्प्रेक्षा ॥ १२ ॥

सौधस्येति। सौधस्य राजप्रासादस्य निकुञ्जगर्भेषु लतागृहाभ्यन्तरभागेषु प्रतिफलितम् प्रतिध्वनितम्, किञ्च अभ्यर्णे समीपदेशे उन्मिषितः स्फुटितः यः कपोतनादः कपोतानां शब्दः तेन पुष्टम् वृद्धिं नीतम् अनुगुणने स्वाधीतवेदावृत्तौ कृतोद्यमस्य आसक्तस्य एकस्यापि शिष्यस्य स्वाध्यायध्वनितम् वेदाध्ययनशब्दः अनेकधा बहुभिरुच्चार्यमाणमिव विभाति। एकेनापि वेदे पठ्यमाने तदीयः स्वल्पोऽपि ध्वनिः सौधकुञ्जगह्वरेषु प्रतिध्वन्यमानतया समीपदेशोत्पन्नकपोतनाद-बृंहिततया चानेकवटूच्चारित इव दीर्घः प्रतिभातीति भावः ॥ १३ ॥

कुजगतीति। हे करुणामय दयासागर, अहम इह अस्मिन् कुजगति कुत्सिते

सौधके अभ्यन्तर भागमें प्रतिफलित एवं समीप में होनेवाले कपोतनादसे समृद्ध होनेके कारण एक व्यक्ति द्वारा भी उच्चारित वेद अनेक व्यक्तियों द्वारा उच्चारित सा लगरहा है ॥ १३ ॥

[ नेपथ्यमें ]

नाथ, आप हमारी उपेक्षा क्यों कररहे हैं ?

मैं इस कुत्सित जगत् ( कारागार ) में कितने दिनोंके लिये किस अपराधमें

स्वमपि यदि न चेतये न च त्वां
मम करुणामय तत्र कोऽपराधः ॥ १४ ॥

पतञ्जलिः—अहह, करुणानि चिरात्प्राप्तचेतनस्य पुरुषस्य पुरुषोत्तमं प्रति परिदेवितवचनानि ।

( पुनर्नेपथ्ये । )

हन्त भोः,

अविदितगतिना प्रमादनिद्रा-
मुषितमतिः कितव त्वयास्मि बद्धः ।

---

संसारे ( कारागारसमे ) कतमत् आह्निकम् नित्यं नैमित्तिकं काम्यञ्च अहनि साध्यं कर्माह्निकम् कतमाह्निकम् तस्य कतमाह्निकस्य हेतोः कतमत् कर्म कारयितुम् कतमस्मिन् वा कर्मण्यपराद्धः बद्धः इति मदपराधं त्वमेव वेत्थ जानासि । अहं स्वम् आत्मानम् अपि न चेतये परिचिनोमि न च त्वाम् ( चेतये ) तत्र मम स्वस्य तव चापरिचये कोऽपराधः न कोऽपीत्यर्थः । यथा कश्चित् कारागारे प्रसूतो दस्युदारकादिः बन्धनकारकम् बन्धनकारणं स्वं च न जानाति, न च तत्र तस्यापराधो मन्यते, तथैवाहमपीति कारागारप्रसूतदस्युदारकादिरिवाहमपि मोचयितुमेव योग्य इत्याशयः ॥ १४ ॥

अविदितेति । हे कितव वञ्चक, ( कूटव्यवहारिन्, अतएव च कूटस्थानित्येति ध्वनिः ) न विदिता गतिश्चेष्टा पादसञ्चारो वा यस्य तेन तादृशेन न त्वया प्रमादोऽनवधानतैव निद्रा तया मुषिता अपहृता मतिर्विवेक ख्यातिरूपा बुद्धिर्यस्य

---

बंधा हूँ यह आपही जानते हैं। ( इस स्थितिमें ) यदि मैं अपनेको तथा आपको भी नहीं पहचानता हूँ तो इसमें मेरा क्या दोष है ? ॥ १४ ॥

पतञ्जलि—अहा, बहुत दिनों पर चेतनाप्राप्त पुरुष पुरुषोत्तमके प्रति करुणशब्दोंमें विलापकर रहा है।

[ फिर नेपथ्यमें ]

मैं प्रमादरूप निद्रामें बेहोश था, हे वञ्चक, आपने छिपकर आकर मुझे

कथमिव मम दृष्टिवर्त्मवर्ती

भवपथतस्कर बन्धने प्रभुः स्याः ॥ १५ ॥

पतञ्जलिः—हन्त, पुरुषस्य परमात्मानं दिदृक्षमाणस्य भगवन्तं प्रति बलवदेतान्युपालम्भाक्षराणि।

( नेपथ्ये। )

अये, आयत्तमाय कमायासयसि दीनजनम्।

---

स तथाभूतोऽहं बद्धोऽस्मि। हे भवपथतस्कर संसाराध्वचौर, मम दृष्टिवर्त्मवर्त्ती दृग्वर्त्म निपतितः सन् कथमपि बन्धने प्रभुः स्याः समर्थो जायेथाः न कथमपीत्यर्थः। यथा कोपि कूटव्यवहर्त्ता मार्गचौरः केनापि पथा निभृतपदसञ्चारमागत्य कमपि पान्थं बध्नाति तथैव निवर्त्तनाभिप्रायेण प्रवर्त्तनादिकूटकर्मणा त्वयाऽहं बद्धोऽस्मि, त्वं हि संसारमार्गचौरः यदि मया दृष्टः स्यास्तदा कथमपि मां बन्धुं न क्षमेथाः इत्याशयः। 'भवपथतस्कर' इति विशेषणेन यथा तस्करे दृष्टे लोकस्ततो मार्गान्नि-वर्त्तते तथैव परमात्मनि दृष्टे जीवस्य संसारो निवर्त्तते इति ध्वन्यते। 'दृष्टिवर्त्म-वर्त्ती' इत्यनेन परमात्मसाक्षात्कारे जाते परमात्मनाऽपि जीवो बन्धुं न शक्यः इति बोध्यते। सोऽयं प्रच्छन्नचौरवृत्तान्तोऽत्र परमात्मवृत्तान्ते गुणीभावं गतोऽवसेयः ॥ १५ ॥

दिदृक्षमाणस्य—द्रष्टुमिच्छतः। उपालम्भाक्षराणि — उपालम्भवचनानि। कस्यापि विषये क्रोधपूर्वकं दोषप्रतिपादनमुपालम्भः स द्विविधः-गुणप्रकाशनपूर्वको निन्दापूर्वकश्च। तत्र निन्दापूर्वक उपालम्भः परिभाषणमित्यभिधीयते, अत्र च निन्दापि स्तुतिपर्यवसायिनीति उपालम्भमात्रमिदम्।

---

बन्धनमें डालदिया। आप यदि किसीतरह हमारी नगरमें आजाते ( तो मैं देखता कि )आप किसप्रकार मुझे बांधनेमें समर्थ होते हैं ॥ १५ ॥

पतञ्जलि—अहा, पुरुष परमात्माको देखना चाहता है, वह परमात्माको बड़े मार्मिक शब्दोंमें उलाहना दे रहा है।

[ नेपथ्यमें ]

अरे मायाको अपने वशमें रखनेवाले, ( आत्मवशीकृतमाय, ) क्यों हम दीनोंको सता रहे हो ?।

कितव तव वशे ममेन्द्रियाणि
श्रुतिविषयावधिवर्तमानदृष्टेः ।
मुखमसि जगतो न वेद्मि दृष्टौ
त्वमवतरिष्यसि केन दर्पणेन ॥ १६ ॥

पतञ्जलिः—नूनमसौ विविदिषया गाढमुपगूढः पुरुषो निर्विद्य परमात्म-

---

आयत्तमाय—आयत्ता वशगा माया यस्य तत्संबोधने आयत्तमाय, ('स ईशो यद्वशे माया स जीवो यस्तयावशः' इति स्मरणात्। 'आयत्तमाय' इति पाठे आयता विस्तृता माया यस्य स आयतमायस्तत्संबोधने आयतमाय इति सूपपन्नं रूपम्। आयासयसि—खेदयसि।

कितवतवेति। हे कितव, श्रुतिविषयावधिवर्त्तमानदृष्टेः कर्णान्तायतलोचनस्य तव वशे अधिकारे मम इन्द्रियाणि हस्तपादादीनि सन्ति यतस्त्वम् जगतः मुखम् मुख्यः असि, (मम) दृष्टौ केन दर्पणेन (त्वम्) अवतरिष्यसि इति न वेद्मि। (अत्र कितवेति संबोधनेन ईश्वरस्य सन्निहितप्रच्छन्नता ध्वनिता) (मुखमसीत्यनेन च जगदुपक्रमकारणत्वं व्यज्यते) जगतो मुखमसि चेत्सुतरां जगदन्तर्गतस्य ममापि मुखमसि, इति हृषीकेशस्य वशे सर्वेन्द्रियाणि त्वदधिष्ठितानि सन्त्येव प्रवर्त्तन्ते, मुखे च श्रोत्रघ्राणरसनचक्षूंषि इन्द्रियाणि भवन्त्येव। श्रुति-विषयं वैदिकं धर्माधर्मादिपर्यन्तं गच्छति तव दृष्टिरिति श्रुतिविषयेत्युक्तम्। स्वमुखं च दर्पणेनैव द्रष्टुं शक्यं तत्त्वां केन दर्पणेन पश्यानीति न जाने इत्यादिरर्थः सुधीभिराकलनीयः। निर्विकल्पसमाधिरूपदर्पणप्रतिफलितः परमात्मा दृष्टिपथम-वतरतीति न वेद्मि इत्यनेन जिज्ञासितं बोध्यम् ॥ १६ ॥

विविदिषया—जिज्ञासया। उपगूढः आलिङ्गितः युक्त इत्यर्थः। निर्विद्य निर्वेदं प्राप्य।

---

हे कितव, तुम्हारी दृष्टि श्रुतिपर्यन्तगामी है, (कानों तक पहुँची, अथवा वेदतक) हमारे सारे इन्द्रिय तुम्हारे वशमें हैं, तुम संसारके मुख (प्रमुख) हो, मैं नहीं समझ रहा हूँ कि तुम किस दर्पणमें उतरोगे ? (दीख सकोगे) ॥१६॥

पतञ्जलि—निश्चयही यह पुरुष विविदिषासे युक्तहोकर निर्वेदके कारण

दर्शनोपायमनुसरति ।

( नेपथ्ये । )

हन्त, साम्प्रतमायासनिःसहोऽस्मि ।

बहुविध भवभूमिकाभिराभि-
र्नटयसि नाथ यथा तथा नटामि ।
कृपण गमयिता भवानविद्या-
जवनिकयान्तरितः कियन्त्यहानि ॥ १७ ॥

---

आयासनिःसहः—श्रमासहिष्णुः ।

बहुविधेति । हे नाथ, बहुविधाभिः अनेकभेदभिन्नाभिः आभिः भवभूमिकाभिः मनुष्यादिरूपस्वीकाररूपाभिः यथा नटयति संसारनाटकं कर्त्तुम् आदिशसि तथा नटामि । हे कृपण, ( भवान् ) अविद्याजवनिकया अविद्यारूपया तिरस्करिण्याऽन्तरितः प्रच्छन्नः कियन्ति कतिसंख्यानि अहानि दिनानि गमयिता व्यतियापयिष्यति । यथा कश्चन कृपणो राजादिर्नटेभ्यो नाटकं प्रस्तोतुमादिश्य स्वयं क्वचन जवनिकायां प्रच्छाद्य स्वं तिष्ठति तस्य प्रच्छन्नरूपेणावस्थाने कारणं भवति तदीया कृपणतैव, स शोचति कदाचिदिमे नटाः स्ववेषपरिग्रहकौशलं दर्शयित्वा पुरस्कारं याचेरन् इति सा च याच्ञा नाटकावसाने मध्येनाटकञ्च संभवति अतोऽसौ नाटकप्रारम्भत एव प्रच्छन्नरूपतां प्रतिपद्यते, तद्वदयं परमात्मा संसारनाटके जीवान्प्रवर्त्त्य तेभ्यः पुरस्कारदानाद् भीत इव अविद्ययाऽऽत्मानमाच्छाद्य निलीयते इति बोध्यम् । अत्र निर्विण्णनटवृत्तान्तः पुरुषवृत्तान्ते गुणीभावं गमयित्वाऽऽरोपितोऽत एव पुरुषे निर्वेदो व्यङ्ग्यः । अप्रस्तुतप्रशंसास्वीकारे तु नटाश्रित एव निर्वेदः स्वदते । स्पष्टमन्यत् ॥ १७ ॥

---

परमात्माको देखनेका उपाय ढूंढ रहा है ।

[ नेपथ्यमें ]

हन्त, अब मैं आयास सहसकनेमें अक्षम हो रहा हूँ ।

हे नाथ, नानाप्रकारकी भूमिकाओं द्वारा आपने जिसप्रकार कहा मैं नाचता रहा हूँ । हे कृपण, आप स्वयं अविद्यारूपजवनिकामें छिपकर मुझे कबतक ऐसेही नाचनेको प्रेरित करते रहियेगा ? ॥ १७ ॥

पतञ्जलिः—हन्त, द्रवयन्ति मम चित्तवृत्तिमेतानि विविदिषतः पुरुषस्य निर्वेदोपबृंहितानि परिदेवितानि। तत्संघटयामि सिद्धिममुना। तया सह पश्यतु परमात्मानम्। कः कोऽत्र भोः।

( प्रविश्य। )

बटुः—उपाध्याय, शाण्डिल्यो जाबालिरभिवादये।

पतञ्जलिः—वत्स, स्फुरति ते परं चापरं च ब्रह्म। आयुष्मन्, निरुध्यन्तामन्तरायभूताश्चित्तवृत्तयः। पुरुषसंगमाय सिद्धिमभिसारयतु महाव्रतनामा मम कञ्चुकी।

( प्रविश्य। )

महाव्रतकापालिकः—एशे म्हि अहके। कीश आणुवेदु भावे। ( एषोऽस्म्यहम्। किमाज्ञापयति भावः। )

---

द्रावयन्ति—द्रुतिं प्रापयन्ति विविदिषतः विविदिषायुक्तस्य निर्वेदोपबृंहितानि निर्वेदपूर्णानि। सिद्धिम् योगजधर्मम्। स एव योगजो धर्मः परमात्मसाक्षात्कारे हेतुरिति बोध्यम्)।

अन्तरायभूताः—पुरुषोत्तमसाक्षात्कारपरिपन्थिन्यः। चित्तवृत्तयः प्रमाण विपर्ययविकल्पनिद्रास्मृतिरूपाः॥

महाव्रतकापालिकः—कापालिकाः 'रुद्रो ह वै महाव्रतं चकार नरशिरःकपालं

---

पतञ्जलि—हन्त, विविदिषासे युक्त पुरुषके निर्वेदपूर्ण यह विलाप मेरी चित्तवृत्तिको द्रवीभूत कर रहे हैं। इसलिये मैं इसे सिद्धिसे संयुक्त कर देता हूँ। सिद्धिके सहारे यह परात्माका दर्शन प्राप्त करे। कौन है यहाँ?

[ प्रवेश करके ]

वटु—उपाध्याय—शाण्डिल्यगोत्र मैं जाबालि अभिवादन करता हूँ।

पतञ्जलि—वत्स, पर तथा अपर ब्रह्म तुमको प्रकाशित हों। आयुष्मन्, विघ्नस्वरूप चित्तवृत्तियोंको निरुद्ध कर दो। महाव्रतनामा मेरा कञ्चुकी सिद्धिको पुरुषसे मिलनेके लिये अभिसारित करे।

[ प्रवेश करके ]

महाव्रतकापालिक—यह मैं उपस्थित हूँ, आपकी क्या आज्ञा है?

जाबालिः—( सभयम् । ) क एष नरकपालमालया भीषणकलेवरः सुराचषकास्वादकषायलोचनः समुच्चित इव नरकराशिरुपाध्यायमनुधावति ।

पतञ्जलिः—वत्स, पाषण्डमहाव्रतसिद्धान्तोऽयम् । अलमनेन ।

महाव्रतकापालिकः—ममं पि तुए णत्थि पओअणम् । ( ममापि त्वया नास्ति प्रयोजनम् । ) ( इति निष्क्रान्ताः । )

पतञ्जलिः—वत्स महाव्रत, सार्वभौमः साधयतु पुरुषम् । अभिसारयतु च सिद्धिम् । यस्य खलु

जात्यादेशेन कालेन व्यवस्थाभिरविप्लुतम् ।
हिंसारत्यनृतस्तेयपरिग्रहविवर्जनम् ॥ १८ ॥

---

दधार' इत्युक्तेर्भगवतो भैरवस्य कपालधारणात् कपालधारणमेव महाव्रतं मन्यन्ते ।

भीषणकलेवरः—भयानकदेहः । सुराचषकः—सुरापानपात्रम् । कषायलोचनः—रक्ताक्षः ।

महाव्रतसार्वभौमः—महाव्रतनामा सर्वस्याः भूमेरीश्वरो राजविशेषः । महाव्रतपरिभाषा पातञ्जलयोगसूत्रे यथा—'जातिदेशसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्' इति । प्रसाधयतु अलङ्करोतु, प्रकृते सिद्ध्यभिमुखं करोतु ।

जात्येति । जात्या ब्राह्मणत्वादिना, देशेन तीर्थादिना, कालेन पर्वादिपुण्यसमयेन, व्यवस्थाभिः समयनिर्धारणस्वरूपाभिः अविप्लुतम् अनवच्छिन्नं

---

जाबालि—( भयके साथ ) नरकपालमालासे भीषणकाय, मद्यके आस्वादनसे रक्तनेत्र एकत्रीभूत नरकराशिकी तरह प्रतीत होनेवाला यह कौन हमारे उपाध्यायकी ओर चला आ रहा है ?

पतञ्जलि—वत्स, यह पाखण्ड महाव्रत-सिद्धान्त है, इसकी जरूरत नहीं है ।

महाव्रतकापालिक—हमको भी तुमसे प्रयोजन नहीं है ।

[ जाता है ]

पतञ्जलि—वत्स, महाव्रतसार्वभौमको कहो कि वह पुरुषको सुसज्जित करदे और सिद्धिको भी अभिसारितकरे । जिस महाव्रतका—हिंसात्याग, अरति, अमिथ्यानुराग, अस्तेय, तथा अपरिग्रह जाति-देश-काल तथा व्यवस्थासे अपरिच्छिन्न है ॥ १८ ॥

( नेपथ्ये । )

अयमसौ बध्नाति पञ्चप्रकारं परिकरं पुरुषप्रसाधनाय सार्वभौमो महाव्रतानाम् । न पुनर्दवीयसी सिद्धिरनेनाभिसारयितुं शक्यते ।

पतञ्जलिः—वत्स जाबाले, नियमगणो यमानामग्रतो भूत्वा सिद्धिमाहरतु ।

( प्रविश्य । )

निर्जरः—एशे म्हि अलिहन्तशासणशलाहणिज्जे णिज्जलेणाम णियमे । ( एषोऽस्म्यहमर्हच्छासनश्लाघनीयो निर्जरनामा नियमः । )

पतञ्जलिः—( विलोक्य । ) वत्स, निर्याप्यतामयमार्यजनगर्हणीयः पुद्गलाधमः, योऽयमस्नानमौनमलपङ्कधारणतिष्ठद्भोजनतप्तशिलाधिरोहणकेशोल्लुञ्चनादिना जीर्यति जीवाजीवसीवनहेतुः संवर इति मन्यते ।

---

हिंसास्त्यनृतास्तेयपरिग्रहाणां विवर्जनम् त्यागः अस्ति, स महाव्रतसार्वभौमोऽखिलभुवनविदितः पुरुषं सिद्ध्यभिमुखं करोतु सिद्धिमेव वाऽभिसारयत्विति पूर्वोक्तेन संबन्धः । ब्राह्मणो न हन्तव्यः इति जात्यवच्छिन्ना हिंसा यमः, एवं तीर्थे पर्वणि यज्ञभिन्ने स्थाने कोऽपि न हन्तव्य इत्यपि यमः तीर्थकालव्यवस्थावच्छिन्नत्वात् । कोऽपि कदापि कुत्रापि न हन्तव्य इति तु जातिकालदेशव्यवस्थाभिरनवच्छिन्नतया महाव्रतमित्युच्यते, एवञ्च 'जातिदेशसमयानवच्छिन्ना सार्वभौमा महाव्रतम्' इति योगसूत्रोक्तं वस्तु श्लोकेऽत्र प्रपञ्चितम् ॥ १८ ॥

---

[ नेपथ्यमें ]

यह महाव्रतसार्वभौम पुरुषको तैयार करनेके लिये पांच प्रकारका परिकर बांध रहा है । सिद्धि दूर है यह उसे नहीं अभिसारित कर सकता है ।

पतञ्जलि—वत्स जाबालि यमोके आगे होकर नियमगण सिद्धिको ले आवें ।

[ प्रवेश करके ]

निर्जर—जैनमतमें प्रशंसाप्राप्त मैं निर्जरनामका नियम उपस्थित हूँ ।

पतञ्जलि—( देखकर ) वत्स, भगाओ इसको, यह आर्यजननिन्दित पुद्गलाधम है, यह अस्नान, मौन, मलपङ्कधारण, खड़े-खड़े भोजन, तप्तशिलाधिरोहण, तथा केशलुञ्चन आदिसे अपनेको कष्ट देता है, और मानता है कि जीव एवं अजीवको एक साथ मिलानेका कारण संवर है ।

निर्जरः—हदाशा, तुमंपि शावआह पलिहलिदव्वदंशणेत्ति शअं जेव्व शाहमि। ( इति निष्क्रान्तः। ) ( हताश, त्वमपि श्रावकस्य परिहरणीयदर्शन इति स्वयमेव साधयामि। )

जाबालिः—भगवन् उपाध्याय, नियमगणो निवेदयति—'अन्यदपि दवीयसी सिद्धिः। अतः पुरुष एवास्माभिस्तपसा स्वाध्यायेनेश्वरप्रणिधानेन च पावनीयः' इति।

पतञ्जलिः—बाढम्। अर्पयतु कर्माणि विश्वनिर्मातरि पुरुषोत्तमे प्रणिहितः पुरुषः।

( नेपथ्ये। )

अरे करुणामहार्णव,

सुरसमपि वरं न भोक्तुमीहे
हर मम संवलसंचयं गृहाण।

---

सुरसमिति। हे हर, सुरसं शोभनरसं स्वर्गादि साधनम् अतएव वरं श्रेष्ठम् धर्मादि भोक्तुं फलदातृ तयोपभोक्तुं न ईहे न कामये मम भवपार्थकस्य संबल सञ्चयं सञ्चितं पाथेयं भोग्यकर्मफलरूपम् गृहाण मया त्वयि समर्पितं स्वीकुरु। ततश्चोपदिश कथय विदूरयात्रायाः चिरानुवृत्तायाः अस्य जन्ममरणपरम्परायाः

---

निर्जर—श्रावकोंके लिये तुझ अभागेका भी दर्शन निषिद्ध है अतः मैं स्वयं चला जाता हूँ।

[ जाता है ]

जाबालि—भगवन् उपाध्याय, नियमगणका कहना है कि अभी सिद्धि दूर है, अतः हमलोग तप स्वाध्याय एवं ईश्वरप्रणिधानके द्वारा पुरुषको ही तबतक पवित्र करते हैं।

पतञ्जलि—अच्छी बात है, ईश्वरमें प्रणिधान करनेवाला पुरुष अपने कर्मोंका पुरुषोत्तममें अर्पणकरे।

[ नेपथ्यमें ]

अच्छे ( स्वर्गादि ) स्वादसे युक्त तथा श्रेष्ठ होनेपर भी मैं इस संवलसञ्चय ( कर्म )-का उपभोग नहीं करना चाहता हूँ, हे हर, आप इसे ले लीजिये, कृपया

उपदिश कतरद्विदूरयात्रा-
श्रमशमन भववर्त्मनोऽवसानम् ॥ १९ ॥

पतञ्जलिः—श्लाघ्यमिदं वैराग्यमुमुक्षयोरनुरूपं पुरुषस्य वचनम् ।
( पुनर्नेपथ्ये । )

सकलमपि मया स्वकर्मबीजं
त्वयि वृषवाह समर्पयांबभूवे ।

संसारयात्रायाः श्रमशमनं श्रान्तिहरम् । भववर्त्मनः संसाररूपस्य मार्गस्य अवसानं समाप्तिसाधनंकतरत् भक्तिज्ञानयोर्मध्ये केन संसारो निवर्त्तेत इति कथय यथाकोऽपि पथिको गृहात्पोथयमादाय चलितः सुबहुदूरं गत्वापि मार्गस्यान्तमभवलोकमानश्च खिन्नः सन् कस्मैचिन्मार्गे मिलिताय स्वीयं पाथेयं समर्प्य ततो मार्गस्यावसानं केन पथास्यादिति जिज्ञासते, तथैव पुरुषः कर्मफलं पाथेयमादाय संसारवर्त्मनि चलन् श्रान्तः सन् स्वंकर्मफलरूपं पाथेयं पुरुषोत्तमाय समर्पयति ततश्च संसारमार्गावसान साधनतया भक्तिज्ञानयोरन्यतरस्य निश्चयं कारयितुमिच्छति । अत्र पथविरामविश्राममात्र कामुकस्य संबलोपभोग विरक्तस्य दूरपथिकस्य वृत्तान्तः । संसारसुख विमुखस्ये कर्माण्यर्पयतो मुमुक्षोर्वृत्तान्ते तादात्म्येनाध्यारोपितः पुरुषमालम्ब्य श्रमविषाद निवेदानुल्लासयति प्रेयांसंनाम भक्तिरसं चास्वाद गोचरतां नयतीति भावः ॥ १९ ॥

वैराग्यमुमुक्षयोरनुरूपम्—वैराग्यस्य मुमुक्षायाश्चानुकूलम् ।

सकलमपिमयेऽति । हे वृषवाह, ( हालिक शिव धर्म नियामकाश्चेति त्रयोऽपि वृषवाह शब्दार्थाः परमात्मनि संगताः ) 'सुकृते वृषभे वृषः' इत्यमरः । मया जीवेन सकलम् समस्तम् अपि स्वकर्मैव बीजं स्वर्गनरकादि फलजनकं पुण्यापुण्य स्वरूपम् त्वयि समर्पयां बभूवे समर्पितम् । ( तत् बीजम् ) चेत्

इतना बता दीजिये कि दूरव्यापी यात्राके श्रमका अन्त करनेवाला इस संसार मार्गका अन्त कहाँ है ॥ १९ ॥

पतञ्जलि—वैराग्य तथा मुमुक्षुत्वके अनुरूप पुरुषका यह कथन प्रशंसनीय है ।

[ फिर नेपथ्यमें ]

हे वृषवाह, ( शिव-हलवाहक ) मेरे पास जो कुछ कर्मबीज था सब मैंने

तव मम च न चेत्फलं प्रसूते
कथमधुनाप्यहमेव दोषभूमिः ॥ २० ॥

पतञ्जलिः—स्वदोषक्षयाशंसनपिशुनोऽयमस्य पुरुषोत्तमं प्रत्युपालम्भः ।

( नेपथ्ये । )

अये नित्यप्रबुद्ध,

मम भवपथिकस्य कर्म भोग्यं
प्रलयनिशि त्वमपालयः शयालोः ।

---

यदि तत्र मम च न फलं प्रसूते तव विगतरागादि दोषतया मम च निष्कामतया फलं भोगं नोत्पादयति—अधुनापि अत्रापि अहमेव कथं दोषभूमिः रागद्वेषमोहादीनांपात्रम् । अयमाशयः कोऽपि कृषकः सकलमपि बीजं हालिकाय वप्तुं समर्पयति, तस्यां स्थितौ यदि बीजं न फलं जनयति तदा हालिकस्य दैवस्य वाऽपराधः कथ्यते न तु कृषकस्य, अत्र तत्त्वार्थे तु जीवेन सकलमपि पुण्यापुण्यात्मकं बीजं फलयोगजनकं धर्माधिष्ठातरि भगवति समर्पितं, तच्च बीजं जीवस्य निष्कामतया परमात्मनश्च विगतरागादिदोषतया कस्यापि भोगं फलं न जनयति अस्यामपि दशायां पुरुष एव राग द्वेष मोहात्मकानां दोषाणां पात्रत्वेनाक्षिप्यते न परमात्मा तथाऽऽक्षिप्यते तत्र कारणं नावगच्छाम इति ॥ २० ॥

स्वदोषक्षयाभिलाष पिशुनः—आत्मनि स्थितानां रागादि दोषाणां निवृत्तेरभिलाषस्य सूचकः । अस्य पुरुषस्य ।

नित्यप्रबुद्ध—सतत जागरूक ( अनश्वरज्ञान इति च परमात्मपक्षे )

ममभवेति । त्वम् प्रलयनिशि प्रलयरूपायां रात्रौ शयालोः निद्रितस्य (-शरीर-

---

आपको समर्पितकर दिया, तथापि वह कर्मबीज यदि आप तथा मुझको फल नहीं दे रहा है, तो बताइये इसमें मेरा क्या दोष है ? ॥ २० ॥

पतञ्जलि—यह पुरुषका पुरुषोत्तमके प्रति उलाहना है जिससे उसके दोष क्षयकी सूचना मिल रही है ।

[ नेपथ्यमें. ]

हे सदा जागरूक ( नित्यज्ञान, परमात्मन् ) ।

मैं संसारपथका पथिक प्रलय निशामें सो रहा था, और आप मेरे भाग्य

इति सकलमकिंचनो बुभूषुः
प्रहरकवेतनमेतदर्पयामि ॥ २१ ॥

पतञ्जलिः—साधु, तावदिदं व्यपदेशेन भगवति सर्वकर्मणामर्पणम् ।

( नेपथ्ये । )

भगवन्, अवतर नयनवर्त्मनीत्यथवाशास्महे । न खलु त्वया नेदीयसोप्राः फलन्ति क्षेत्रज्ञक्षेत्रे कर्माशयाः । पश्य ।

---

पायेन निरस्त समस्त चेष्टतया शयितस्येत्युक्तम् ) भवपथिकस्य संसारमार्गाध्वनीनस्य मम जीवस्य भोग्यम् भोगविषयतां प्रापणीयम् पाथेय स्वरूपं सञ्चितंकर्म अपालयः रक्षितवान् कर्मसाक्षित्वान्नित्य प्रबुद्धत्वाच्च । इति अस्मात् कारणात् आकिञ्चनो बुभूषुः भोग्यवस्तु परिहारद्वारा दरिद्रतां प्रेप्सुः अहम् एतत् स्वकर्मरूपं पाथेयम् प्रहरकवेतनम् यामिकलभ्यं पारितोषिकम् अर्पयामि तुभ्यं समर्पयामि । अयमाशयः- यथा कश्चन पथिको रात्रावागतायां मध्ये वर्त्म शयानो भवति, तदीयं च भोग्यं पाथेयं कश्चन सततजागरूकाजनो रक्षेत्, सुप्तोत्थितोऽसौ पथिकः स्वं पाथेयं यामिकाय वेतनरूपेण प्रदाय स्वयमकिञ्चनो जायेत, तथैव प्रलये सुप्तस्य जीवस्य भोग्यं तद दृष्टं कर्मसाक्षित्वान्नित्यप्रबुद्धत्वाच्च रक्षितवने परमात्मने सुप्तोत्थितः सन् कर्मसन्न्यासं कृत्वा भोगान् परिहर्त्तकामो भोगदरिद्रो बुभूषुः स्वं कर्मजातं परमात्मने समर्पयतीति॥२१॥

व्यपदेशेन—छलेन । प्रहरकवेतन दानच्छलेन परमात्मनि कर्मार्पणं नितान्त चातुर्यद्योतकं विद्यत इत्यर्थः ।

नयनवर्त्मनि अवतर—दृग्गोचरो भव । 'सकलमपि मया' इत्यादिना

---

कर्मकी रक्षा करते रहे थे, अब मैं जग चुका हूँ, मैं कुछ भी अपना नहीं रखना चाहता हूँ, इसलिये आपको अपना समस्त भोग्य कर्म प्रहरीके वेतनके रूपमें अर्पितकर रहा हूँ ॥ २१ ॥

पतञ्जलि—वेतन देनेके छलसे भगवान्में अपने सारे कर्मोंका यह समर्पण तो बड़ा अच्छा रहा ।

[ नेपथ्यमें ]

भगवन्, आप मेरे नयनोंके मार्गमें आ जाँय इतनीही मेरी प्रार्थना है ।

यदि विरहितभोगभोग्य दूरा-
द्वपसि वृषाङ्क तदा फलानि सूते ।
स्वपदमुपदधासि यत्र तस्मि-
न्भवति कडङ्गरमेव कर्मबीजम् ॥ २२ ॥

---

पूर्वं दोषक्षयाभिलाभिलो व्यक्तः, स च त्वद्दर्शनेऽवश्यम्भावीति पृथक्तया-नाभिलाषविषयः, अतएवात्रैवकारः । नेदीयसा—समीपस्थितेन । अत्र समीपस्थित्या पूर्वोशंसितं नयनपथगोचरत्वमेव विवक्षितम् । अतएव परमात्मनि नयनगोचरे तत्त्वतो ज्ञाते सति अदृष्टानि न फलं प्रसुवते इति कथितगद्यभागे इति बोध्यम् । उक्ताः—वचनकर्मीकृताः । क्षेत्रज्ञक्षेत्रे—जीवरूप भूमौ । कर्माशयाः कर्मण आशयाः—आशेरते कर्मफलपर्यन्तमवतिष्ठन्ते इत्याशयाः शुभाशुभादृष्टानि । परिदृश्यमाने परात्मनि अदृष्टानि फलं न प्रसुवते भृष्ट वीजवत् इत्याशयः ॥

यदिविरहितेति । हे विरहितभोगभाग्य, भोगभाग्यहीन परमात्मन्, वृषाङ्क शिव, ( हालिक ) यदि त्वं दूरात् वपसि साक्षिरूपेण तिष्ठन् प्रेरकःसन् वपसि वीजनिक्षेपं करोषि तदा कर्मवीजं ( क्षेत्रज्ञक्षेत्रे उप्यमानम् ) फलानि सूते जीवस्य भोजानुत्पादयति, यत्र च ( क्षेत्रज्ञे ) स्वपदम् निजचरणम् उपदधासि स्वप्रकाशं वितरसि कर्मवीजम् कडङ्गरम् अवुशमेव भवति, अवुशं च सत्फलायन कल्पते इत्यर्थः । हालिको यदि पादौ वीजेषु नयतेयुरिति सावधानतां रक्षन् दूरत एव वीजानि वपति तदा तानि वीजानि फलानि क्षेत्रे उत्पादयन्ति, स एव यदि वीजेषु पदं न्यस्यति तदा वितुषीभावं गतं तद्वीजं न फलं प्रसूते तद्वत् परमात्मा दूरस्थितः प्रेरकश्च भूत्वा यद्यदृष्टं प्रवर्त्तयति तदैव तेनादृष्टेन जीवस्य भोगरूपं फलं प्रसूयतेऽथ च स एव हालिकस्थानीयः परमात्मा यदि वीजयुक्तेक्षेत्रे पदमर्पयति—

---

आप समीपस्थ ( प्रत्यक्ष ) होकर जिस कर्मवीजको बोते हैं वह नहीं फलता है ।

हे भोगभाग्यहीन शिव, यदि आप दूरसे ( अदृष्ट अवस्थामें ) वीज ( कर्म ) बोते हैं । तब तो वह ( कर्म ) फल देता है, जब आप उस ( कर्म ) वीज पर अपना चरण रख देते हैं ( स्वार्पित कर देते हैं ) तब वह कर्मवीज निस्तुष धान्य हो जानेसे फलप्रद नहीं होता है ॥ २२ ॥

पतञ्जलिः—वत्स जाबाले, सत्यमाह पुरुषः। भगवति परात्परे दृष्टे स्वतः एव क्षीयन्ते कर्माणि। तदस्मै सूनृतमधुरवचसे तावदासनमुपनीयताम्।

जाबालिः—इदमर्हदनुशासनाविशिष्टं वीरासनमुपतिष्ठते।

पतञ्जलिः—नहि नहि। मृदु स्थिरं सुखमासनमुपनीयताम्।

स्थिरसुखवृषीनिषण्णः प्राणानायम्य दीर्घपथदूनान्।
प्रत्याहृतेन्द्रियगणो विश्राम्यतु निर्भरं पुरुषः॥ २३॥

---

प्रकाशं वितरति—तदा नष्टप्रसवसामर्थ्यमदृष्टं भोगं न जनयतीत्याशयः। 'कडङ्गरोऽबुशंक्लीवे' इत्यमरः। कडङ्गरस्य बुशविहीनस्य फलजननाशक्तिरुक्ता—"तुषेणापि परित्यक्ता न प्ररोहन्ति तण्डुलाः" इति॥ २२॥

सूनृतमधुरवचसे—सूनृतं प्रियसत्यं मधुरं श्रुतिसुखदं च वचो यस्य तस्मै। 'सूनृतं मङ्गलेऽपि स्यात् प्रियसत्ये वचस्यपि' इत्यमरः।

अर्हदनुशासनाविशिष्टम्—जैनशास्त्रोक्तम्। वीरासनम्—साधकानामासनम्। मृदु स्थिरसुखम्—मृदु कोमलम् स्थिरम् अचपलम् अतएव सुखं सुखदम्। अत्र 'स्थिरसुखमासनम्' इति योगसूत्रम् अनुसृत्येदमुक्तम्।

स्थिरसुखवृषीति। स्थिरा सुखयतीति सुखा च या वृषीमुन्यासनं तत्र निषण्णः उपविष्टः दीर्घपथदूनान् दीर्घमार्गसञ्चारखिन्नान् प्राणान् आयम्य प्रत्याहृतः चित्तनिरोधेन निरुद्धप्रसरतां नीत इन्द्रियाणां चक्षुरादीनां गणो येन तादृशः सन् पुरुषः निर्भरम्। अत्यर्थम् विश्राम्यतु विश्रामं करोति। सुदूरपथचलनश्रान्तः

---

पतञ्जलि—वत्स जाबालि, पुरुष ठीक कह रहा है, परात्पर भगवान्‌के दृष्ट हो जानेपर कर्म स्वतः क्षीण हो जाते हैं। अतः इस सत्यमधुरभाषी पुरुषको आसन दो।

जाबालि—जैनशास्त्रसंमत यह वीरासन उपस्थित है।

पतञ्जलि—नहीं, कोमल स्थिरसुख आसन लाओ।

स्थिरसुख व्रतियोंके लायक आसनपर बैठकर दूर यात्रासे श्रान्त प्राणोंको आयाम (विश्राम) प्रदान करके इन्द्रियगणोंका प्रत्याहरण कर लेनेके बाद पुरुष अच्छी तरह विश्राम करे॥ २३॥

( नेपथ्ये । )

प्रत्याहृतानि विषयेभ्यः करणानि ।

वहति करणमान्तरं स्ववृत्तौ
व्रत विलयं बहिरिन्द्रियव्रजस्य ।
कमठ इव कठोरपृष्ठकुक्षौ
चरणचतुष्टयकन्धरानिकोचम् ॥ २४ ॥

---

पथिको यथा क्वचित् सुखासने उपविश्य चक्षुरादीनीन्द्रियाणि च विषयेभ्यो निवर्त्य विश्राम्यति तथैवायं जीवोऽपि प्रेत्यभावपरम्परारूपविशालवर्त्मचलनश्रान्तः सम्प्रति योगोक्ते वृषी नामके मुन्यासने उपविश्य चित्तनिरोधेन्द्रियाणि निरुद्ध प्रसराणि कृत्वा विश्रामं लभतामित्याशयः । 'व्रतिनां सासनंवृषी'त्यमरः । 'प्राणान् आयम्य' इत्यनेन 'तस्मिन् सति श्वासप्रश्वासयोर्गति विच्छेदः प्राणायामः' इति योगलक्षितः प्राणायामो विवक्षितः । एतेन सर्वेण—'यमनियमासन प्राणायाम प्रत्याहाराणां सम्पत्तिः सूचिता । प्रत्याहारो—नाम "बहिर्वृत्तिनिरोधेनान्तःकरणमात्रस्य वृत्तिप्रसरः" इति पातञ्जले ॥ २३ ॥

वहतीति । आन्तरं करणम् चित्तम् स्ववृत्तौ बहिरिन्द्रियव्रजस्य बाह्यचक्षुरादीन्द्रियनिवहस्य विलयम् अन्तर्निलीनताम् वहति प्रापयति । प्रत्याहारे जायमानेऽन्तःकरणस्य वृत्तिः प्रसरति तत्रैव वृत्तौ बहिरिन्द्रियाणि लीयन्त इत्यर्थः । कठोर पृष्ठकुक्षौ कठिने पृष्ठान्तर्भागे चरण चतुष्टयेन सह कन्धरायाः ग्रीवायाः निकोचं संकोचं कमठः कच्छप इव । यथा कच्छपः स्वचरणचतुष्टयेनसहैव स्वांग्रीवां पृष्ठकुक्षौ तिरो भावयति तथैव चित्तं स्ववृत्तौ बहिरिन्द्रियाणां वृत्तीस्तिरोभावयतीति भावः ॥ २४ ॥

---

[ नेपथ्यमें ]

विषयों से इन्द्रियाँ हटा ली गई हैं ।

आन्तर करण ( चित्त ) अपनी वृत्तिमें बाह्य इन्द्रियसमुदायको लीनकर लेता है जैसे कछुआ अपनी कठोर पृष्ठकुक्षिमें चार चरणों तथा अपनी ग्रीवाको लीनकर लेता है ॥ २४ ॥

पतञ्जलिः—तदधुना ध्यायते धारयते समादधते पुरुषाय संयमो दुहितरं प्रयच्छतु सिद्धिम् ।

जाबालिः—आचार्य, किमेतत् । पश्य तावद्दिवापि दीप्यमाने दिवाकरे ।

कर्पूरैः परिपूरिता इव बिसच्छेदैर्विकीर्णा इव
प्रालेयोपलसंचिता इव सुधासिन्धौ निमग्ना इव ।
कस्मात्कैरवकाननस्मितरुचा संवर्द्धितां कौमुदी-
मुद्ग्रीवप्रचरच्चकोरतरुणी पीतां दिशो बिभ्रते ॥२५॥

---

अधुना—ध्यान धारणासमाधिषु सिद्धेषु सत्सु । ध्यायते—ध्यानशीलाय, धारयते—धारणामभ्यस्तवते । समादधते—समाधिं कुर्वते । अयमाशयः—विषयान्तरोपरक्ते ब्रह्मणि प्रत्याहृतचित्तस्य निवेशनं धारणा, तत्परम्परैव ध्यानम्, विषयान्तर परिहारेण ब्रह्मध्यानं समाधिः, एतेषां त्रयाणां समुदितानां संयम इति संज्ञा । स एव संयमो दृढभूमिः सन् सिद्धिं योगजधर्मं पुरुषस्य जनयतीति योगशास्त्रसमयः, तदनुरोधेनात्र संयमः पुरुषाय सिद्धिं नाम स्वजन्यतया दुहितरं प्रयच्छत्विति कथितम्, संयमे जाते पुरुषस्य सिद्धिरुत्पद्यतामिति तत्त्वम् ॥

दिवापि—दिनेऽपि । दीप्यमाने—प्रकाशमाने ।

कर्पूरैरिति । कर्पूरैः परिपूरिता इव भृता इव, बिसच्छेदैः नलिनीदण्डखण्डैः विकीर्णाः व्याप्ता इव, प्रालेयोपलसञ्चिताः हिमशिलापरिपूरिताः इव सुधासिन्धौ अमृतसागरे निमग्नाः इव दिशः दिगवकाशाः कस्मात् कुतो हेतोः कैरवकाननस्मितरुचा कैरववन विकास कृत कान्त्या संवर्द्धितां वृद्धिं गमिताम् उद्ग्रीवाः उन्नमितकन्धराः प्रचरन्त्यः सञ्चरणशीलाः याः चकोरतरुण्यः चकोर्यः ताभिः

---

पतञ्जलि—अब पुरुष ध्यान धारणा और समाधिसे पूर्ण है, संयम अपनी पुत्री सिद्धि पुरुषको अर्पित करे ।

जाबालि—आचार्य, यह क्या ? दिनमें सूर्यके चमकते रहनेपर भी दिशायें कैरववनकी स्वच्छकान्तिसे समृद्ध चन्द्रिकाको धारणकरके कर्पूरसे पूर्णसी, मृणालदण्डसे व्याप्तसी, बरफकी शिलाओसे भरीसी, और अमृतसागरमें निमग्नसी प्रतीत हो रही हैं । दिशाओंको उज्ज्वलता प्रदान करनेवाली उस चन्द्रिकाको गरदन उठाकर चलती हुई चकोरियाँ चुग रही हैं ॥ २५ ॥

पतञ्जलिः—वत्स, इयमसौ पुरुषमभिसरन्त्याः सिद्धेः शरीरज्योत्स्ना कृत्स्नमपि जगदुद्दीपयति।

जाबालिः—आचार्य, क एष कतिपयपुरुषपरिवारितो रुचिविजितराजपट्टो राजलक्ष्मीलाञ्छितो विद्रुत्य वने निलीयते।

पतञ्जलिः—वत्स, क्षेत्रज्ञनगरनरपतिरसौ तामसप्रकृतिर्महामोहः सिद्धिकौमुदीवृद्धिमसहमानो विद्रवन् कुमाराभ्यां द्वेषरागाभ्यामनुगम्यते।

---

पीताम् निगीर्णाम् कौमुदीम् स्वच्छाभाम् बिभ्रते धारयन्ति। कुत इयमाभा दिशो व्याप्नोति यस्यामाभायां प्रसरन्त्यां दिशां कर्पूरभृता इव नलिनी दण्डखण्डैर्व्याप्ता इव हिमशिलापरिपूरिता इव सुधासागरे निमग्ना इव च भासन्ते याश्चाभामिमाम् विकसत्कैरवकान्तिभिर्वृद्धितां, कन्धरामुन्नमय्य प्रचरन्त्यश्चकोर्य आचामन्तीत्यर्थः। आद्ये पादद्वये स्वरूपोत्प्रेक्षा चतुष्टयम्, तृतीये चरणे तद्गुणश्चालङ्कारः॥ २५॥

शरीरज्योत्स्ना—कायच्छविः। कृत्स्नम्—सकलम्। उद्दीपयति—प्रकाशयति। कतिपयपुरुषपरिवारितः—कतिभिश्चन पुरुषैः सहितः। रुचिविजितराजपट्टः—कान्तिपराजितचन्द्ररूपशिलाशकलः। कान्त्या पूर्णचन्द्रमपि विजयमान इत्यर्थः। विद्रुत्यपलाय्य। निलीयते—आत्मानं गोपयति।

क्षेत्रज्ञनगरनरपतिः—क्षेत्रज्ञो जीवः स एव नगरं तत्र नरपतिः राजा, रागद्वेष द्वारा तत्प्रवृत्ति नियन्तृतया मोहस्य राजत्वमुक्तम्। तामसप्रकृतिः—स्वभावतस्तमो गुणमयः। सिद्धिकौमुदी वृद्धिम्—सिद्धेः प्रभाया उपचयम्। विद्रवन्—

---

पतञ्जलि—यह पुरुषके पास स्वयं आती हुई सिद्धिकी देहप्रभा है जो सारे विश्वको द्योतित कर रही है।

जाबालि—चन्द्रमास्वरूप स्फटिकशिलाको अपनी कान्तिसे पराजित करनेवाला राजचिह्नसे युक्त यह कौन है जो कुछ लोगोंके साथ भागता हुआ वनमें छिप रहा है।

पतञ्जलि—यह क्षेत्रज्ञ नगरके महाराज तमःप्रधान महामोह हैं जो सिद्धिकी चन्द्रिकाको नहीं बरदास्त कर सकनेके कारण भाग रहे हैं, उनके दोनों कुमार राग तथा द्वेष उनका अनुगमन कर रहे हैं।

जाबालिः—कथमिदमाचार्येण राजविद्विष्टमनुष्ठितं कर्म, यदसौ सिद्धिः पुरुषप्राप्त्या परमप्रगल्भतां नीता।

पतञ्जलिः—श्रुतिनिदेशवशंवदा वयमस्वतन्त्रास्तया प्रेरिताः प्रवर्तामहे।

जाबालिः—ननु महामोहपरिवारेष्वेवान्तर्भूतेयमिति विश्वजनीनवृत्ति-रतिनृशंसमनुतिष्ठति भगवति। तथा हि।

**इयतो दिवसानसौ श्रुतिस्तनयौ मोहपतेरलालयत्।**
**चरमे वयसि स्थिता कथं बत विश्वस्तवधं विधित्सते ॥२६॥**

---

पलायमानः। कुमाराभ्याम्—स्वजन्यतया पुत्रस्थानीयाभ्याम्। अनुगम्यते—अनुस्रियते।

इदम्—पुरुषेण सह सिद्धेः संयोजनरूपम्। राजविद्विष्टम्—राजविरुद्धम्। राजा महामोहस्तदुच्छेदकारकतया सिद्धेः पुरुषेणयोजनमत्र राजविद्विष्टं कर्मोक्तम्। श्रुतिनिदेशवशंवदाः—श्रुत्याज्ञानुवर्त्तिनः। तया—श्रुत्या।

महामोहपरिवारेष्वान्तर्भूता—सकाम कर्मोपदेशकतया श्रुतिरपि मोहपरिवा-रान्तर्गतोक्ताऽत्र। विश्वजनीनवृत्तिः—सकललोकहिताय प्रवर्त्तमाना। अति नृशंसम्—कठोरतमं कार्यम्।

इयत इति। असौ श्रुति इयतो दिवसान् एतावद्दिवसपर्यन्तम् मोहयतेः महामोहस्य तनयौ तज्जन्यौ रागद्वेषौ अलालयत् पालितवती। (सकामकर्मोपदेश-परायाः श्रुतेर्मोहजन्यरागद्वेषपोषकताभिप्रायेणात्र श्रुतेर्मोहपुत्र लालनमुक्तम्) चरमे अन्तिमे वयसि विरागावस्थायाम् स्थिता (श्रुतिः) विश्वस्तयोः विधिवोधि-

---

जाबालि—सिद्धिको पुरुषकी प्राप्ति कराकर उसे प्रगल्भ बना दिया, यह राजद्रोहका कार्य आचार्यने क्यों किया?

पतञ्जलि—हम लोग श्रुतिके अधीन हैं, अस्वतन्त्र हैं, जो श्रुति कहती है उसी कार्यमें प्रवृत्त होते हैं।

जाबालि—यह श्रुति भी महामोहके परिवारमें ही है, यह विश्वकी भलाईके लिये अतिनृशंस कार्य भी करती है, क्योंकि—

इतने दिनोंतक यह श्रुति महाराज महामोहके कुमार राग और द्वेषका लालन पालन करती रही है, अब बुढ़ापेमें आकर जिस प्रकार वह विश्वस्तवध

पतञ्जलि—वत्स, निसर्गसुन्दरस्यापवर्गस्य साम्राज्यमभिसंधाय सर्वमचेष्टत भगवती श्रुतिः। सर्वा एव रागद्वेषलालनविधिव्यासेधप्रवृत्तयो निवृत्तिपराः। निवृत्तिः सान्वयमहामोहोन्मूलनपरेति।

जाबालिः—एवमनया सिद्ध्या नगरविषयान्निर्वासितोऽपि सूक्ष्मविषय-वननिलीनो महामोहः केन व्यापारेण प्रापणीयः परं लोकमिति।

---

कर्मविषयकत्वेन निरातङ्कयो रागद्वेषयोः वधं नाशं कथं केन प्रकारेण करिष्यति, वतेतिखेदे। रागद्वेषौ हि वेदबोधितकर्मविषयकतया श्रुतिविश्वस्तौ तयोः रागद्वेषयोः श्रुत्यावधो नितान्त नृशंसो व्यापारो भवितेति भावः। श्रुतिवशंवदैर्यमादिभिः प्रयुक्तया सिद्ध्या संयोजितः पुरुषो रागद्वेषसहितं महामोहं जिहासति इति तत्त्वम् ॥ २६ ॥

अभिसन्धाय—गूढमाशयं कृत्वा। सर्वम्—उचितमनुचितं च विश्वस्त राग-द्वेषवधादिकम्। अचेष्टत—कृतवती। रागद्वेष लालन विधिः—सकामकर्मप्रवर्त्तन विधिः। व्यासेधः—निषेधविधिः। निवृत्तिपराः—सकामकर्मद्वारा चित्तशुद्धिस्ततो निष्कामकर्मप्रवृत्तिः ततो निवृत्तिरिति सर्वेऽपि सकामकर्मप्रवृत्तिविधयः परिणामे निवृत्तावेव पर्यवस्यन्तीतिभावः।

सूक्ष्मविषयवननिलीनः—सिद्धिसम्पदा स्थूलाभिमानो नश्यति नतु सिद्ध्या सूक्ष्माणामन्तःकरणलिङ्गशरीरादिवस्तूनामभेद भ्रमो नश्यति, सतु विवेकादेव नश्यति। स एव सूक्ष्मवस्त्वभेदोऽत्र वनरूपेणोक्तः।

---

( विश्वासघात करके रागद्वेषका उच्छेद ) करने जा रही है, खेद ! ॥ २६ ॥

पतञ्जलि—वत्स, निसर्गसुन्दर अपवर्गके साम्राज्याभिषेकके उद्देश्यसे ही भगवती श्रुतिकी सारी चेष्टायें होती रही हैं। रागद्वेषका लालन तथा विधिनिषेधा-त्मकप्रवृत्तियाँ निवृत्तिपर कही रही हैं, निवृत्तिका उद्देश्य महमोहका उच्छेद ही रहा है।

जाबालि—सिद्धिने विषय नगरसे तो महामोहको निकाल दिया, लेकिन महामोह अब सूक्ष्मविषयवनमें छिप रहा है, किस व्यापारसे अब सिद्धि उसे वहाँसे परलोक पहुँचायेगी ?

पतञ्जलिः—

पूर्वं प्रमित्या परतोऽनुमित्या सिद्ध्या ततोऽस्मिन्पुरुषे प्रसक्ते ।
संगच्छमाने पुरुषोत्तमेन मोहः स्वयं प्राप्स्यति नाशमेषः ॥२७॥

( नेपथ्ये । )

अरे पुरुष, किमितस्ततो धृतिमलभमानः किमपि वस्तु मृगयसे ।

शब्दाः श्रोत्रसुखाः पदार्थगुरवो रूपाणि चित्राणि च
स्पर्शाः पक्ष्मलकोमलाः सुरभयो गन्धा रसाः स्वादवः ।
लोका भोगमया गुणाः प्रगुणतां प्राप्ताः स्वतन्त्रा गतिः

---

पूर्वमिति । पूर्वं प्रमित्या ततः तदनन्तरम् अनुमित्या ततश्च सिद्ध्या प्रसक्ते सङ्गते अस्मिन् पुरुषे जीवे पुरुषोत्तमेन सङ्गच्छमाने मिलति सति एषः मोहः स्वयं नाशं यास्यति। पुरुषस्यपूर्वं वेद प्रामाण्यं ज्ञानवर्मन्यायातमिति तस्य प्रमित्या संगतिः, ततश्च वेदं प्रमाणमास्थाय तदाधारेण परमात्मानुमित इति तस्यानुमिति संगतिः, अथ जाते परमात्मानुमाने योगवर्त्मना सिद्धिर्लब्धेति सिद्धिसंगतिः, तदीदृशः पुरुषः परमात्मना यदैव सङ्गच्छते तदैव तस्य महामोहः स्वयमेव निवर्त्तते महामोहस्य परमात्मदर्शनावधितायाः शास्त्रे साधितत्वादित्याकूतम् ॥२७॥

इतस्ततः—यत्र तत्र । धृतिमलभमानः—सन्तोषमनासादयन् ।

शब्दाः श्रोत्रेति । श्रोत्रे कर्णौ सुखयन्तीति श्रोत्रसुखाः कर्णप्रिया शब्दाः, पदार्थगुरवः गुरुतरार्थवन्तः, ( यान् श्रुत्वा भोगी तृप्यति ) चित्राणि नानाविधानि रूपाणि ( यानि दृष्ट्वा भोगी दृप्यति ) स्पर्शाः पक्ष्मणा अतएव कोमलाः, गन्धाः सुरभयः सुगन्धमयाः, रसाः स्वादवः स्वादपूर्णाः, लोकाः भोगमयाः भोगप्रचुराः गुणाः अणिमादयः प्रगुणतां प्राप्ताः स्वाधीनतां गताः, गतिः स्वतन्त्रा यथारुचि सम्पाद्या,

---

पतञ्जलि—पूर्वमें पुरुषप्रमितिसे संयुक्त हुआ, फिर उसका योग अनुमितिसे हुआ, अब पुरुष सिद्धिसे संयुक्त हो गया है, अनन्तर जब पुरुष पुरुषोत्तमसे मिल जायेगा तब मोहका स्वयं नाश हो जायेगा ॥ २७ ॥

[ नेपथ्यमें ]

अरे पुरुष, क्यों इधर-उधर अधीर होकर कुछ ढूंढ रहे हो ?

अर्थरमणीय तथा कर्णप्रिय शब्द, नानातरहके रूप, पक्ष्मल तथा कोमल

सिद्ध्या सार्धममीषु वत्स विहरञ्जीव्याः सहस्रं समाः ॥२८॥

पतञ्जलिः—इयमसौ मधुमती महामोहप्रेरिता पुरुषोत्तमदर्शनविरोधिषु विषयभोगोपसर्गेषु पुरुषं व्यापारयति।

( नेपथ्ये। )

भगवति नियते विदूरयात्रासहचरि संसरणाध्वनोऽयमन्तः।
जरति विरम निःसहासि संविन्नगरमतः परमद्वयोपभोग्यम् ॥२९॥

---

( एते दुर्लभ भोग विषयास्त्वामुपस्थिताः ) हे वत्स, अमीषु पूर्वोक्तेषु भोगेषु सिद्ध्या सार्द्धं विहरन् समानां शतम् जीव्याः। मधुमती नाम भूमिका पुरुषं प्रलोभयति, तस्या एवेयं पुरुषं प्रत्युक्तिः। समाधि साक्षात्कृतव्यवहित विप्रकृष्ट वस्तुसमुत्थो भोगो मधुमती इति योगभाष्यम् ॥ २८ ॥

विषयभोगोपसर्गेषु - पूर्वोक्त शब्दादिरूप भोगा एव उपसर्गाः पुरुषोत्तमदर्शन-रूप श्रेयः परिपन्थितयोत्पातास्तेषु। व्यापारयति—प्रवर्त्तयति।

भगवतीति। भगवति, सर्वसमर्थे, नियते, भाग्य, विदूरयात्रायां ससांरया-त्रायाम् सहचरि सङ्गिनि, संसरणाध्वनः संसारमार्गस्य अयम् अन्तः समाप्तिः। अतएव जरति वृद्धे, निःसहासि मार्गश्रान्तासि विरम निवर्त्तस्व, अतः परं संविन्नगरं मोक्षपुरम् यद् अद्वयोपभोग्यम् एकेन मयैव प्रवेश्यम्। अदृष्टस्यापि पुरुषोत्तमदर्शन

---

स्पर्श, सुरभिपूर्ण गन्ध तथा स्वादिष्टरस ( यहाँ प्राप्य हैं ) ( यहाँके ) लोक भोगमय हैं, गुण गुणान्तरसे सहकृत हैं, गति निर्बाध है, यहाँ सिद्धिके साथ विहार करते हुए सौ दिव्य वर्षोंतक जीते रहो ॥ २८ ॥

पतञ्जलि—यह मधुमती भूमिका है जो महामोहकी प्रेरणासे पुरुषको पुरुषोत्तम दर्शनके विरोधी विषय भोगकी ओर प्रवृत्त करा रही है।

[ नेपथ्यमें ]

भगवति नियते, ( अदृष्ट, ) तुमने मेरी इस लम्बी यात्रामें मेरा साथ दिया है, अब इस संसार मार्गका यहीं अन्त है, तुम वृद्ध तथा श्रान्त भी हो गई, तुम अब लौट जा, इसके आगे विज्ञाननगर है जहाँका भोग अद्वय दशामें ही प्राप्य है ॥ २९ ॥

पतञ्जलिः—साधु वत्स, नियतिरपि त्वयावधीरिता, का नाम मधुमती। तदचिरादेव संयमदुहितृसिद्धधर्मव्यापारेण पुरुषोत्तममासादयिष्यसि। वत्स शाण्डिल्य, सिद्धमस्मत्साधनीयम्। अधुना चामुना व्यापारेण न चेतितं परिणतमहः। तथा हि

**पश्यामि ध्रुवधामतोरणशिलादारुस्खलत्केतना-**

**दस्मात्सौधनिकेतनाज्जलनिधेः संध्यापिशङ्गीरपः।**

---

पूर्वकालपर्यन्तमेव फलप्रदतेति शास्त्रस्वारस्येन पुरुषोऽदृष्टमपि स्वतो वियोजयति अत्र बहुं देशं यावत्सहचरन्त्या वृद्धायाः श्रान्ताया अग्रेतने नगरे निषिद्ध प्रवेशायाश्च कस्याश्चित् स्त्रियो वृत्तान्तोऽत्र नियतिवृत्तान्तेऽध्यारोपितः। नियतिर्जन्मपरम्परासहचरीति सर्वमत सिद्धम्। अद्वयोपभोग्यं संविन्नगरे आत्मनिर्विकल्पके प्रत्यक्षे मोक्षहेतावद्वितीयस्य पुरुषस्य प्रवेशो विषयतयाऽनुमन्यते, नियतिस्तु सहकारितयापि तत्र नानुमतेति विवक्षितं बोध्यम् ॥ २९ ॥

नियतिरपि त्वयाऽवधीरिता—अदृष्टमपि त्वया तिरस्कृतम्। चेतितम्—ज्ञातम्। परिणतम् समाप्तम्। अहः—दिनम्।

पश्यामीति। ध्रुवधाम दक्षिणोत्तर ध्रुवस्थानम् एव तोरणं बहिर्द्वारम् तस्य यत् शिलादारु स्तम्भाधःस्थितं काष्ठम् तत्र स्खलत् पतत् केतनं पताकादण्डो यस्य तस्मात् ध्रुवधाम तोरणशिला दारुस्खलत् केतनात् ध्रुवस्पर्शिपताकादण्डात् अत्युच्छ्रितादित्यर्थः। अस्मात् स्वाधिष्ठितात् सौधनिकेतनात् राजप्रासादात् जलनिधेः समुद्रस्य सन्ध्या पिशङ्गीः सान्ध्यप्रभारञ्जिततया पिङ्गलवर्णाः अपः जलानि पश्यामि, यासां जलनिधेः अपाम् कुक्षिविले बिलवद् गभीरायां कुक्षौ मध्यभागे जगत्कासार कूर्मो जगद्रूपसरोवरस्यकच्छपः रविः सूर्यः परितः सर्वतः हरित्सु दिशासु

---

पतञ्जलि—साधु वत्स, तुमने तो अदृष्टको भी छोड़ दिया, फिर मधुमती कौन है? अब शीघ्र ही संयमकी पुत्री सिद्धिके धर्म व्यापारसे तुम पुरुषोत्तमको प्राप्त करोगे। वत्स शाण्डिल्य, हम लोगोंका कार्य सम्पन्न हो गया। इसी व्यापारमें दिन भी समाप्त हो गया।

दक्षिणोत्तर ध्रुवस्थानस्वरूप तोरणद्वारकी शिलादारुपर जिसका पताका लहरा रहा है (अत्युच्च) ऐसे इस राजप्रासादपरसे मैं सन्ध्यारञ्जित सागरका जल

विक्षिप्तान्परितो हरित्सु युगपत्संक्षिप्य पादानसौ
यासां कुक्षिविले मिमङ्क्षति जगत्कासारकूर्मो रविः ॥३०॥

अपि च।

पौरस्त्येतरसिन्धुनायकपयः पराजिरे चुम्बित-
द्राघीयः प्रतिबिम्बमम्बरतटव्यालम्बि बिम्बं रवेः।
संध्यानाटकरङ्गवाटविषये शक्रध्वजं हाटक-
स्तम्भोत्तम्भितशातकुम्भकलशापेतं समाधित्सति ॥३१॥

विक्षिप्तान् प्रसृतान् पादान् किरणान् चरणांश्च युगपत् तुल्यकालम् संक्षिप्य संकोच्य मिमङ्क्षति मङ्क्तुमिच्छति। अत्रमहोच्चतया ध्रुवधामचुम्बिकेतने राजप्रासादे स्थितोऽहं सायंप्रभया पिङ्गलवर्णतां गतानि सागरस्य जलान्यवलोके येषु जलेषु जगद्भ्रमणपरः सूर्यः सर्वतो दिशासु प्रसृतान् किरणान् संहृत्य सूर्यो मिमङ्क्षति यथा कूर्मो निजपादान् संक्षिप्य पयसि मज्जति उदात्तं रूपकं चालङ्कारौ। 'तोरणोऽस्त्री बहिर्द्वारम् 'केतनं ध्वजमस्त्रियाम्' 'अधस्ताद् दारुणिशिला' 'कासारः सरसी-सरः' 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्चता' इति सर्वत्रामरः ॥ ३० ॥

पौरस्त्येतरेति। एतत् अम्बरतट व्यालम्बमानम् आकाशात् लम्बमानम् रवेः बिम्बम् सूर्यमण्डलम् पौरस्त्येतरः पश्चिमः सिन्धुनायकः सागरः तस्य पयः पूरः प्रवाह एव अजिरं चत्वरं तत्र चुम्बितं प्रतिसङ्क्रान्तं द्राघीयः अतिदीर्घम् प्रतिबिम्बं यस्य तथाभूतं स्तम्भायमानं सत् सन्ध्यायाः ( नट्याः ) यन्नाटकम् तस्य रङ्गवाटो रङ्गस्थलम् तत्र हाटकस्य सुवर्णस्य स्तम्भे उत्तम्भितः उपरिस्थापितो यः शातकुम्भस्य सुवर्णस्य कलशः तेन उपेतं युक्तं शक्रध्वजं नाम स्तम्भं समाधित्सति

देख रहा हूँ। सूर्य अपनी फैली हुई किरणोंको एकाएक समेटकर उस जलमें डूबना चाह रहा है जैसे कछुआ अपने पैरोंको समेटकर सरोवरमें डूब जाता है ॥३०॥

पश्चिम महासागरके जलप्रवाहरूप प्राङ्गणमें दीर्घप्रतिबिम्ब डालनेवाला यह आकाशपर लटकता हुआ सूर्यबिम्ब सन्ध्या नाटकके रङ्गस्थलमें सुवर्णस्तम्भस्वरूप स्वरूप इन्द्रध्वजा पर स्थापित सुवर्ण कलशकी तुलना कर रहा है ॥ ३१ ॥

जाबालिः—भगवन् उपाध्याय, दर्शनीयमिदमग्रतः। पश्य

**मग्नार्धो वरुणालयाम्बुनिधमद्धूमोद्गमो लक्ष्यते**
**गौकर्णायतरश्मिसूचिजटिलः पृष्ठावशिष्टो रविः।**
**वासश्वभ्रमभिप्रवेष्टुमवनीमर्माविधः श्वाविधो**
**व्याधास्त्रव्यधशोणिताक्तशललीशालीव पश्चाद्वपुः ॥३२॥**

---

अनुकर्त्तुमिच्छति। अत्र सन्ध्या नटी, समुद्रस्तत्कार्यं नाटकरङ्गस्थलम्, समुद्रे लम्बमानं प्रतिबिम्बं पर्यन्तपाति तेजः सुवर्णनिर्मितः शक्रध्वजनामास्तम्भः उपस्थितं सूर्यबिम्बं च तत्र स्तम्भे न्यस्यमानः सुवर्णकुम्भ इति। यथायथमूह्यम्। 'तपनीयं शातकुम्भम्' इत्यमरः ॥ ३१ ॥

मग्नार्ध इति। वरुणालयाम्बुनि सागरजले मग्नार्धः अर्धभागेनास्तङ्गतः धमद् धूमोद्गमः उपनत धूमोद्गमः धूपप्रसार सहितः अङ्गुष्ठानामिकयोः प्रसारितयोर्यदन्तराल परिमाणं स गोकर्णः तद्वत् आयताः विस्तारभाजः ये रश्मयः किरणास्त एव सूचयः कण्टकास्तैर्जटिलः व्याप्तः पृष्ठावशिष्टः पृष्ठभागमात्रेणावशिष्यमाणः ( अधमार्गे जलमग्ने सति तावानेवावशिष्येत ) रविः सूर्यः वासश्वभ्रम् निवासस्थानभूतं बिलम् अभिप्रवेष्टुं सङ्क्रमितुम् अवनी मर्माविधः पृथ्वीमध्यभागं विध्यतः श्वाविधः शल्यस्य व्याधस्य अस्त्रेण व्यधः प्रहारस्तेन यत् शोणितं रक्तं तेन अक्ताः रञ्जिताः शलल्यः रोमाणिताभिः शालते शोभते तादृशं पश्चाद् वपुः शरीरपश्चार्धभाग इव लक्ष्यते प्रतीयते समुद्रे निमग्नार्धभागो धूमानुयातः वितस्ति प्रमाणकिरणरूपी सूची व्याप्तः पृष्ठभागमात्रावशिष्टो रविः स्वावास बिलप्रवेशाय पृथ्वीं विदारयतस्तत्क्षणमेव च व्याधेन प्रह्रियमाणतया रक्तस्रवे जाते रक्ताभिः

---

जाबालि—भगवन् उपाध्याय, देखनेके योग्य तो यह आगे है, देखिये-सूर्यका आधा भाग समुद्रके जलमें डूब गया है, धुँआसा निकलता दीख रहा है, गोकर्णके इतना लम्बा सूचीसदृश किरणसमूह जिसके चारों ओर व्याप्त है, ऐसा सूर्यका पृष्ठभाग शेष रह गया है। वह आधा भाग ऐसा प्रतीत होता है मानो वासबिलमें प्रवेश करनेके लिये पृथ्वीके मर्मको विदारित करनेवाले शाहीका व्याधके अस्त्रप्रहारसे रक्ताक्त कांटोंसे भरा पिछला शरीरभाग हो ॥ ३२ ॥

पतञ्जलिः—(निरूप्य) कथमयमामूलोत्खातमयूखजालविवरावलिजर्जरो गगननागरङ्गफलनिस्तलस्तुलितसंध्याभिषेकसहस्रधारताम्रकलशः सशिखमुण्डितहूणमुण्डपिण्डायमानमण्डलो भगवान्मार्तण्डो वारुणवरुणालये निमग्न एव। पश्य

धूमायते सिमसिमायितमातनोति
फेनायते विवृतबुद्बुदधारमम्भः।
मग्नोऽपि पश्चिमसरस्वति दूरमाभि-

---

शल्लीभिः शोभमानं शल्यस्य पश्चाद्वपुरिव प्रतिभातीत्यर्थः। 'प्रादेशतालगोकर्णास्तर्जन्यादियुते तते। अङ्गुष्ठे' इत्यमरः। 'सुषिरं विलम्। छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रम्' इति 'श्वावित्तु शल्यस्तल्लोम्नि शल्ली शललं शलम्' इति चामरः॥ ३२॥

आमूलोत्खातमयूखजालविवरावलिजर्जरः—मूलेन सह उत्खातेषु उत्पाटितेषु मयूखजालेषु किरणसमूहेषु याः विवरावलयः छिद्रसमूहास्तैर्जर्जरः सहस्रच्छिद्रतां गततया जीर्णः। गगननागरङ्गफलनिस्तलः—गगनरूपस्य तरोर्नागरङ्गफलवत् वर्त्तुलः। सन्ध्याभिषेकसहस्रधारताम्रकलशः—सन्ध्याया देव्या अभिषेके स्नपने उपयुज्यमानः सहस्रधारावर्षकस्ताम्रघटः। सशिखमुण्डितहूणमुण्डपिण्डायमानमण्डलः—सशिखं शिखाभिः सह मुण्डितं यत् हूणस्य जातिभेदस्य मुण्डपिण्डम् पिण्डाकृति शिरः तद्वदाचरन्मण्डलं यस्य तथोक्तः। सर्वत्रोत्प्रेक्षालङ्काराः॥

धूमायत इति अम्भः समुद्रजलम् धूमायते धूमवदुज्जृम्भते, सिमसिमायितम् 'सिमसिम' इति अनुकरणशब्दस्तद्वच्छब्दम् आतनोति करोति। फेनायते फेनमुद्गमति। विवृतबुद्बुदधारम् प्रकटीकृतबुद्बुदसमूहं च भवति। तदेवं पश्चिमसरस्वति पश्चिमसागरे सुदूरं मग्नः चिरनिमग्नोऽपि रविः आभिः

---

पतञ्जलि—( देखकर ) जड़मूलसे किरणोंके उखड़ जानेके कारण उत्पन्न छिद्रोंसे जर्जर, आकाशवृक्षोत्पन्न नारङ्गीकी तरह गोल, सन्ध्याभिषेकोपयुक्त सहस्रधार कलशकी तरह प्रतीत होने वाला, सशिखमुण्डित हूणजातीय पुरुषमुण्ड सदृश भगवान् सूर्यका मण्डल समुद्रमें लीन हो गया। देखिये—

सूर्यके डूबनेसे जलमें धूम निकल रहा है, सिमसिमाहट फैल रही है, बुलबुले

निर्धूयते न रविरच्छतराभिरद्भिः ॥ ३३ ॥

किं च ।

अद्भिः करप्रकरनिर्गमरन्ध्रमार्ग-
निःशूषिताभिरतिभारगुरूदरोऽर्कः ।
निर्वाति लुञ्चितकदम्बतुलामुपैति
क्षिप्रं निमज्जति च पश्चिमसिन्धुपूरे ॥ ३४ ॥

( इति निष्क्रान्ताः सर्वे । )

इति निदिध्यासनधर्मसंपन्नाम तृतीयोऽङ्कः ।

---

प्रत्यक्षदृश्याभिः अच्छतराभिः अतिस्वच्छाभिः अद्भिः जलैः न निहूयते न प्रच्छाद्यते ॥ ३३ ॥

अद्भिरिति । करप्रकराणां किरणसमूहानां निर्गमाय बहिःप्रसरणाय यः रन्ध्रभागः छिद्रम् तेन छिद्रगणेन निःशूषिताभिः प्रविष्टाभिः अद्भिः समुद्रजलैः अतिभारगुरूदरः भृतमध्यभागतया भारवान् अर्कः सूर्यः निर्वाति दीप इव निर्वाणं प्राप्नोति, ( किरणापायेन ) लुञ्चितकदम्बतुलाम् किञ्जल्करहितकदम्बसाम्यम् उपैति पश्चिमसिन्धुपूरे पश्चिमसागरपयसि निमज्जति लीयते च ॥ ३४ ॥

इति मैथिलपण्डितश्रीरामचन्द्रमिश्रप्रणीते अमृतोदयप्रकाशे
तृतीयाङ्कप्रकाशः ।

---

निकल रहे हैं, सूर्य यद्यपि पश्चिम सागरमें डूब चुका है तथापि पानीकी स्वच्छतासे वह छिप नहीं गया है ॥ ३३ ॥

किरणोंके निकल जानेसे उनके रिक्त स्थानोंने पानी शोख लिया है जिससे सूर्यबिम्ब अतिभारशाली हो गया है, वह ऐसा लगता है मानो लुञ्चित कदम्ब-पुष्प हो, इस प्रकार सूर्य पश्चिममें डूब रहा है ॥ ३४ ॥

[ सबका प्रस्थान ]

[ निदिध्यासन धर्मसम्पत्तिनामक तृतीय अङ्क समाप्त ]

## चतुर्थोऽङ्कः ।

( ततः प्रविशति पुरुषः । )

पुरुषः—हन्त हन्त, प्रसन्नं मे भगवता समाधिधर्मसिद्धिमुत्पादयता संयमेन । यतः—

**कर्मभ्यः परमक्षिपाणिचरणश्रोत्रोज्झितं चेतना-**
**मात्रापेतमितस्ततश्च फलितब्रह्माण्डलिक्षाचयम् ।**

---

हन्त हन्त—हर्षद्योतकमव्ययम्, आनन्दातिशयद्योतको द्विःप्रयोगः । भगवता—सामर्थ्यशालिना । समाधिधर्मसिद्धिम्—समाधिर्मनोनिग्रहस्ततो यो धर्मस्तस्य सिद्धिम् निष्पत्तिम् । उत्पादयता—जनयता । संयमेन—तदाख्येन कर्मणा । मे मह्यम् । प्रसन्नम्—प्रसादः कृतः । साधनसम्पदाऽऽत्मदर्शनं भवति, संयमश्च साधनसम्पदमुपपादयति, तदस्य पुरुषस्य संयमः साधनसम्पदं समाधिधर्ममुपपाद्या-स्योपरि स्वां प्रसन्नतां प्रकटितवानिति भावः । तामेव साधनसम्पदुपपादनानुमितां संयमस्य प्रसन्नतां समर्थयितुं वक्ष्यति :—

कर्मभ्य इति । कर्मभ्यः नित्यनैमित्तिककाम्यभेदात् त्रिधा विभक्तेभ्यः परम्—अपरामृष्टम् । ( 'परङ्कर्मभ्योऽमृतत्वमानशुः' इति श्रुतिरस्य पुरुषोत्तमस्य कर्मापरा-मृष्टतायां साक्षिणी ) अक्ष्णा नयनेन पाणिना हस्तेन चरणाभ्याम् पादाभ्याम् श्रोत्रेण कर्णेन्द्रियेण च उज्झितं रहितम् । ( 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इति श्रुतिसाक्षिकेयमुक्तिः ) चेतनया—ज्ञानेच्छाप्रयत्नरूपया चेष्टया मात्रैः शरीरेन्द्रियैश्च अपेतम् हीनम् । इतस्ततश्च सर्वतः फलितः सञ्जातः ब्रह्माण्डानि जगन्ति एव लिक्षाः यूकाण्डानि तेषां चयः समूहो यत्र तादृशम् ।

---

[ पुरुषका प्रवेश ]

पुरुष—अहा ! संयम भगवान्‌ने समाधिसिद्धिके द्वारा मुझपर कृपा प्रदर्शित की है, क्योंकि—

मैं उस पुराणपुरुषको मायाकी जवनिकाको चीर कर प्रकटरूपमें देख रहा

आम्नायान्तनिकेतकोणशयितं पश्यामि मायाजर-
त्कन्थाग्रन्थिविदारणेन विवृतं वृद्धं परं पूरुषम् ॥ १ ॥

( प्रणम्य । ) भगवन् आपन्नकरुणानिधे,

विषमनिगमकाननान्तशाखाव्यतिकरवेष्टितमूर्तये नमोऽस्तु ।
बहुतरजगदण्डबीजपूरप्रसवफलेग्रहिपादपाय तुभ्यम् ॥ २ ॥

आम्नायो वेदस्तस्यान्तश्चरमभाग उपनिषत् स एव निकेतो गृहं तस्य कोणे क्वचिदेकभागे शयितं स्थितम् ( वेदान्तप्रतिपाद्यम् ) माया अनाद्यविद्या एव जरत्कन्था जीर्णं प्रावरणं तस्याः ग्रन्थिर्महामोहस्तस्य विदारणेन भेदनेन विवृतम् व्यक्तीभूतम् वृद्धं सर्वतः पुराणम् परम्पूरुषम् परमात्मानम् पश्यामि साक्षात्करोमि ( तन्मे संयमः समाधिधर्ममुपपाद्य मे प्रसादं दर्शितवानिति भावः ) कश्चिद् वृद्धः पूरुषोऽपि निरस्तकर्मा करणगणरहितोऽचेतनः श्लथीभूतकायो लिक्षाचयावृतः क्वचन गृहकोणे शयितो जीर्णप्रावरणभेदनदृश्यश्च यथा साक्षात्कृतो भवति तथायं परमात्मापीति तुलना ) एतेन ईश्वरस्य—'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति लक्षणं प्रतीङ्गितं कृतं बोध्यम् ॥ १ ॥

भगवन्—सर्वसामर्थ्यशालिन् । आपन्नकरुणानिधे—शरणागतजनदयालो ।

विततेति । वितताः विस्तृताः विविधाः नानाभेदभिन्नाः सम्प्रदायाः शैववैष्णवादिप्रस्थानभेदाः ते एव शाखाः तासां व्यतिकरेण समूहेन वेष्टिता आवृता मूर्त्तिः स्वरूपं यस्य तस्मै तथोक्ताय । बहुतराणि असङ्ख्यातानि जगदण्डानि एव बीजपूराणि मातुलुङ्गफलानि तेषां प्रसवः उत्पत्तिस्थानम् स चासौ फलेग्रहिः यथासमयं फलप्रसवी पादपो वृक्षस्तस्मै तद्रूपाय तुभ्यं परमात्मने नमोऽस्तु । यथाऽन्यो वृक्षो नानाशाखावेष्टितः फलप्रसवी च भवति तथाऽयं परमात्मा नाना

---

हूँ, जो समस्त कर्मसे परे, आँख, हाथ, पैर, कान आदिसे रहित, केवल चेतनामय है, तथा जिसमें ब्रह्माण्डस्वरूप असंख्य लीख फले हुए हैं ॥ १ ॥

( प्रणाम करके ) भगवन् अपारकरुणासागर,

फैली हुई नाना सम्प्रदायरूप शाखासे वेष्टित, अनन्त ब्रह्माण्डरूप बीजपूर फलके जन्मदाता तुम सफल वृक्ष हो, मैं तुम्हें नमस्कार करता हूँ ॥ २ ॥

( प्रविश्य पटावृतः पुरुषोत्तमः । )

पुरुषोत्तमः—अरे पुरुष, कच्चित्त्वया दृष्टमात्मनः स्वरूपम् ।

पुरुषः—भगवन् अनादिनिधन चिदानन्द निधे,

जगदिदमुपजीवयत्यविद्यातिमिररिपौ त्वयि न स्वमप्यवैमि ।

प्रतपति तपनातपे तपतौ भजति यदान्ध्यमसावुलूकलोकः ॥३॥

---

संप्रदायवेष्टितो बहुविधब्रह्माण्डरूपफलप्रसवी च विद्यते, नमोऽस्तु तस्मै इत्यर्थः । परम्परितरूपकमलङ्कारः ॥ २ ॥

पटावृतः—प्रथमं बहिरर्थावृत एवात्मा प्रकाशते इति पुरुषोत्तमस्यात्र पटावृतस्य प्रवेश उक्तः, पटपदमत्र बहिरर्थपरम् ॥

कच्चित्त्वया दृष्टमात्मनः स्वरूपम्—किं त्वमात्मनः स्वरूपं ज्ञातवान् ? "कच्चित्कामप्रवेदने" स्वाभिप्रायाविष्करणं नाम कामप्रवेदनम् ॥

अनादिनिधन—न विद्यते आदिः उत्पत्तिः निधनम् अन्तश्च यस्य तादृश, जन्ममृत्युरहित । चिदानन्दनिधे—चितः ज्ञानस्य आनन्दस्य च निधे आश्रय ।

जगदिदमिति । अविद्यातिमिररिपौ मायारूपस्य तमसो निवारके तेजोधामनि त्वयि परमात्मनि इदम् प्रत्यक्षदृश्यम् जगत् भुवनम् उपजीवयति पुष्णति प्रकाशयति वा सति अहम् पुरुषः स्वम् आत्मानम् अपि न अवैमि कुतोऽहङ्कस्याहं कोऽहमिति व्यवच्छिद्य नावगच्छामि । ( भवत्प्रकाशेनाविद्यातमसि निगीर्णे सति सर्वत्रात्मभूतं भवन्तमेव पश्यन् भवद्व्यतिरेकेणात्मानमपि नावगच्छाम्यहमिति तात्पर्यम् ) तत्र दृष्टान्तमाह –तपत्तौ ग्रीष्मसमये तपनातपे तपनस्य सूर्यस्य आतपे आलोके तपति दीप्यमाने सति यत् उलूकलोकः दिवान्धवर्गः आन्ध्यम् दृक्प्रति-

---

[ पटावृत पुरुषका प्रवेश ]

पुरुषोत्तम—अरे पुरुष, क्या तुमने आत्माका स्वरूप देखा है ?

पुरुष—हे अनादि अनन्त, ज्ञानस्वरूप एवं आनन्दमय,

अविद्यास्वरूप अन्धकारके सूर्य आप इस विश्वको प्रकाशित कर रहे हैं ( उस प्रकाशमें ) मैं अपनेको भी ( अलग ) नहीं देख रहा हूँ ( फिर आत्माके स्वरूपकी क्या बात ? ) । ग्रीष्मके दिनोंमें सूर्यके चमकते रहनेपर भी उलूकगण अन्धे हो जाया करते हैं ॥ ३ ॥

पुरुषोत्तमः—अपि त्वया विदितो मम महिमा।

पुरुषः—अपारमहिमन् अनन्त,

बहुतरजगदण्डभारभर्तुर्नहि महिमानमहं तवावयामि।

मशक इव शलाटुगर्भजन्मा विटपबृहत्त्वमुदुम्बरद्रुमस्य ॥ ४ ॥

पुरुषोत्तमः—एवमप्यनन्यशरणः कथं मामाश्रितवानसि।

---

घातं भवति प्राप्नोति। यथा ग्रीष्मे सूर्यालोके सत्यपि उलूकलोक आन्ध्यं भवति तथैवाहं त्वयि जगद्रूपेण दृश्यमाने सति त्वं त्वत्पृथग्भूतं ज्ञातुं न शक्नोमीत्याशयः। निदर्शना स्फुटा ॥ ३ ॥

अपि त्वया विदितो मम महिमा? जानासि त्वं मदीयं महिमानं किम्? अपिरत्र प्रश्नार्थः 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इत्यमरः ॥

अपारमहिमन्—अनन्तमहिमशालिन्।

बहुतरजगदिति। अहम् बहुतरजगदण्डानाम् अनेककोटिब्रह्माण्डानाम् भारो गरिमा तस्य भर्त्तुः वहनसमर्थस्य (भारः पोषणं तस्य भर्त्तुः कर्त्तुर्वा) तव पुरुषोत्तमस्य महिमानम् महत्त्वम् नहि अवयामि नैव जानामि। तदेव दृष्टान्तेन प्रमाणयति—मशक इवेति। शलाटुः अपक्वं फलम् तस्य गर्भे अभ्यन्तरभागे जन्म यस्य तादृशो मशकः क्षुद्रजन्तुः उदुम्बरद्रुमस्य जन्तुफलवृक्षस्य विटपानां शाखादीनां बृहत्त्वमिव महत्त्वविस्तारमिव। यथाऽपक्वफलान्तःप्रसूतो मशकः स्वकारणभूतस्योदुम्बरवृक्षस्य शाखाविस्तारं न जानाति तथैवाहं त्वामपि न जाने शलाटुस्थितस्य मशकस्याक्षिणी वृक्षफलत्वचावृते भवतो मम पुनर्मतिः प्रगाढमायावृतेति स्फुटं सादृश्यम्। 'आमे फले शलाटुः स्यात्' इत्यमरः ॥ ४ ॥

अनन्यशरणः—अन्यं त्रातारमलभमानः।

---

पुरुषोत्तम—क्या तुमने मेरी महिमा जान ली है?

पुरुष—आपकी महिमा अपार एवं आप अनन्त हैं,

बहुतसे ब्रह्माण्डभारको धारण करनेवाले आपकी महिमाको मैं नहीं जानता हूँ, जैसे (गूलरके) कच्चे फलमें पैदा होनेवाला कीड़ा उस गूलरवृक्षकी विशालताको नहीं जानता है ॥ ४ ॥

पुरुषोत्तम—इस तरह अनन्यशरण होकर तुम कैसे हमारे आश्रयमें आगये हो?

पुरुषः—भो भूतभावन,

भवदभिमतमेव सेवमानो हितमहितं च वृथा त्वयास्मि बद्धः।
तदपि कतममाश्रये शरण्यं बत परवानितरः पतिस्त्वमेकः ॥५॥

पुरुषोत्तमः—कथमात्थ मदीहितमिदं वृथेति।

---

भूतभावन—संसारजनक।

भवदभिमतेति। (स्वयं हितमहितं च विवेक्तुमक्षमतया) हितमहितञ्च सर्वमपि भवता अन्तर्यामिणा अभिमतम् अनुमोदितम् एव सेवमानः आश्रयन् अहम् त्वया ('जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः। केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि' इत्युक्तिदिशा स्वयं प्रवर्त्तकत्वं श्रयताऽपि) वृथा व्यर्थम् विनैव कमप्यपराधम् बद्धः अस्मि। तदपि अनपराधबन्धनेऽपि कतमम् अन्यम् शरण्यम् रक्षकम् आश्रये यामि, बतेति खेदे, इतरः सर्वोऽपि परवान् त्वया पराधीनः त्वदायत्तः, त्वम् एकः सजातीयद्वितीयरहितः स्वामी आज्ञापको वर्त्तसे। अन्तर्यामिणा त्वया प्रेर्यमाणोऽहं हितेऽहिते च त्वयाऽभिमते एव प्रावर्त्तिषि अतस्त्वदधीनप्रवृत्तेर्मम त्वया बन्धनं क्रियमाणं न युक्तमिति पूर्वार्द्धभागार्थः। ननु यद्यहं त्वामकारणमेव बद्धवांस्तदा त्वमन्यं त्रातारं किमर्थं नाश्रयसे? इत्यपेक्षायामाह—तदपीति। त्वया विनैवापराधं बद्धस्यापि मम नास्ति रक्षकान्तरप्राप्तेराशा, सर्वस्यापि त्वत्परतन्त्रतया स्वतन्त्रत्वाभावेन त्वदनुसारित्वादिति भावः। सर्वस्यापि पुरुषोत्तमपरतन्त्रत्वमुक्तं यथा—'भीषा यस्य वायुर्वाति भीषोदेति सूर्यः' 'यद् भयाद् वाति वातोऽयं सूर्यस्तपति यद् भयात्' ॥५॥

कथमात्थ—कथं कथयसि। मदीहितम्—मया काम्यमानम् वृथा—फलशून्यम् ममाभीष्टस्य फलशून्यत्वं त्वया कथमुपपाद्यते इत्याशयः।

---

पुरुष—हे सृष्टिनिर्माता,

मैं आपके अभिमत हित या अहितका सेवन कर रहा था, फिर आपने मुझे बन्धनमें कैसे डाल दिया? इस स्थितिमें भी मैं दूसरे किसकी शरण जाऊँ? आखिर आपके अतिरिक्त सभी पराधीन हैं, स्वामी तो एक आपही हैं ॥ ५ ॥

पुरुषोत्तम—कैसे कहते हो कि यह हमारी चेष्टा निरर्थक है?

पुरुषः—नाथ, विमृशन्नपि नेदमवधारयामि किमत्राभिसंहितं भगवतः। यतः—

**नव इव वशगो भवामि यासामहमपहस्तितसर्वभूतपूर्वः।**
**प्रकृतिचरितनाट्यसूत्रधार भ्रमयसि मामियतीषु भूमिकासु ॥ ६ ॥**

पुरुषोत्तमः—ननु नटा इव भूमिकाभिः पुरुषा अध्यारोपिताभिः शरीर-

---

विमृशन् विचारयन्। अवधारयामि निश्चिनोमि। अभिसंहितम् गूढाशयः। मद्बन्धने भवत किमप्यतिरहस्यभूतमभिप्रेतं विचार्याप्यनुपलभमानेन मया स्वबन्धनस्य वृथात्वमुक्तमित्यर्थः।

नव इवेति। प्रकृतिचरितनाट्यसूत्रधार प्रकृत्या मायायाश्चरितञ्जगदेव नाट्यं तस्य सूत्रधार—प्रवर्त्तक, जगन्नियामक, माम् इयतीषु चतुरशीतिलक्षमितासु भूमिकासु वेषरचनासु ( योनिविशेषेषु ) भ्रमयसि संचारयसि, यासाम् भूमिकानाम् मध्ये अपहस्तिता हस्तेनापवर्जिता निरस्य दूरीकृता विस्मृतेति यावत्। सर्वा भूतपूर्वा पूर्वं जाता भूमिका येन तादृशोऽहं नवः नूतनो नट इव वशगः त्वदधीनो भवामि संसरामि। अन्यो हि नटः रूपान्तरमाधाय रङ्गमञ्चमवतरन्नपि स्वेन गृहीतपूर्वामपि राजादिभूमिकां स्मरति, अहं तु स्वयं गृहीतपूर्वामपि भूमिकां न स्मरामि ( अजातिस्मरत्वादिति ) तन्मामियतीषु भूमिकासु त्वं भ्रमयसि यास्वहं नवो नट इव भ्रमामीत्यर्थः। नटान्तरापेक्षयाऽत्र नटे व्यतिरेकः पूर्ववृत्तभूमिकाऽस्मरणात्। "भूमिका रचनायां स्याद्वेषान्तरपरिग्रहे।" इति मेदिनी ॥६॥

यथा नटाः स्वलीलाभिः सामाजिकानां मनोविनोदं जनयन्ति तथैव पुरुषा अपि आरोपितशरीरबन्धाः सन्तः पुरुषोत्तमं रञ्जयन्तीति पुरुषोत्तमस्य पुरुषाणां शरीरग्रहणप्रयासो न विफलस्तथा च वृथा त्वयास्मि बद्ध इति तव पुरुषस्य कथनं कथं युज्येतेति कथयति—ननु नटा इति।

---

पुरुष—बहुत विचार करनेके बाद भी मैं यह निश्चय नहीं कर सका हूँ कि इसमें आपका क्या गूढ़ अभिप्राय है ? क्योंकि—

पहले ग्रहण की गई भूमिकाको मिटाकर मैं जिन नई-नई भूमिकाओंमें नया-नया मालूम पड़ा करता हूँ, प्रकृतिविरचित नाटकके सूत्रधार आप मुझे इन सारी भूमिकाओंमें भ्रमण करनेको प्रेरित करते हैं ॥ ६ ॥

पुरुषोत्तम—संसारकी रचनामें पहला कारण तो यही है कि जैसे नाटकमें

परम्परामिहासयन्तीति तावत्प्रथमं मम संसारप्रवर्तने निमित्तम्।

पुरुषः—हन्त भोः, अद्यापि मामनुकम्पस्व।

**वरमुपहसनीयवर्णिकोऽहं विविधविकारविडम्बितस्वरूपः।**
**तदपि कृतकहासमात्रहेतोर्विरम निवारय निःसहोऽस्मि मायाम् ॥७॥**

---

अथापि—काममस्तु तवेहितं सफलम्, तथापि मम दयस्व, सत्यपि मम शरीरबन्धेन तव मनोरञ्जनस्य शक्यक्रियत्वे मया निःसहमनसा तथा भूयोऽपि कर्त्तुमशक्यत्वादिति वाक्यार्थः।

वरमुपहसनीयेति। विविधैः नानाभेदभिन्नैः विकारैः कामादिभिः षड्भिः अस्ति जायते विपरिणमते वर्द्धतेऽपक्षीयते नश्यतीत्येतैर्भूतविकारैर्वा विडम्बितं हाससाधनतां गमितं स्वरूपं यस्य सोऽहम् उपहसनीयः हासयोग्यः वर्णकः चारणः वरम् काममस्मि, तथापि कृतकहासमात्रहेतोः कृत्रिमहासमात्रमुपपादयितुं क्रियमाणादस्माद् वृथा मद्बन्धनरूपाद् व्यापारात् विरम निवृत्तो भव। ननु मायैव त्वां भ्रमयति नाहमतो वृथा तवेयं प्रार्थनेत्यत्राह—मायां स्वाधीनामिमां मायां निवारय, यतोऽहं सर्वथा निःसहः श्रान्तोऽस्मि। यथा कश्चन राजा स्वभृत्येष्वेकतमं कयापि दास्या विरूपितं कारयित्वा हासं भजते, स च भृत्यस्तस्य तेन व्यापारेण नितान्तश्रान्तः सन् तं राजानं स्वमुक्तये प्रार्थयते तथैवेयं प्रार्थना पुरुषस्य पुरुषोत्तमं प्रति बोध्या। अत्र दासी माया,। अन्यत्स्पष्टम्। 'वर्णकश्चारणे' इति मेदिनी। 'देवाद् वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये' इत्यमरः ॥ ७ ॥

---

नटगण अपनी भूमिकाओंसे ( लोगोंको ) हँसनेका अवसर देते हैं उसी तरह आरोपित नाना देहों द्वारा पुरुष मुझे हँसनेका अवसर देते हैं।

पुरुष—हाय, अब भी तो मुझपर कृपा कीजिये—

भले ही मैं नाना विकारोंसे स्वरूपको विगाड़कर आपको हँसानेके लायक वेष धारण करता होऊं, परन्तु केवल क्षणिक हासमात्रके लिये ( आप मुझे नचा रहे हैं यह ठीक नहीं है ) मैं नितान्त श्रान्त हो गया हूँ, कृपया अपनी मायाको निवारित कीजिते ॥ ७ ॥

पुरुषोत्तमः—केन हेतुना मयानुकम्पनीयोऽसि।

पुरुषः—ननु ममानन्यशरणतया त्वदायत्तता प्रथमो हेतुः। पश्य

भवदभिरुचितासु मे क्रियासु व्यवहरतोऽनुदिनं हिताहितासु।
जननिधनबन्धमोचनेषु प्रभुरसि भूतपते तवास्मि दासः ॥८॥

पुरुषोत्तमः—कथमनन्यशरणोऽसि। स्मरसि नाम मामचिन्तयन्नेव चिरतरममीषु विविधप्रकारेषु कलेवरेषु विहरमाणो गमयसि स्म समयम्।

---

अनुकम्पनीयः—दयनीयः।

अनन्यशरणतया—रक्षकान्तरराहित्येन। त्वदायत्तता—त्वन्मात्राधीनता।

भवदभिरुचितास्विति। हे भूतपते सकलप्राणिपालक, भवदभिरुचितासु अन्तर्यामिणस्तवानुमोदितासु हिताहितासु स्वस्य कृते हितासु इष्टफलासु अहितासु अनिष्टफलासु वा क्रियासु कार्यकलापेषु अनुदिनम् सर्वदा व्यवहरतः (ताः हिताहिताः क्रियाः) अनुतिष्ठतो मम जननिधनबन्धमोचनेषु जन्ममृत्युबन्धनमोचेषु (हिताया अहितायाश्च त्वयाऽनुमोदिताया मया कृतायाश्च क्रियायाः फलरूपतया परिणमयितव्येषु) त्वं प्रभुः समर्थः असि, अहं तव दासः अस्मि। अतो यथोचितमाचरेति भावः ॥ ८ ॥

अनन्यशरणः—मामेकं शरणं गतः।

अचिन्तयन्—अविभावयन्। चिरतरम्—बहुकालपर्यन्तम्। कलेवरेषु—देहेषु विहरमाणः—यथासुखं भ्रमन्। समयं गमयसिस्म—त्वं समयं यापितवान्। यदि त्वं मदेकगतिस्तदा तव मां विस्मृत्यायं विहारो नोचितं कार्यमजायतेति भावः।

---

पुरुषोत्तम— मैं किस कारणसे तुमपर कृपा करूं ?

पुरुष—प्रथम कारण तो यही है कि मैं अनन्यशरण तथा तेरे अधीन हूँ, मैं—हित हों या अहित, तुमको भली लगने वाली क्रियाओंमें आसक्त रहता आया हूँ, अतः हमारे जन्म-मरण, बन्ध या मुक्तिके लिये आप ही समर्थ हैं, हे भूतपते, मैं आपका दास हूँ ॥ ८ ॥

पुरुषोत्तम—तुम अनन्यशरण कैसे हो, याद है मुझे विना ध्यान किये ही तुमने इन नानाप्रकारके शरीरोंमें विहार करते हुए समय विताया है।

पुरुष—आपका कथन सत्य है,

पुरुषः—एवमेतत् ।

**पुरि पुरि विहरामहे भ्रमन्तः पुरहर पश्यसि भोगवञ्चितोऽस्मान् ।**
**किमिति न विहरेम नाथवन्तो वयमितरे त्वमनाथ एक एव ॥९॥**

पुरुषोत्तमः—यदि मया नाथवानसि कुतो मामियन्ति दिनानि नाद्राक्षीः ।

---

एवमेतत्—सत्यं त्वयोक्तम्, इयमपराधस्वीकारपरा पुरुषस्योक्तिः ।

पुरि पुरीति । हे पुरहर, त्रिपुरान्तक, पुरि पुरि नगरे नगरे प्रतिशरीरं भ्रमन्तः वयं विहरामहे स्वच्छन्दं क्रीडामः; त्वञ्च स्वयम् भोगवञ्चितः साक्षिभूतः अस्मान् भोगं भुञ्जानान् विहरतः पश्यसि । (अनुवदति चामुमर्थं श्रुतिरपि—द्वा सपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरेकः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति । त्वम् एकः सजातीयद्वितीयरहितः अनाथः असहायश्च (तत्कथं त्वं विहरिष्यसि, विहारस्य सजातीयद्वितीयसहकृतत्वसनाथत्वाभ्यामेव साधनीयत्वात् तवातथाभूतस्य नोपपद्यते विहारवार्त्ता) इतरे वयम् त्वद्भिन्नाः (बहुवचनेन सजातीयद्वितीयोपलब्धिः) नाथवन्तः त्वया नाथेन सनाथाश्च किमिति किमर्थं न विहरेम क्रीडां कुर्याम, त्वया सनाथानां सजातीयद्वितीयसहितानाञ्च युज्यत एवास्माकं विहार इति भावः । 'पुरिपुरि' इति वीप्सया नानाशरीरग्रहणमभिप्रेयते, पुरुषपदनिरुक्ते—पुरि शेते पुरुषः इति कथितम् । स्मृतिरप्याह—"पूः शरीरं तत्र शेते योऽसौ पुरुष उच्यते।" इति ॥ ९ ॥

मया नाथवान्—मदभिन्ननाथयुक्तः (अभेदे तृतीया धान्येन धनवानिति यथा) इयन्ति दिनानि—एतावतो दिवसान्यावत् । न अद्राक्षीः—न दृष्टवान् मामिति शेषः ।

---

हम जीव सभी नगरों (देहों) में घूमते रहते हैं, और आप भोगरहित होनेके कारण हमारा घूमना देखा करते हैं । हम आपसे नाथवान् हैं, अतः क्यों न घूमें, अनाथ तो केवल आप ही हैं ॥ ९ ॥

पुरुषोत्तम—यदि तुम मुझे अपना नाथ मानते हो तो इतने दिनोंतक तुमने मेरा दर्शन क्यों नहीं किया ?

पुरुषः—सखिद्विषदुदासीनेषु समवृत्तेस्तवायमकिंचनताविलासः।

स्वपिषि न परकर्मसु प्रसक्तः

परमुपभोजयतस्तव क्व भोगः।

परचरितमवैषि निर्निमेषः

प्रकृतिदरिद्र न कोऽपि पश्यति त्वाम् ॥ १० ॥

---

सखिद्विषदिति। सखायो मित्राणि द्विषन्तः शत्रवः, उदासीनास्तटस्थाश्च तेषु।

समवृत्तेः—समानव्यवहारिणः। अकिञ्चनताविलासः—दारिद्र्यस्य विजृम्भितम्। नास्ति किञ्चन धनादि यस्य सोऽकिञ्चनोऽतिदरिद्रः। अकिञ्चनो हि किमपि कर्त्तुमशक्तः स्वत एव सखिद्विषदुदासीनेषु समवृत्तिर्भवति। यदि त्वं समवृत्तिर्नाभविष्यस्तदा त्वामवश्यमहं दृष्टवानभविष्यम्, अकिञ्चनतया च त्वं समवृत्तितां गमितस्तेन त्वं न मया दृष्ट इत्यर्थः। तदेवं तवादर्शने तवाकिञ्चनतैव मूलमिति भावः।

स्वपिषीति। परेषाम् जीवानाम् कर्मसु कर्त्तव्येषु प्रसक्तः निरतः, सर्वदा जीवान् कर्मसु व्यापारयन् त्वं न स्वपिषि न निद्रासि। ('नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति श्रुतिसमर्थिताऽनिद्रतोक्तिः) अतएव च निर्निमेषः पक्ष्मपातरहितनयनः (कालापरिच्छिन्नश्चेति ध्वनिः) परचरितम् जीवानां कर्त्तव्यम् अवैषि जानासि ('साक्षी चेता केवलो निर्गुणश्चे'ति श्रुत्युक्तदिशा साक्षिरूपेण जीवानां कार्याणि पश्यँस्तिष्ठसि) परम् स्वभिन्नं जीवजातम् उपभोजयतः स्वस्वकर्मानुरूप-

---

पुरुष—मित्र, शत्रु या उदासीन हो, सबके साथ आप समान व्यवहार करते हैं यही आपकी अकिञ्चनताका विलास है (इसीलिये मैंने आपका दर्शन नहीं किया।)

आप दूसरोंके कर्मों (की रक्षा) में लगे रहते हैं, कभी सोते नहीं हैं, आप दूसरोंको ही भोग-प्रदान करते हैं, स्वयं आपको भोग कहाँ है ? आप निर्निमेष नयनोंद्वारा दूसरोंके चरित देखा करते हैं, आप प्रकृति-दरिद्र (मायारहित या निर्धन) हैं, अतः आपको कोई नहीं देखता है ॥ १० ॥

पुरुषोत्तमः—कथमकिंचनोऽस्मि। तुभ्यमधुना समर्पयामि नूतनातिथिसमुचितान्भोगान्।

पुरुषः—गतः स भोगसमयः। संप्रति तु

श्रुतिजनक रटत्यसौ कुमारी
तव दुहिता बहिरेत्य नेति नेति।
व्यवहितनिकटस्थितोऽसि यस्मा-
त्त्वयि मिलितेऽपि ममातिथेः क्व भोगः ॥११॥

---

फलभोगाय प्रेरयतः तव भोगः क? नास्ति तव भोग इत्यर्थः। ( प्रमाणितश्चायमर्थः—"द्वा सपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरेकः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति" इति श्रुत्या। अतएव प्रकृतिदरिद्र मायारहित ( स्वभावनिर्धन इति च ध्वन्यते ) त्वां कोऽपि न पश्यति, दरिद्रमुखदर्शनस्य शुभपरिपन्थित्वादिति भावः ॥ १० ॥

अकिञ्चनः—दरिद्रः। नूतनातिथिसमुचितान्—नवागन्तुकयोग्यान्।

गतः—व्यतीतः।

श्रुतिजनकेति। श्रुतेः वेदस्य जनक, पितः, कुमारी अजातपरिणया असौ तव दुहिता पुत्री श्रुतिः बहिरेत्य इन्द्रियगोचरतामासाद्य नेति नेति न वर्त्तते मम पितेति रटति वारं-वारं व्याहरति। व्यवहितनिकटस्थिते व्यापकतया सर्वत्र मायाजवनिकाच्छन्नदेशे स्थिते वर्त्तमाने त्वयि परमात्मनि यत्नात् मिलिते तैस्तैरुपायै-

---

पुरुषोत्तम—मैं अकिञ्चन कैसे हूँ? अभी मैं तुमको नूतन अतिथिके योग्य भोग-प्रदान करता हूँ।

पुरुष—मेरे भोगके दिन बीत गये, अब तो—

हे श्रुतिजनक, तुम्हारी कुमारी लड़की श्रुति बाहर आकर बार-बार कहती है कि ( मेरे पिता ) नहीं हैं। तुम समीपमें ही छिपकर बैठे हुए हो। ( तुम्हारा यह अतिथिके सत्कारके भयसे छिपकर बैठना व्यर्थ है ) जब मुझ अतिथिको तुम्हारा दर्शन प्राप्त हो जायगा, तो फिर भोग कहाँ रह जायगा? ॥ ११ ॥

पुरुषोत्तमः—हंहो पुरुष, प्रभवतो ममापकर्षं सूचयता वचसा कुतो नापत्रपसे ।

पुरुषः—प्रभुतोपकरणेषु परिजनेषु तथा तथा निष्कारणबन्धपीडनान्याचरतस्तवापि कागादपत्रपा घृणा च ।

---

रन्विष्य साक्षात्कृते सति मम अतिथेः क्व भोगः, भोगस्य त्वत्साक्षात्कारावधिकतया त्वयि दृष्टे मम भोगो नास्तीत्यर्थः । यथा कश्चन कृपणोऽतिथिमागच्छन्तं दृष्ट्वा स्वयं गृहाभ्यन्तर्निलीयते, स्वस्य कन्यां च बहिर्गत्वा नास्ति पिता गृह इति वक्तुमादिशति तथा हे परमात्मन् त्वमपि स्वसुतां श्रुतिं स्वयं मायाजवनिकाच्छन्नो भूत्वा नेति नेति वक्तुमादिशसि, तथासावाहापि, सर्वोऽप्ययमारम्भो वृथा, ममातिथेस्त्वद्दर्शनमात्रकृतार्थत्वस्य त्वया संभावयितुमौचित्यात्, दर्शनमात्रापेक्षिण्यतिथौ भोगाभावेन भोगभीत्यानुष्ठीयमानस्य प्रोक्तप्रपञ्चस्य वृथात्वात् इति तात्पर्यम् । 'कुमारी दुहिता' इत्यनेन श्रुतेर्ब्रह्माधिकारवर्त्तित्वं तेन च तन्मात्रप्रतिपादकत्वं सर्ववेदान्तानां तत्रैव तात्पर्यनिर्णयायत्तं ध्वनितम् , कुमारीपदेन परपुरुषसाक्षात्कारसंभाषणयोर्योग्यतापि तस्याः व्यक्ता । 'त्वयि मिलिते' इत्यनेन परमात्मसाक्षात्कारे जाते देहाभिमाननिवृत्तिस्तया च भोगविरहः—'अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशतः' इति श्रुतिसिद्धं समाहितम् । अन्यत्स्पष्टम् ॥ ११ ॥

हंहो पुरुष—अरे पुरुष, हंहोशब्दः साधिक्षेपसम्बोधनार्थः, तथा च चन्द्रालोके तत्प्रयोगः—'हंहो चिन्मयचित्तचन्द्रमणयः संवर्धयध्वं रसान्' इति । प्रभवतः—सर्वसामर्थ्यशालिनः । अपकर्षम्—कार्पण्यकृतं नीचभावम् । न अपत्रपसे—न लज्जसे ।

प्रभुतोपकरणेषु—प्रभुत्वहेतुषु । परिजनेषु—स्वपोष्यवर्गेषु । निष्कारणबन्धपीडनानि—अकारणमेव संसारबन्धं तत्कृतानि कष्टानि च । आचरतः—सम्पादयतः ।

---

पुरुषोत्तम—अजी पुरुष, मैं सामर्थ्ययुक्त हूँ, तुम अपने वचनोंसे मेरी हीनता सूचित करते हो, क्यों तुमको इसमें लज्जा नहीं है ?

पुरुष—तुम्हारी प्रभुताके समर्थक इन परिजनों पर तुम विना किसी कारणके वध, बन्ध, पीडन करते हो, उस समय तुम्हारी लज्जा या दया कहाँ चली होती है ?

स्मरसि कथमनन्यसाक्षिवृत्तां
प्रभवकथाविधुरां निजामवस्थाम् ।
पुनरपि न चिराज्जनार्दन त्वां
न परिचरिष्यति चेतनो द्वितीयः ॥ १२ ॥

पुरुषोत्तमः—अक्षीणचेतनाकोषस्य मम न परिजनायत्ता प्रभुता ।

---

अपत्रपा—लज्जाशालिता । घृणा—दया ।

स्मरसीति । हे जनार्दन, अनन्यवृत्ताम् अन्येन वृत्ता ज्ञाता न भवतीत्यनन्यवृत्ता आत्ममात्रसंवेद्या ताम् प्रभवकथाविधुराम् प्रलयकाले लोकानां प्रभवस्याभावे तत्कथारहिताम् निजामवस्थाम् सर्गप्राक्कालिकीं स्वां स्थितिम् ब्रह्मरूपेणावस्थितत्वम् स्मरसि कथम् इति प्रकारप्रश्नः । ( सृष्टिप्राक्काले सकलमपि विश्वं संहृत्य स्वरूपेऽवस्थितस्य तव सृष्टिरचनापटुत्वकृता सामर्थ्यातिशयशालिताकृता वा प्रभुता नासीदिति स्मरसि किमित्याशयः ) न केवलं तवेयं दशा पूर्वमेवासीत्परं सृष्ट्यवसानेऽपि सैव तव दशा भाविनीत्याह—पुनरपि सृष्ट्यवसाने जाते न चिरात् अविलम्बेनैव द्वितीयश्चेतनः त्वद्भिन्नः कोऽपि चेतनावान् त्वां न परिचरिष्यति न सेविष्यते । सृष्टिप्राक्कालेऽपि तव प्रभुत्वं नासीत्—तदा प्रभुत्वप्रयोजिकायाः प्रभवकथाया अप्यभावात् , पुनश्च सृष्ट्यवसाने तव प्रभुता न स्थायिनी, परिचरणप्रवृत्तचेतनान्तरानुपलब्धेः, मध्ये कियन्तं कालं यावत्सृष्टौ वर्त्तमानायां सत्यां यत्स्वपरिजनेषु त्वदीयां प्रभुतां प्रमाणयत्सु त्वया निष्कारणजन्मपीडनान्याचरितानि तत्तव निर्लज्जतासहचरीं निर्दयतामेव व्यञ्जयतीति भावः ॥ १२ ॥

अक्षीणचेतनाकोषस्य—यस्य चैतन्यरूपः कोषो धनसञ्चयः कदापि क्षयं

---

हे जनार्दन; तुम अपनी उस ( सृष्टिप्राक्कालिक ) अवस्थाको क्यों नहीं याद करते हो जिसे दूसरा कोई साक्षी नहीं जानता है, जब कि तुम्हारे प्रभव ( उत्पत्ति अथवा प्रभुत्व ) की कथा भी नहीं थी। फिर वह समय आवेगा जब कोई दूसरा चेतन तुम्हारी परिचर्याके लिये शेष नहीं रह जायगा ॥ १२ ॥

पुरुषोत्तम—मेरी चेतना का कोष अक्षय है, मेरी प्रभुता किसी परिजन पर निर्भर नहीं है।

पुरुषः—तव चैतन्यधनागमेऽपि विमर्शनीयमतत् ।

**मतिधनमितरे सुदीर्घनिद्राप्रवणधियस्त्वयि निक्षिपन्त्यतन्द्रे ।**
**तदपहरणसंचितो न जातु व्ययमुपगच्छति चेतनानिधिस्ते ॥१३॥**

---

न गच्छति तादृशस्य नित्यचेतनस्येत्यर्थः। परिजनायत्तप्रभुता—अन्याधीनसामर्थ्यशालिता। यस्य राजादेः कोषः कदापि न क्षीयते स स्वयं प्रभावशाली न परायत्ता तदीया प्रभुता भवति, अतो मनागपि अक्षीणचेतनाकोषस्य मम प्रभुता कथ परिजनायत्ता त्वया कथितेति भावः।

चैतन्यधनागमे—चेतनारूपकोषस्यापि त्वया केन प्रकारेण लाभः कृत इत्यपि विचारणीयमेव, इत्याशयः। विमर्षणीयम्—विचार्यम्।

मतिधनमिति। इतरे जीवाः सुदीर्घनिद्रायां प्रलयकालिक्यां महानिद्रायां प्रवणाः प्रसक्ताः सुषुप्सवो धियो बुद्धयो येषां ते सुदीर्घनिद्राप्रवणधियः अतन्द्रे अनलसे नित्यप्रबुद्धे त्वयि परमेश्वरे मतिधनं स्वं ज्ञानरूपं विभवम् निक्षिपन्ति न्यासरूपेण स्थापयन्ति। तस्य इतरैः प्रलये सुषुप्सुभिर्जीवैर्न्यासीकृतस्य मतिधनस्य अपहरणेन स्वायत्तीकरणेन पुनरपरावर्त्तनेन सञ्चितः। एकत्रीभूतस्ते चेतनानिधिः चैतन्यस्वरूपो धनराशिः जातु कदाचिदपि व्ययं विलयं नोपगच्छति। निशायामुपस्थितायां निद्रया मुह्यन्तो लोकाः कस्मैचिज्जागरणशीलाय जनाय स्वं धनं न्यासीकृत्य शेरते, तच्च धनमपहृत्य जाग्रदसौ पुरुषः ( कार्पण्येन ) तस्य धनस्य व्ययमकुर्वन् स्वं प्रकृष्टविभवं घोषयेत्तथैवेयं तवापि विकत्थनेत्यर्थः। अत्र परनिक्षेपापहरणसञ्चितमतिधनस्य वसुव्ययमसहमानस्य च कृपणस्याभेदो भगवत्यध्यस्यमानः प्रथमं स्वदते, तदनन्तरं च अपवर्गनिद्राप्राक्कालिकचैतन्यशालिनस्तस्य नित्यचैतन्यधनस्याक्षयतया तदुत्थितो भावश्चेति बोध्यम् ॥ १३ ॥

---

पुरुष—तुम्हारा यह चैतन्यधन किस प्रकारसे आया है यह भी विचारणीय है।

अन्य जीवोंकी बुद्धिवृत्ति जब निद्राकुल हो जाती है तब वे अपनी बुद्धि ( चेतना ) स्वरूप धन तुममें न्यासकी तरह स्थापित कर देते हैं। तुमनें उन्हीं धनों ( चेतनाओं ) के अपहरणसे अपने चेतनाकोषको इतना बढ़ा लिया है कि वह कभी समाप्त ही नहीं होता है ॥ १३ ॥

पुरुषोत्तमः—ननु कर्मानुरूपफलदाय मह्यमसमञ्जसमसूयसि। कुरु तथा कर्माणि, प्राप्स्यसि सोमरसमवलिहन्नमरलोकम्।

पुरुषः—किमद्यापि मां विप्रलभसे।

व्यरमदवसरः स यत्र कर्मप्रकरमकार्षममर्त्यलेह्यलोभात्।
न पुनरपि पिबामि सोमपात्रामृतदधि राहुबिडाललीढशेषम् ॥१४॥

कर्मानुरूपफलदाय—कर्मानुरूपफलदायिने। "न वैषम्यनैर्घृण्ये कर्मपारतन्त्र्यात्" इति सूत्रेण द्वितीयाध्यायस्य द्वितीयपादे व्यासेन निरूपितमीश्वरस्य कर्मानुरूपफलप्रदायितया वैषम्यनैर्घृण्यमुक्तत्वम्। असमञ्जसम्—वृथा।

असूयसि—कुप्यसि। सोमरसम्-यज्ञपेयं सोमाख्यलतास्वरसम् चान्द्रीं सुधाञ्च अवलिहन्—आस्वादयन्। अमरलोकम्—स्वर्गम्। 'अपाम सोमममृता अभूम' इत्यनुरोधेनेत्थमुक्तम्।

अद्यापि—सम्प्रत्यपि। (साधनसम्पदं प्राप्य परात्मसाक्षात्कारोद्यतेऽपि मयि इत्यर्थः) विप्रलभसे—वञ्चयसि।

व्यरमदिति। सः अवसरः समयो व्यरमत् अवसानं गतः यत्र समये अमर्त्यलेह्यस्य देवैरास्वाद्यस्य अमृतस्य लोभात् तृष्णावशात् कर्मप्रकरम् सोमयागादिकं क्रियाकलापम् अकार्षम् कृतवान्। (यत्र समयेऽज्ञानावस्थायाम् 'अपाम सोममममृता अभूम' इत्यादिकया श्रुत्या जागरितसोमोत्थसुधापानतृष्णाः सन्तो वयं सोमयागादिक्रियाकलापमकुर्महि, स समयो गतः, (अतः 'कुरु कर्माणि' इति त्वदीया प्रतारणा मां न बन्धुं क्षमते इत्याशयः) (सम्प्रति हि साधनसम्पत्तिमासाद्य विविदिषाभूमिमारूढोऽस्मि, 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति श्रुतिप्रबोधनया मम नास्ति स्वर्गे रुचिरिति वक्ष्यत्यग्रेतनेन चरणद्वयेन) न पुनरिति। पुनरपि सोमपात्रस्थितं चन्द्रमसि वर्त्तमानम् अमृतरूपं

पुरुषोत्तम—मैं तो कर्मानुरूप फल दिया करता हूँ, तुम मुझ पर व्यर्थ ही कोप करते हो, वैसे कर्म करो, तुमको भी सोमरसपानका अवसर एवं स्वर्ग मिलेगा।

पुरुष—क्यों आज भी धोखा देनेसे नहीं चूकते ?

वह अवसर बीत गया जब मैं देवोच्छिष्ट अमृतके (स्वर्गके) लोभसे कर्म

पुरुषोत्तमः—एवमतिकलहायमानेन त्वया मया सह विग्रहः किमारब्धः ।

पुरुषः—परविग्रहरचनाव्यसनितया तवैव कोषः क्षीयते । मम तु भवदुपरचितकोषनिकायस्वीकारलब्धात्मनो भोगाय विग्रहवत्ता । पश्य

**क्षितिबिलपिहितं जरायुपेशीस्थगितमथाण्डसमुद्गके निगूढम् ।**

---

दधि न पिबामि नास्वादयामि, तद्धि सोमपात्रस्थितं दधि राहुरूपस्य विडालस्य मार्जारस्य लीढशेषम् आस्वादितावशिष्टम् । सकामकृत्स्नकर्मणां चन्द्रमण्डलेन स्वर्गं गतवतां पुनरावृत्तिश्रवणादपुनरावृत्तये यतमानोऽहं स्वर्गप्रापकतया सुधापानावसरप्रदायि कर्म कर्त्तुं न कामये, तदलं मां वञ्चयित्वेति भावः ॥ १४ ॥

अतिकलहायमानेन—महान्तं कलहं विवादं कुर्वता । विग्रहः-विवादः युद्धं वा ।

परेति । परेषामन्येषाम् विग्रहस्य कलहस्य रचने निर्माणे व्यसनितया आसक्ततया तवैव कोषः अर्थराशिः क्षीयते अपचीयते । ( परकीयविग्रहरचनव्यसनी जनः स्वमप्यर्थराशिं तत्र व्ययं प्रापयतीति लोकदृष्टं वृत्तं मनसि कृत्येयमुक्तिः ) परेषां जीवानां विग्रहस्य शरीरस्य रचने निर्माणे व्यसनितया आसक्ततया तव परमात्मन एव कोषः रसादिशुक्रान्तानां सप्तानामपि धातूनां सञ्चयः क्षीयते इति परमात्मपक्षीयोऽर्थः । मम भवता उपरचितानां निर्मितानां सञ्चितानाञ्च कोषनिकायानां देहानामर्थराशीनां च स्वीकारेण लब्धात्मनः प्राप्तस्वरूपस्य विग्रहवत्ता देहधारणम् कलहायितं वा भोगाय सुखानुभवाय भवतीति शेषः । परमेश्वरस्य विग्रहवत्ता ( परविग्रहरचनव्यसनिता ) कोषक्षयाय, पुरुषस्य तु विग्रहवत्ता ( शरीरधारणं ) भोगायेति व्यतिरेकोऽत्र दिदर्शयिषितो बोध्यः ।

क्षितिबिलेति । हे द्रुहिण, विधातः, त्वयि प्रसह्य हठात् विग्रहान् कलहान्

---

किया करता था, अब मैं कभी भी सोम ( चन्द्र ) पात्रमें स्थापित राहु-मार्जारपीतावशिष्ट अमृतरूप दही नहीं पीऊंगा ॥ १४ ॥

पुरुषोत्तम—इस प्रकार तुम बहुत कलहप्रिय हो गये हो, तुम मेरे साथ क्यों कलह करते हो ?

पुरुष—जीवोंके शरीर-निर्माणमें तुम्हारे ही कोषका क्षय होता है, मैंने तो

त्वयि रचयति विग्रहान्प्रसह्य द्रुहिण तवापहरामि धातुकोषम् ॥१५॥

अपि च ।

परेषां वधबन्धार्थमुत्पादयसि विग्रहान् ।
अविग्रहः स्वयं तूष्णीं ताटस्थ्यमवलम्बसे ॥ १६ ॥

---

देहांश्च रचयति निर्मिमाणे सति क्षितिबिले धरित्रीविवरे पिहितं तिरोहितम् जरायुपेश्यां गर्भाशयकोशे स्थगितं संवीतम्, अथ अण्डसमुद्गके अण्डसम्पुटके निगूढम् छन्नम् तव (सुवर्णादि) धातुकोषम् अर्थराशिम् रसादिशुक्रान्तानां धातूनाञ्च कोषम् शरीरम् अपहरामि आत्मसात्करोमि । विग्रहप्रवृत्तो जनः सति पराजये जेत्रा सम्भावितक्रियं स्वीयस्यार्थराशेरपहरणं मत्वा तं क्वचन क्षितिबिले जरायुपेश्यां तथाण्डसमुद्गके वा निह्नुते, चतुरश्च जेता ततोऽपि तमपहरतीति वस्तुवृत्तम् परमात्मापि परविग्रहरचनप्रवृत्तः सन् उद्भिज्जजरायुजाण्डजभेदभिन्नं त्रिविधं जगन्निर्मित्सुः स्वं शुक्रान्तधातुकोषं क्षितिबिलजरायुपेश्यण्डसमुद्गकेषु निह्नुतवान्, पुरुषस्तु तत्तद्रूपतां प्रपद्यमानस्तमप्यपह्नुतवानिवेति ध्वनिः ॥ यद्यपि—'भूतग्रामश्चतुर्विधः, जरायुजा मनुष्याद्याः, पक्षिसर्पादयोऽण्डजाः, उद्भिज्जास्तरुगुल्माद्याः, स्वेदजाः कृमिदंशाद्याः' इत्युक्तदिशा चतुर्विधतायां वर्णनीयायां त्रैविध्यमुच्यमानं न्यूनतामिव गमयति, तथापि तुरीयः स्वेदजो न धातुनिचयभूत इति स नेहोपन्यस्त इति बोध्यम् । शरीरत्रयरचनोपन्यासेन समासोक्त्या लोकत्रयसंस्थाऽभिहितेति केचित् ॥ १५ ॥

परेषामिति । परेषाम् स्वभिन्नानाम् जीवानाञ्च वधबन्धार्थम् वधाय बन्धाय च विग्रहान् शरीराणि कलहांश्च उत्पादयसि । स्वयम् अविग्रहः अकलहायमानः

---

आपके द्वारा रचित स्वरूप पाकर आत्मलाभ किया है, मेरा शरीरग्रहण तो भोगके लिये है ॥ देखिये :—ब्रह्मन्, आप बलपूर्वक विग्रह (झगड़ा—अथवा—लोकशरीरनिर्माण) करते हैं तो अब मैं पृथ्वी-बिलमें छिपे हुए तथा ब्रह्माण्डोंमें छिपाकर रखे गये आपके धातुकोषका अपहरण करता हूँ ॥ १५ ॥

आप दूसरोंके वध और बन्धनके लिये विग्रह (शरीर-झगड़ा) पैदा किया करते हैं, स्वयम् अविग्रह (अविग्रह—बिना झगड़ाके तथा अशरीर) रहकर तटस्थताका अवलम्बन करते हैं ॥ १६ ॥

पुरुषोत्तमः—कथं मम निसर्गनिर्मत्सरस्य खलताकलङ्कमुपन्यस्यसि।

पुरुषः—कः खलु खलो भवन्तमतिशेते।

**अचिरपरिचितो हरे समूलं हरसि विशेषगुणव्रजं परस्य।**
**प्रथयसि खलतामिमामपूर्वां कथयसि यद्विगुणत्वमात्मनोऽपि ॥१७॥**

---

शरीररहितश्च सन् तूष्णीम् जोषम्भावेन ताटस्थ्यम् उदासीनताम् अवलम्बसे। यथा कोऽपि खलः स्वप्रतिवेशिद्वयमध्ये विग्रहं कारयित्वा तयोर्वधं बन्धं वा प्रयोजयति स्वयं च तटस्थः सँस्तूष्णीमास्ते, एवमेव त्वमपि जीवानां शरीराणि निर्माय तेषां वधवन्धयोर्व्यवस्थां कृत्वा स्वयमशरीरतयौदासीन्यं भजमानः तूष्णीं तिष्ठसीति भावः॥ एतेन परमात्मनः खलता व्यञ्जिता। इयं निन्दामुखेन स्तुतिर्भावव्यञ्जिका बोध्या॥ १६॥

निसर्गनिर्मत्सरस्य—स्वभावतोऽदुष्टस्य। 'मत्सरोऽन्यशुभद्वेषे' इतिकोशस्वारस्येन कस्यापि शुभमद्विषत इति पर्यवसन्नोऽर्थः। खलताकलङ्कम्—खलत्वमूलकमपवादम्। उपन्यस्यसि—आरोपयसि।

अतिशेते—अतिक्रम्य वर्त्तते, न कोऽपीत्यर्थः।

अचिरेति। हे हरे, अचिरपरिचितः सद्यः सञ्जातपरिचयः दृष्टमात्रः त्वम् परस्य अन्यस्य जीवस्य च विशेषगुणानाम् बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणाम् व्रजम् समूहम् समूलम् सकारणम् हरसि उच्छिनत्सि, अथ च इमाम् अपूर्वाम् क्वाप्यन्यत्र खऽदृष्टाम् खलेलताम् प्रथयसि प्रकाशयसि यद् आत्मनोऽपि विगुणत्वं कथयसि। अन्यः खलश्चिरपरिचयमुत्पाद्य विश्वासं जनयित्वाऽन्यस्य किमपि द्रव्यं हरति, परकीयद्रव्यं गोपयित्वा च स्वं द्रव्यं दर्शयति येन तस्मिन्नपहर्त्तृत्वबुद्धिर्नोद्भवेत्, त्वं तु अचिरपरिचित एव जीवस्य विशेषगुणव्रजं समूलं हरसि,

---

पुरुषोत्तम—मैं स्वभावतः निर्मत्सर हूँ, मुझपर तुम खलताका आरोप क्यों करते हो?

पुरुष—कौन खल तुमसे बढ़कर होगा?

हे हरे, अपरिचित भावसे आकर (छिपे-छिपे) तुम दूसरोंके विशेष गुणका अपहरण करते हो, और गुणोंका अपहरण कर लेनेपर भी अपनी विगुणताको प्रख्यापित करते हो, यह तुम्हारी अद्भुत खलता है॥ १७॥

पुरुषोत्तमः—निरस्तसमस्तविभ्रमस्य खलु कुतः खलत्वस्यावकाशः ।
पुरुषः—ननु भवतोऽप्यन्यथावस्तूल्लिखन्ति विभ्रमाः ।

मयि फलकतया त्वया कियत्यः
प्रतिकृतयो लिखितास्तथा विलुप्ताः ।
रजसि विगलिते विभूतियोगात्
प्रमृज मलं मम पश्य दर्पणोऽस्मि ॥ १८ ॥

---

स्वमपि निर्गुणतयैव प्रथयसीत्यपूर्वा तव खलतेत्यर्थः । परमात्मसाक्षात्कारानन्तरमेव समूलविशेषगुणोच्छेदरूपो मोक्षः काणादैरभिमतः, अत एवात्राचिरपरिचितस्य समूलविशेषगुणापहारितोक्ता परमात्मनः । उपनिषद्वाक्यैः स्वस्याप्यगुणताप्रथनेन परमात्मनोऽपूर्वा खलतात्रोक्ता । खलान्तरापेक्षया व्यतिरेकः सूचितो बोध्यः ॥ १७ ॥

निरस्तसमस्तविभ्रमस्य—निरस्तोऽपसारितः समस्तो निखिलो विभ्रमो यस्मात्तादृशस्य ।

उल्लिखन्तीति । भवतोऽपि विभ्रमा अन्यथा वस्तूल्लिखन्तीत्यन्वयः । त्वद्विषयकमप्यन्यथाज्ञानं वस्तुविप्लवं सृजतीत्यर्थः ।

मयि फलकेति । त्वया परमात्मना मयि मद्विषये फलकधिया काष्ठादिपट्टकबुद्ध्या कियत्यः असङ्ख्याताः प्रतिकृतयः प्रतिमाः (शरीराणि) लिखिताः अध्यस्ताः विलुप्ताः लिखित्वाऽपमार्जिताश्च । सम्प्रति रजसि लेखोपयुक्ते रजोयोगे ( प्रवृत्तिमूले रागे च ) विगलिते अपसारिते सति विभूतियोगात् भस्मसंयोगात् स्वमहिमसङ्क्रा-

---

पुरुषोत्तम—मेरे समस्त विभ्रम समाप्त हैं, मुझमें खलत्वके आरोपका अवकाश कहाँ है ?

पुरुष—विभ्रम आपको भी अयथार्थ ज्ञान करा देते हैं—

आपने मुझे फलक ( चित्रोपयुक्त काष्ठपट्टक ) मान कर कितने चित्र लिखे तथा उन्हें मिटा दिया, कृपया एक बार ( अपनी ) विभूति ( ऐश्वर्यादिप्रभुत्व तथा राख ) से संबन्ध कराके मेरे मलको पोंछकर देखिये मैं दर्पण हूँ, ( आपको अपना प्रतिबिम्ब उसमें दीखेगा ) ॥ १८ ॥

पुरुषोत्तमः—नित्यप्रबोधविधूतविधुरस्य मम न संभाव्यते भ्रमः।

पुरुषः—हन्त भोः, त्रिविधविकारमूलमायाविलाससाक्षिणो दुष्टदुर्विपाकमप्रतिघ्नतस्तव प्रबोधो न कस्यापि निःश्रेयसाय।

**अलमवगलितेन्द्रियप्रवृत्तेस्तव जरतः पुरुषस्य जागरेण।**

---

मणाच्च मलं रजःकृतं मालिन्यमज्ञानञ्च प्रमृज अपसारय, पश्य, अहम् दर्पणोऽस्मि। दर्पणमपि मां फलकं मन्यमानस्त्वं मयि नानाचित्राणि लिखित्वा मृष्टवान्, (नानाशरीराणि मय्यध्यस्तवानिति च) प्रवृत्तमूले रागे तु निवृत्ते विभूतियोगान्मम मालिन्यं प्रमृज पश्य च यत्त्वं फलकममंस्थास्सोऽहं दर्पणोऽस्मि, त्वमपि मयि प्रतिफलसीत्याशयः॥ १८॥

नित्यप्रबोधेति। नित्येन अनादिनाऽनन्तेन च प्रबोधेन यथार्थज्ञानेन (ब्रह्माकारान्तःकरणवृत्त्युपहितानावृतचैतन्येन) विनिद्रत्वेन च विधूतम् दूरीकृतं विधुरं कष्टं यस्य तादृशस्य।

हन्तेति—खेदार्थकमव्ययम्। विविधानां विकाराणां कामादीनां मूलभूताया मायाया विलासस्य साक्षिणस्ताटस्थ्येन द्रष्टुः, दुष्टं दुर्विपाकम् जीवैर्भोज्यं यातनादि अप्रतिघ्नतः अनिवारयतः तव प्रबोधो विनिद्रता नित्यज्ञानशालिता वा कस्यापि निःश्रेयसाय कल्याणाय मोक्षाय वा न जायते इति शेषः। केवलं साक्षिरूपेण पश्यन् किमप्यत्याहितमनिवारयँश्च जाग्रदपि जनो न कस्यापि कल्याणाय जायते तथा त्वया नित्यज्ञानं धारयतापि कस्यापि न मोक्षरूपम्फलम्—तव नित्यमुक्तत्वात्, त्वयि प्रबुद्धेऽपि अस्मद्बन्धदर्शनादिति भावः॥

अलमवगलितेति। अवगलिता विगता इन्द्रियाणां चक्षुरादिमनःपर्यन्तानां बाह्यान्तरकरणानाम् प्रवृत्तिः शक्तिर्यत्र तादृशस्य तव जरतः पुरुषस्य पुराणपुरुषस्य

---

पुरुषोत्तम—नित्यज्ञानवान् होनेसे मेरे सारे कष्ट मिट गये हैं, मुझमें भ्रमकी संभावना नहीं है।

पुरुष—नाना प्रकारके विकारोंकी जड़ माया अपनी लीला करती रहती है आप साक्षी बने रहते हैं, उसके दुरन्त परिणामोंको आप रोकते नहीं, फिर आपके प्रबोध (नित्यज्ञान) से किसीको क्या लाभ?

आप पुराने पुरुष हैं (वृद्ध हैं) आप इन्द्रियप्रवृत्तिशून्य हैं (आपके हाथ-

प्रभवति दमनाय दोषदस्योः सपदि मनागपि मादृशां प्रबोधः ॥ १९ ॥
अपि च कलत्रदुश्चरितमर्षणस्येर्ष्याकषायमुषितमनसस्तव किमनेन प्रबोधेन ।
विगतविपरिलोपदृष्टि पश्यन्वशयसि यं पुरुषप्रकाण्ड मायाम् ।
प्रकृतिचपलया तया विकारैर्बहुविधवर्णिकया वशीकृताः स्मः ॥ २० ॥

---

जागरेण प्रबोधेन अलम् न किमपि फलं साध्यम् । न खलु वृद्धो जनः प्रबुध्यमानोऽपि दुष्टानां दस्यूनां निग्रहाय प्रभवति विगलितचक्षुरादीन्द्रियशक्तिकत्वादिति भावः । मादृशां मत्सदृशानां जीवानां मनाग् अल्पकालिकोऽपि प्रबोधः सपदि तत्क्षण एव दोषदस्योः कामादिरूपस्य शत्रोर्दमनाय निग्रहाय प्रभवति समर्थो भवति, ( त्वदीयं ज्ञानं विफलं कस्यापि श्रेयः साधयितुमक्षमत्वात्, मादृशान्तु ज्ञानं सफलं स्वश्रेयःसाधकत्वादिति ) अतस्त्वदपेक्षया वयमेव विशिष्टा इति प्रणयातिरेककृता गर्हा ध्वन्यते ॥ १९ ॥

कलत्रेति । कलत्रस्य स्त्रियो मायायाः दुश्चरितं कुटिलो व्यवहारस्तन्मर्षणस्य तत्सहनक्षमस्य । ( अत एव च ) ईर्ष्याकषायेण अक्षमारूपेणान्तःकरणदोषेण मुषितं दूरमपहृतं मनो यस्य तादृशस्य ।

विगतेति । हे पुरुषप्रकाण्ड, पुरुषोत्तम, विगतः विपरिलोपोऽभावो यस्याः सा विपरिलोपा नित्याप्रतिहता दृष्टिर्यत्र दर्शने तत्तथा विगतविपरिलोपदृष्टि निर्निमेषभावेनेत्यर्थः, पश्यन् यां मायां वशयसि स्वाधीनीकरोषि, प्रकृतिचपलया स्वभाव-

---

पैर नहीं चलते हैं ) अतः आपके जागते रहने ( नित्यज्ञान ) से क्या लाभ ? यदि हमारे सदृश जन ( जीव ) थोड़ी देर के लिये भी जाग जाँय ( ज्ञान प्राप्त करें ) तो वह दोषरूप लुटेरेका दमन करनेमें समर्थ हो सकते हैं ॥ १९ ॥

तुम अपनी स्त्री ( माया ) के दुश्चरितको सहते जा रहे हो, अक्षमासे तुम्हारा हृदय भरा हुआ है, तुम्हारे ( ज्ञान ) जागनेसे कोई लाभ नहीं हो सकता है ।

हे पुरुषराज, स्वपरज्ञानशून्य दृष्टिसे देखकर आपने जिस मायाको अपने वशमें कर रखा है, उसी प्रकृतिचपला मायाने विकारों द्वारा नाना भूमिकाओंसे हमें वशीकृत किया है । ( पुंश्चली है आपकी स्त्री ) ॥ २० ॥

किं च ।

**प्रकृतिरियमनश्वरस्वभावा सृजति महान्तमसौ यतो विकारम् ।**
**अविकृतमभिपश्यतः सतस्ते सह रमते ह्यनया सखा त्वदीयः ॥२१॥**

पुरुषोत्तमः—नन्वेवमपि मामवहुमन्यमानः कथमाश्रयितुमीहसे ।

---

चञ्चलया तया मायया विकारैः कामादिभिः भ्रूनेत्रादिविकारैश्च ( कृत्वा ) बहुविध-वर्णिकयाऽनेकप्रकारया भूमिकया ( रूपपरिग्रहेण ) वयं वशीकृताः स्मः । 'स ईशो यद्वशे माया स जीवो यस्तया जितः ।' इति स्मृतिरत्रार्थत उपनिबद्धा । निर्निमेषं पश्यँस्त्वं यां मायां वशीकरोषि सैव चपला माया नानारूपाणि कृत्वा विकारैरस्मान् वञ्चयतीत्यलं तव प्रबोधेनेत्यर्थः ॥ २० ॥

प्रकृतिरिति । इयं साम्यावस्थापन्नगुणत्रयात्मिका प्रकृतिः माया अनश्वरस्वभावा अविनाशिनी ( रजःप्रागुण्यात्सततं जगत्प्रसोतुं प्रवर्त्तमाना तिष्ठति ) यतोऽसौ महान्तं विकारं महत्तत्त्वाख्यं विकारं सृजति । ते तव अविकृतं विकाररहितं यथा स्यात्तथाऽभिपश्यतः आभिमुख्येन वीक्षमाणस्य सतः त्वदीयः सखा जीवः अनया त्वद्वशया त्वत्परिग्रहभूतया च प्रकृत्या सह रमते । "पुरुषभोगार्थमेव हि प्रकृति-प्रवृत्तिः" इति "प्रकृतेर्महाँस्ततोऽहङ्कारः" इति च साङ्ख्यमतमनुसृत्येत्थमुक्तम् । अनश्वरस्वभावत्वं प्रकृतेरुक्तं मिश्रैः—"साम्यावस्थापन्ना गुणा एव प्रकृतिः । परिणाम-स्वभावा हि गुणाः नापरिणम्य क्षणमप्यवतिष्ठन्ते" इति ॥ २१ ॥

अवहुमन्यमानः—अनाद्रियमाणः । आश्रयितुम्—शरणीकर्त्तुम् । ईहसे—इच्छसि यतसे । न सुखमासे—तवाश्रयणे अनाश्रयणेऽपि वा मम नास्ति कोऽपि विशेष इति ।

---

यह प्रकृति अनश्वर है ( मायाका यह स्वभाव छूटेगा नहीं ) यह बड़े-बड़े विकार उत्पन्न किया करती है । आप उस स्थितिमें भी अविकृत भावसे उसे देखते ही रहते हैं, और आपके सखा ( जीव ) उसके साथ रमण ( भोग ) किया करते हैं । ( ऐसी है वह दुष्टा ) ॥ २१ ॥

पुरुषोत्तम—जब तुम इस तरह मेरा अपमान करते हो, तो फिर मुझे ही क्यों आश्रय बनाना चाहते हो ?

पुरुषः—न त्वामाश्रित्यानाश्रित्य वा सुखमासे।

क्वचिदपि विषये त्वया वियुज्य
स्थितिमनवाप्य चिराय संसरामि।
भवगिरिसरिदस्मि चित्समुद्र
स्वमपि जहामि तदा लभे यदि त्वाम् ॥ २२ ॥

---

क्वचिदपि विषय इति। त्वया परमात्मना वियुज्य क्वचिदपि विषये स्वर्गे ब्रह्मलोकेऽपि वा चिराय बहुकालपर्यन्तम् स्थितिं स्थिरताम् अनवाप्य संसरामि संसारदुःखमनुभवामि। त्वद्वियोगदशायां पुण्यपरिपाकमहिम्ना मिलितोऽपि स्वर्गादिर्लोकः पुण्यापाये नश्यतीति पुनरपि संसर्त्तुं बाध्यमानो दुःखमनुभवामीति त्वामनाश्रित्य न सुखमासे इत्युक्तमुपपादितम्, अथ त्वामाश्रित्यापि न सुखमासे इति यदुक्तं तदुपपादयितुमाह—भवेति। अहं जीवः भवगिरिसरित् संसारपर्वतनदी अस्मि, हे चित्समुद्र चैतन्यवारांनिधे, यदि त्वां लभे प्राप्नोमि तदा स्वम् आत्मानम् अपि जहामि त्वद्रूपतापत्तौ स्वरूपनाशोऽपि मे जायते, दूरे सुखासिकाशेति भावः।

पर्वतात्स्यन्दमाना नदी तावदेव स्वरूपं रक्षति यावत्सा सागरसमीपं नासादयति, मिलिते तु सागरे तस्याः स्वरूपापहारो निश्चित इति यथा तथैव ममापि जीवस्य परमात्मसाक्षात्कारे जातमात्रे स्वरूपच्युतिर्निश्चितेति तात्पर्यम्। अत्र 'स्वमपि जहामि' इत्यनेन मुक्तिरभिप्रेता—तदत्रात्महानं कीदृशमिति विचारे 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इति श्रूयते। तत्र विनाशो मूलक्षय इति बौद्धाः। विलीनतेति त्रिदण्डिनः। नैयायिकादयस्तु—'अप्राणो ह्यमनाः शुभ्रः' इति श्रुत्या मनोविरहान्मुक्तस्य न स्वसंवेदनम्, आत्मानुमापकप्रयत्नाद्य-

---

पुरुष—मैं न तुम्हारा आश्रयण करके और न तुम्हारा आश्रयण नहीं ही करके सुखी रहता हूँ।

किसी भी स्थानपर तुमसे बिछुड़ता हूँ कि चिरकालके लिये घूमता रहता हूँ (संसारमें जन्म-मरण ग्रहण करता रहता हूँ) [अतः तुम्हारे अनाश्रयमें दुःख है] मैं पर्वतकी नदी हूँ, तुम सागर हो, जब मैं तुम्हें प्राप्त कर लेता हूँ तब मेरा स्वतन्त्र अस्तित्व ही मिट जाता है (अतः तुम्हारा आश्रय भी दुःख है) ॥२२॥

पुरुषोत्तमः—नन्वेवमपि मयि वान्यत्र वा क्वचित्संयम्य बधान धृतिम् ।
पुरुषः—नेदानीं मनसः क्वापि त्वामपहाय समाधानमुपपद्यते ।

**अभिसरति परम्परं पुरारे विषयमनेकमपास्य पूर्वपूर्वम् ।**
**वरुणनिलयमापगेव यावद्व्रजति भवन्तमसौ न चित्तवृत्तिः ॥२३॥**

---

भावाच्च न परेण वेद्यते इत्यवेद्यत्वमेव मुक्तात्मनो विनाश इत्याहुः । नैयायिकाद्यभिमतमवेद्यत्वमेवात्रात्महानतया विवक्षितमिति प्रतिभाति ॥ २२ ॥

संयम्य—संयममास्थाय । धृतिम्—परमार्थनिष्ठाम् ( श्रद्धाम् ) बधान—धारय । समाधानम्—अनन्यविश्रमः ।

अभिसरतीति । हे पुरारे, त्रिपुरमथन, असौ चित्तवृत्तिः ( व्यभिचारिणी स्त्री ) पूर्वपूर्वम् विषयम् इन्द्रियार्थम् ( पुरुषम् ) अपास्य परित्यज्य परम्परम् अलब्धम् अन्यमिन्द्रियार्थम् ( पुरुषम् ) अभिसरति स्वयमुपसर्पति । ( परमयमस्या अभिसारस्तावदेव प्रवर्त्तते) यावत् असौ चित्तवृत्तिः ( व्यभिचारिणी स्त्री ) भवन्तम् पुरुषोत्तमम् न भजति न प्राप्नोति । तत्र दृष्टान्तमाह—आपगा नदी वरुणनिलयं सागरमिव । अयमाशयः—यथा पर्वतात्प्रवहमाना पूर्वं पूर्वमपास्य देशमग्रेसरन्ती च नदी नवं नवं विषयमासागरप्राप्ति गच्छति, तथैव ममापि चित्तवृत्तिः पूर्वपूर्वमिन्द्रियार्थमपास्य परम्परमिन्द्रियार्थमभिसरति, व्यभिचारिणी स्त्रीव परंपरं पुरुषम्, अस्या निरोधिप्रसरता तु त्वय्येव मिलिते संभवति, यथा व्यभिचारिण्याः स्त्रियो निरोधिप्रसरता पुरुषोत्तमे मिलिते जायते इति । अत्र श्लोके 'पुरारे' इति संबोधनेन—त्रयाणां पुराणां स्थूललिङ्गकारणस्वरूपाणां देहानां मायाऽज्ञानविज्-

---

पुरुषोत्तम—फिर भी मुझमें या किसी अन्य स्थानमें संयमपूर्वक धृति धारण करो ।

पुरुष—अब आपको छोड़कर दूसरी जगह हृदयका समाधान उपयुक्त नहीं है—

हे शिव, मेरी यह चित्तवृत्ति पूर्व-पूर्व विषयोंको छोड़कर नये-नये विषयोंका आश्रयण करती रही है, जब तक नदी समुद्रकी तरह हमारी चित्तवृत्ति आपका आश्रयण नहीं कर लेगी, ( तबतक उसकी यही स्थिति रहेगी ) ॥ २३ ॥

अपि च ।

**परिमितविभवं कषायपाकं विषमतरं विषयान्तरं विहाय ।**
**निरवधिविवुधे समे समन्तात्त्वयि पुरुषोत्तम चित्तविश्रमोऽस्तु ॥ २४॥**

पुरुषोत्तमः—एवमपि मयि लीनचित्तवृत्तिः किमस्मदपकर्षपिशुनां वाचमुदाहरसि ।

पुरुषः—नाथ,

---

भिमतानां नित्यविज्ञानानन्दमयरूपेणात्मना निवर्त्तकत्वमभिप्रेतमिति तत्त्वार्थविदः । अन्यत्स्वयमूह्यम् ॥ २३ ॥

परिमितेति । परिमितः सीमितः विभवः ऐश्वर्यं शोभासम्पच्च यस्य तादृशम्, कषायपाकम् परिणामविरसम् विषमतरम् नानाभेदभिन्नम् विषयान्तरम् अन्यं विषयम् विहाय त्यक्त्वा निरवधिमधुरे अनन्तमाधुर्ययुक्ते समन्तात् सर्वतः सर्वदा च समे अविकारिणि तुल्यरसे च त्वयि, हे पुरुषोत्तम, चित्तविश्रमः मम चित्तस्य निर्भरनिलीनता अस्तु भवतु । अत्र विषयान्तरस्य त्यागे—परिमितविभवत्वं ( ससीमशोभाशालित्वम् ) परिणामविरसत्वम् विषमतरत्वं चोक्तम्, एवम् पुरुषोत्तमस्य निरतिशयासीममाधुर्ययुक्तत्वं समन्तात्समत्वम् ( कालकृतविकारराहित्यम् ) च तत्र चित्तविश्रमस्योपयुक्तत्वे कारणमुक्तमिति साभिप्रायविशेषणकतामूलः परिकरो नामालङ्कारः ॥ २४ ॥

मयि—पुरुषोत्तमे । लीनचित्तवृत्तिः—मनसा समाश्रितः । किम्—कथम् । अस्मदपकर्षस्य मदीयनीचभावस्य । पिशुनाम्—सूचिकाम् । उदाहरसि—कथयसि । एतावत्पर्यन्तां स्तुतयो या निबद्धास्ताः परमात्मनोऽपकर्षमेव गमयन्तीत्यभिप्रायेणायमाक्षेपः ।

---

परिमितकालस्थायी कषाय तथा दुःखप्रद विषयान्तर ( फलान्तर ) को छोड़कर हमारा यह चित्त अनन्त तथा अनन्तमाधुर्यपूर्ण सदासुखद एकरस रहनेवाले आप ( अमृतफल ) में विश्राम प्राप्त करे ॥ २४ ॥

पुरुषोत्तम—जब तुम्हारी चित्तवृत्ति मुझमें लीन हो गई है तब तुम हमारी हीनता सूचित करनेवाली बात क्यों कहते हो ?

गुणमपि तव निर्गुणत्वपक्षे गमयति दोषकुलाकुलः प्रबन्धः ।
मलिनयति नवेन्दुसुन्दराणि स्फटिकशिलाशकलानि काचसङ्गः ॥२५॥

किं चेदमपि ममाभिप्रेतम् ।

अपगतपदपाटवोऽपि गर्भादुपनिषदामधुनोद्गतः प्रबन्धः ।
जनयतु तव कौतुकं कलेन प्रतिपदविस्खलितेन जल्पितेन ॥२६॥

---

गुणमपीति । दोषकुलाकुलः नानादोषव्याप्तः प्रबन्धः अस्मदादिवाक्सन्दर्भः तव गुणम् अपि निर्गुणत्वपक्षे एव गमयति, संयोजयति, नानादोषयुक्तोऽस्मदाद्युक्तो वाक्सन्दर्भः पुरुषोत्तमस्य भवतो गुणमपि निर्गुणत्वपक्षे एव योजयति ये तव गुणास्तानप्यगुणानेव प्रत्याय्य वाचं विस्तारयतीत्यर्थः । तत्र दृष्टान्तमाह—मलिनयतीति । काचसङ्गः काचाश्मसंयोगः नवेन्दुसुन्दराणि नूतनचन्द्रोपमानि अतिस्वच्छानि स्फटिकशिलाशकलानि स्फटिकाश्मखण्डानि मलिनयति । काचाश्मसंयोगवशाद्यथा स्वच्छा अपि स्फटिकशिलाखण्डाः काचगतमालिन्यसम्पर्कवशात् मलिनाः प्रतिभासन्ते तथा मम वाचो ( दूषणपूर्णाः ) मलिनाः तव गुणमपि स्वमालिन्यसम्पर्केण मलिनं निर्गुणत्वपक्षक्षिप्तं कुर्वन्ति, अतो वस्तुतस्तव गुणानेव गातुं प्रवर्त्तमानोऽप्यहं वाचो दोषेणापकर्षपिशुनतामेव प्रपद्य इति क्षन्तव्यो ममायमनिच्छाकृतोऽपराध इति भावः ॥ २५ ॥

अपगतेति । उपनिषदाम् तव दारभूतानाम् ( उपनिषदामेकस्मिन्परमात्मन्येव तात्पर्यस्य निर्णीततया तद्दाररूपतोक्ता ) गर्भात् गूढाशयात् उद्गतः जन्मप्राप्तः अयं प्रबन्धः त्वत्स्तुतिपर्यवसायी वाक्सन्दर्भः ( बालकः ) अधुना सम्प्रति ( अल्पकालिकत्वात्तस्य ) अपगतपदपाटवः सुप्तिङन्तलक्षणपदपटुत्वरहितः ( चरणक्षमतावर्जितश्चेति बालके ) पदे पदे प्रतिपदम् ( प्रतिचरणन्यासं चेति बालके ) विस्खलितेन त्रुटिपूर्णेन ( श्लथगद्गदेनेति बालकपक्षे ) कलेन अव्यक्तमधुरेण जल्पितेन स्ववचनेन तव कौतुकम् कुतूहलम् जनयतु उत्पादयतु ।

---

दोषोंसे भरा मेरा यह वाक्यप्रबन्ध ही ऐसा है कि वह आपके गुणोंको भी दोषोंके रूपमें ( निर्गुणत्व-पक्षमें ) गिना करता है । काचका संसर्ग नवचन्द्रकी तरह स्वच्छ स्फटिक शिलाखण्डोंको भी मलिन कर दिया करता है ॥ २५ ॥

मेरा यह वाक्यप्रबन्ध अभी अभी उपनिषद्रूप माताके गर्भसे निकला है,

अपि चैतदाशासे पृच्छामि च ।

**अपटुभिरभिधित्सितार्थबुद्धावनभिमतानपि बोधयद्भिरर्थान् ।**
**पुरमथन पराहतैरमीभिः कथय कदा विहसिष्यसि प्रलापैः ॥२७॥**

पुरुषोत्तमः—ननु मनसा सह वाचो न मामासादयन्तीत्याम्नायते ।

---

यथा स्वप्रेयसीगर्भसम्भूतः अल्पकालिकत्वात्स्खलद्गतिरपि बालकः स्वस्य श्लथगद्गदेनाव्यक्तमधुरेण च वचनेन पुरुषमानन्दयति—तथा पुरुषोत्तमस्य तव परिग्रहभूतानामुपनिषदामाश्रयाज्जातः सुप्तिङन्तरूपपदपाटवरहितः प्रतिपदं त्रुटिपूर्णश्चायं मया कृतः स्तवः अव्यक्तमधुरतया तव पुरुषोत्तमस्य कौतुकं जनयत्विति तात्पर्यम् । श्लेषोपमे सङ्कीर्णे ॥ २६ ॥

अपटुभिरिति । हे पुरमथन स्थूललिङ्गकारणस्वरूपशरीरत्रयविध्वंसन, परात्मन्, अभिधित्सितस्य विवक्षितस्य अर्थस्य प्रमेयजातस्य बुद्धौ ज्ञापने अपटुभिः अकुशलैः अनभिमतान् अनभिधित्सितान् अपि अर्थान् बोधयद्भिः अमीभिः पूर्वोक्तैः पराहतैः वाधितैश्च प्रलापैः ममानर्थकैर्वचनैः कदा विहसिष्यसि स्मितं करिष्यसि इति कथय । वाक्यस्य प्रलापरूपता वक्तव्यार्थकथनाक्षमतयाऽवक्तव्यार्थकथनप्रवृत्ततया बाधिततया च जायते, ते त्रयोऽपि दोषाः सहभूय मम वाचां प्रलापरूपतां गमयन्ति तदमीभिर्मम प्रलापैः कदा तव स्मितमुद्भविष्यति, युज्यते तु तथेति भावः । 'प्रलापोऽनर्थकं वचः ।' प्रलापैः व्यक्तैर्वचनैः' इति ध्वनिः ॥ २७ ॥

मनसेति । मनोऽपि मां न गोचरीकुरुते, न वा वाचोऽपि मां गोचरी-

---

इसे पदपाटव नहीं है ( बोलने या चलनेकी शक्ति नहीं हो सकी है ) प्रत्येक पदमें त्रुटि एवं प्रत्येक चरणन्यासमें स्खलनके द्वारा यह अपने बोलने (चलने) से आपका कौतुक उत्पन्न करे ॥ २६ ॥

मेरी यही कामना है और मैं यही जानना चाहता हूँ कि—

हे पुरमथन, विवक्षित अर्थोंको कह सकनेमें असमर्थ, एवं अशक्तिके कारण अनभिमत अर्थोंको भी कह देनेवाले परस्पर व्याहत मेरे इन प्रलापोंसे तुम कब हँसोगे ? कृपया इतनाभर कह दो ॥ २७ ॥

पुरुषोत्तम—मनके साथ वाणी भी पुरुष तक नहीं पहुँच पाती है ऐसा सुना जाता है

पुरुषः—हन्त नाथ,

**यदि सह मनसा तवाभिसारात्कुलगुरुभिर्निगमैर्निवारितासौ।**
**स्वयमभिसर तर्हि वाचमेनां परपुरुषं निगमो न पश्यति त्वाम्॥२८॥**

**तेन हि लीलापरिगृहीतगिरिशविग्रह राजखण्डचूडामणे**

---

कुर्वन्ति इत्यर्थः। 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इति श्रुतिरत्र मूलम्। आम्नायते—वेदे श्रूयते (आम्नाय-समाम्नायशब्दयोर्वेद एव प्रसिद्धिरिति शब्देन्दुशेखरे नागेशः)।

यदि सह मनसेति। यदि असौ वाक् मनसा सह कुलगुरुभिः कुलश्रेष्ठैः निगमैः वेदैः तव अभिसारात् अभिसारिकारूपेण तव समीपोपसर्पणरूपात् कर्मणः (त्वत्साक्षात्कारात्) निवारिता प्रतिषिद्धा, तर्हि अस्यां स्थितौ एनां वाचं त्वम् स्वयम् आत्मनैव अभिसर समीपमुपसर्प, ननु मामपि वाक्समीपमुपसर्पन्तमयं वृद्धो निगमो वारयिष्यतीत्याशङ्कामपनुदति—त्वाम् परपुरुषम् परमात्मानम् जारञ्च निगमो न पश्यति, अदृश्यमानं च कथं वारयिष्यति तदलं तथाशङ्कयेति भावः। मनसा सह त्वामभिसर्त्तुम् (स्वविषयतां प्रापयितुम्) प्रस्थितामिमां वाचं 'नेतिनेति' कथयन् वाक्कुलगुरुर्निगमो न्यवारयदिति सा त्वां विषयीकर्त्तुं नाक्षमत—तदुक्तम्—'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इति। अस्यां स्थितौ परमात्मन् त्वं स्वयमेव वाचमभिसर, त्वां तु नायं निगमो वारयितुं क्षमेते, तस्य त्वां द्रष्टुमशक्तत्वादिति तात्पर्यम्। नायिकामभिसर्त्तुमुद्यतां यदि तत्कुलवृद्धो निषेधति तथा करणात्तदा नायकस्तां स्वयमभिसरति वञ्चयन्वृद्धस्य दृशमिति लौकिकवृत्तमत्र तत्त्वाख्यानस्य पृष्ठभूमीकृतम्। वेदो वाक्कुलगुरुः सर्वाधिकप्रमाणत्वात्सर्वप्रथमोद्भूतत्वाच्च॥२८॥

लीलया विलासेन परिगृहीतः स्वीकृतः गिरिशस्य शिवस्य विग्रहः शरीरं येन तादृशलीलयैव शिवरूपधर परमात्मन्। राजखण्डम् चन्द्रशकलं चूडामणिर्मस्तकालङ्कारो यस्य तथाभूतराजखण्डचूडामणे शशिखण्डशिखण्डमण्डन।

---

पुरुष—हा नाथ, यदि वाणीकुलश्रेष्ठ वेदोंने मनको साथ लेकर आपके पास चली हुई वाणीको निवारित कर दिया, तो अब आपही वाणीके पास चले आइये, आपको वेद नहीं देख सकते हैं॥ २८॥

मम वचनजलानि कर्णशुक्तौ
तव पतितानि गतानि मौक्तिकत्वम् ।
विगुणविलुठितानि लाजबुद्ध्या
रसयतु कुण्डलकुण्डलिप्रकाण्डम् ॥२९॥

पुरुषोत्तमः—प्रसादय वत्स, बन्धविध्वंसिनीमनादिमादिप्रकृतिम् ।

---

मम वचनेति। मम वचनानि एव जलानि (स्वातीनक्षत्रे घनेन वर्षणं गमितानि) तव शिवस्य कर्णशुक्तौ श्रवणशुक्तौ पतितानि मौक्तिकत्वम् मुक्तास्वरूपत्वं गतानि (स्वातीजलं शुक्तिपतितं मुक्तारूपं भजते इति प्रसिद्धिमनुरुध्येदमुक्तम्) तानि मुक्तारूपाणि मम वचनानि विगुणानि अतएव विलुठितानि सूत्रस्याभावेन विप्रकीर्णानि काम्यगुणाभावाद्विक्षितानि कुण्डलकुण्डलिप्रकाण्डम् तव कुण्डलतामापन्नः सर्पाधिराजो वासुकिः लाजबुद्ध्या लाजा इमानीति ज्ञात्वा रसयतु आस्वादयतु। सति गुणराहित्ये श्रवणे विप्रकीर्णेषु वचनमौक्तिकेषु श्रवणभूषणीभूततया समीपवर्त्तिनो वासुकेः संभवति लाजभ्रमेणास्वादनप्रवृत्तिरिति भावः ॥ २९ ॥

प्रसादय—प्रार्थनादिनानुनय । बन्धविध्वंसिनीम्—संसारबन्धनिवर्त्तिकाम् अनादिम्—अजन्मानम् (तथा चाहुर्वेदान्तिनः—'जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा। अविद्या तच्चितोर्योगः षडस्माकमनादयः॥' इति। आदिप्रकृतिम्—सर्वजननीम् मायाम् ।

---

हे लीलावश महादेवके रूप धारण करनेवाले चन्द्रशेखर,

मेरे वचनरूप जल तुम्हारे श्रवणरूप सीपोंमें पहुँचकर मोती बन गये, किन्तु तुम विगुण हो, अतः उनकी माला नहीं बन सकी, वे बिखरे रहे, इस स्थितिमें उन बिखरे हुए मोतियोंको खील (लावा) समझकर तुम्हारे कर्णाभरण फणिगण चुगलें ॥ २९ ॥

पुरुषोत्तम—वत्स, बन्धविध्वंसिनी अनादि आदि प्रकृतिका अनुग्रह प्राप्त करो ।

पुरुषः—( आकाशे । ) हेरम्बकुमारयोरम्ब,

न तव पुरि शिलादपुत्रवेत्र-
व्रततिनिरुद्धतया लभे प्रवेशम् ।
गिरिशगृहिणि गौरि गोपुरेभ्यो
बहिरुपविश्य शपामि नौमि च त्वाम् ॥३०॥

पुरुषोत्तमः—अपि पश्यसि माम् ।

---

हेरम्बकुमारयोरम्ब—गणेशकार्त्तिकेययोर्जननि ।

न तव पुरीति । हे गिरिशगृहिणि शिवदयिते, गौरि, तव पुरि त्वदधिष्ठानभूते नगरे शिलादपुत्रस्य नन्दिनः ( कणभक्षमतानुगामिनश्च ) वेत्रव्रतत्या वेत्रलतया निरुद्धतया वारितप्रसरतया प्रवेशं न लभे प्राप्नोमि । ततश्च गोपुरेभ्यः पुरद्वारेभ्यः बहिः बाह्यदेशे उपविश्य स्थित्वा शपामि आक्रोशामि त्वां नौमि स्तौमि च 'वल्ली तु व्रततिर्लता' 'पुरद्वारं तु गोपुरम्' इत्युभयत्राप्यमरः । अन्योपि नगरप्रवेशार्थी दौवारिकवेत्रदण्डेन वार्यमाणः पुराद् बहिरुपविश्याक्रोशति, तन्नगराधीशं च स्तौति, तथाऽयञ्जीवोऽपि मायाब्रह्मरूपिणोः गिरिजागिरिशयोर्नगरे निर्वाणपुरे प्रवेशमीहमानः तदीयसेवकेन नन्दिस्थानीयेन कणभक्षमतानुयायिनाऽनधिकारिताभावनया वार्यमाणो भक्तिस्वरूपे बहिर्देशेऽवस्थायाक्रोशति स्तौति चेति भावः ॥ ३० ॥

एतावता ग्रन्थेन भगवदाश्रितमतेर्वाचिकस्तुत्यात्मकोपासनायाः चित्तशुद्ध्यादिद्वारोपयोगः प्रदर्शितः, तादृशोपासनासमवहितसमाधिवशात्स्वरूपसाक्षात्कारप्रकरणमथारभ्यते । नैयायिका भगवतोऽपि साक्षात्कारविषयत्वं स्वीकुर्वन्तीति साधितं कुसुमाञ्जलौ ॥

---

पुरुष—( आकाशकी ओर लक्ष्य करके )

हे गणेश तथा कार्त्तिकेयकी जननि, तुम्हारे नगरमें मैं प्रवेश नहीं कर पाता हूँ क्योंकि शिलादपुत्र नन्दी अपनी वेत्रयष्टिसे हमारे आगे बढ़नेको रोक देता है, अतः मैं पुरद्वारके बाहरसे ही, हे महादेवकी गृहिणी गौरि, तुम्हें पुकारता हूँ तथा तुम्हारी स्तुति किया करता हूँ ॥ ३० ॥

पुरुषोत्तम—क्या तुम मुझे देख रहे हो ?

पुरुषः—

पुरहर परदृष्टिदोषशान्त्यै कति जगदण्डकगण्डकान्बिभर्षि ।
त्वदुपरि सहजप्रमोहदुष्टां कथमिव नाथ निपातयामि दृष्टिम् ॥३१॥

पुरुषोत्तमः—वत्स, सूनृतवचनोऽसि । प्रसन्नोऽस्मि ते । प्रयच्छामि संयमवशोपनतमप्रतिहतभौतिकं चक्षुः । पश्य मे स्वरूपम् । ( इत्यावरणमपसारयति । )

---

पुरहरेति । हे पुरहर, त्रिपुरान्तक, परेषां जीवानां दुर्जनानाञ्च दृष्टिदोषस्य दुष्टदृष्टिनिपातजन्यस्याशुभस्य शान्त्यै निवृत्त्यै कति अविज्ञातपरिमाणतयाऽसंख्यान् जगदण्डरूपान् ब्रह्माण्डस्वरूपान् गण्डकान् बिभर्षि ( लोकानामशुभदृष्टिपातान् वारयितुं बालकानां कण्ठदेशेषु तन्मातरो गण्डकान् परिधापयन्ति येन ते डाकिन्यादिदृष्टिदोषैः नाभिभूयन्ते, तथैव त्वमपि लोकानामशुभदृष्टिपातादात्मानं रक्षितुं ब्रह्माण्डस्वरूपान् गण्डकान् धारयसि, एवं सति— ) हे नाथ सहजेन स्वाभाविकेन प्रकृष्टेन बह्वायासोच्छेद्येन मोहेन अविवेकेन दुष्टां मलिनां दृष्टिं त्वदुपरि कथमिव निपातयामि । अनन्तब्रह्माण्डधारिणस्तव मोहमलिनया दृश्या दर्शनस्याशक्यक्रियत्वात् कथं त्वां पश्येमेत्यर्थः । भगवतो दुष्टदृगविषयत्वप्रतिपादनेन निर्दोषस्य मनसः समाधिसहकारेण भगवत्साक्षात्कारकारणत्वं सूचितं सूचितम् ॥ ३१ ॥

सूनृतवचनः— मधुरसत्यवाक् । संयमवशोपनतम्—संयमेन लभ्यम् अप्रतिहतम् दिक्कालव्यवहितयोग्यायोग्यसकलवस्तुदर्शनक्षमम् । आवरणम्— अनादिमायाया आवरणशक्तिम् । अपसारयति—अपनयति । संयमवशात्प्राप्तेऽप्रतिहते—

---

पुरुष—हे पुरारे, दूसरोंकी दृष्टिके ( सम्पर्क ) दोषसे अपनेको बचाये रखनेके लिये तुमने ( नजाने ) कितने ब्रह्माण्डरूप गण्डे धारण कर रखे हैं, मैं अपनी यह स्वभावतः दोषपूर्णदृष्टि, हे नाथ, तुमपर किस प्रकार डाल सकता हूँ ॥ ३१ ॥

पुरुषोत्तम—वत्स, तुम्हारे वचन बहुत मधुर एवं सत्य हैं, मैं तुम पर प्रसन्न हूँ अतः संयमवश उपस्थित अप्रतिहत भौतिक चक्षु तुमको देता हूँ जिससे तुम मेरे स्वरूपको देखोगे ।

पुरुषः—( निरूप्य । ) अहो नु खलु भोः, इह बृहतामपि बृहत्तमे निःसीममहिमभूमनि चिदकूपारे प्लवन्ते च मज्जन्ति चोन्मज्जन्ति च जगदलाबूनि ।

कुत्राप्युद्ध्रियते जलात्क्वचिदपां गर्भे चिरादुप्यते
क्वापि भ्राम्यति कुत्रचिद्विदलति द्वेधा नखैर्ब्रह्मणः ।
कुत्रापि ज्वलति क्वचिद्भसितसाद्भूतं समुद्धूयते
तेजोभिः क्वचन क्वचिच्च तिमिरैर्ब्रह्माण्डमापूर्यते ॥३२॥

---

चक्षुषि प्रथमतोऽपरिमितो बहिरर्थाकारोपरक्तो भगवान् भासते स एव विराडित्युच्यते इतः परं कियता ग्रन्थेन तदेव भगवतो विराड्रूपत्वं विवरीष्यति ।

बृहतामपि बृहत्तमे—अतिमहति । निःसीममहिमभूमनि—निःसीमः अपरिमितः महिम्नः महत्त्वस्य भूमा बाहुल्यं यस्य तादृशे । चिदकूपारे—चैतन्यसागरे । जगदलाबूनि—संसारस्वरूपाणि तुम्बीफलानि ।

कुत्रापीति । ब्रह्माण्डं कुत्रापि जलात् उद्ध्रियते उपरि नीयते, क्वचित् अपां गर्भे अभ्यन्तरभागे चिरात् बहोः कालस्य कृते उप्यते निधीयते । क्वापि भ्राम्यति, क्वापि ब्रह्मणो नखैः द्वेधा भागद्वये विदलति भिद्यते । कुत्रापि ज्वलति, क्वचित् भसितसाद्भूतम् भस्मभावं गतम्, क्वचित् तेजोभिः समुद्धूयते, उपरिनीयते, क्वचन तिमिरैः तमोभिः आपूर्यते आव्रियते ।

अनन्तानां ब्रह्माण्डानां निधानभूते विराडात्मनि भगवति किमपि उत्पद्यमानं ब्रह्माण्डं जलादुद्ध्रियमाणमिव दृश्यते, प्राप्तप्रलयकालं च किमप्यन्यद् ब्रह्माण्डं

---

[ आवरण हटाते हैं ]

पुरुष—( देखकर ) अहा हा, यहाँ बड़ोंमें भी बड़े निःसीम महत्त्व तथा बहुत्वसे युक्त ज्ञानसागरमें जगत्स्वरूप तुम्बीफल तैरते, डूबते और उतराते हैं ।

कहीं पर ब्रह्माण्ड पानीसे ऊपर निकल रहा है, कहीं जल-समाधि ले रहा है, कहीं घूम रहा है, कहीं ब्रह्माके नखोंसे दो खण्डोंमें विभक्त किया जा रहा है, कहीं पर वह जलरहा है, कहीं भस्म होकर उपरकी ओर उड़ रहा है, कहीं वह अन्धकारसे भर रहा है और कहीं पर वह तेजसे भरता जा रहा है ॥ ३२ ॥

अपि च ।

ब्रह्माण्डानि हिरण्यगर्भगुरुभिर्गर्भैरपां संप्लवे
निर्मग्नानि समुद्धरन्ति कतिचिन्नीलत्विषः पूरुषाः ।
संवर्तानलहेतिभिर्भसितसाद्भूतानि चान्यन्यत-
स्तैरुद्धूलनमाचरन्ति विकटभ्राम्यज्जटाग्रा नटाः ॥३३॥

पयसि निलीयते, किमप्यपरं ब्रह्माण्डं प्रवहवायुपतितं भ्राम्यति, किमपि चापरं ब्रह्मणो नखैर्द्विधा विदलय्य विपाट्यमानमालोक्यते, किमपि प्रलयाक्रान्तं कालानलेन दह्यमानं दृश्यतेऽपरञ्च चिरप्रवृत्तप्रलयं भस्मभावमासाद्य तेजसोद्धूयते, किमपि च कालरात्रितमसा व्याप्यते इत्यनेकरूपाणि ब्रह्माण्डानि त्वयि पश्याम इत्यहो निःसीममहिमभूमत्वं तवेति विस्मयो भावाङ्गम् ॥ ३२ ॥

ब्रह्माण्डानीति । कतिचित् बहुसंख्यकाः नीलत्विषः कृष्णवर्णाः विष्णुमूर्त्तयः पूरुषाः हिरण्यगर्भेण विराड्रूपेण भगवता गुरुभिः विशालैः गर्भैः अपां सम्प्लवे वारिपूरे निर्मग्नानि ब्रह्माण्डानि समुद्धरन्ति बहिर्निस्सारयन्ति । प्रलये हिरण्यगर्भो-दरवर्त्तिजलप्रविष्टं जगद् आरभ्यमाणायां सृष्टौ विष्णुरुद्धरतीति वस्तुवृत्तमत्रोक्तम् । अन्यतः अन्यत्र यानि संवर्त्तानलहेतिभिः प्रलयाग्निशिखाभिः भसितसाद्भूतानि भस्मीभूतानि ब्रह्माण्डानि तैः भस्मतां गतैर्ब्रह्माण्डैः विकटभ्राम्यज्जटाग्राः घूर्णमान-भयङ्करजटाप्रान्ताः नटाः रुद्रमूर्त्तयः उद्धूलनं भस्मक्रीडाम् आचरन्ति कुर्वते । एकतः प्रवृत्तसृष्टि ब्रह्माण्डं विष्णुमूर्त्तयो हिरण्यगर्भोदरवर्त्ति जलमध्यादुद्धरन्ति, परतश्च प्रलयंगतमपरं ब्रह्माण्डं भस्मरूपतां गतं भ्राम्यज्जटाकलापा रुद्रमूर्त्तय उद्धू-लयन्तीति विरुद्धरूपब्रह्माण्डानामाकरो भवानत्याश्चर्यरूप इत्याशयः ॥ ३३ ॥

जलप्रवाहमें—हिरण्यगर्भके गर्भस्थ होनेके कारण भाराधिक्यसे निमग्न ब्रह्माण्डोंको कुछ श्यामलकाय पुरुष ( विष्णु ) निकाल रहे हैं, और कुछ ब्रह्माण्ड जो पहले ही प्रलयानलकी ज्वालासे भस्म हो चुके हैं, उन भस्मीभूत ब्रह्माण्डोंसे विकट तथा लहराती हुई जटाओंसे युक्त कुछ नट ( शिव ) भस्मक्रीडा कर रहे हैं ॥ ३३ ॥

किंचेदमत्र परिपच्यमानोदरमर्मरितोपरितनपुटे विघटमानध्रुवबुध्न-बन्धने गगनगोले किमपि कौतुकमालोक्यते ।

आविर्भवन्ति विदलज्जगदण्डगर्भा-
दश्वामुखानलशिखाः प्रलयप्रगल्भाः ।
बीजानि कालपरिपाकवशाद्विदीर्य-
माणस्य दाडिमफलस्य यथोच्छ्वसन्ति ॥३४॥

पुरुषोत्तमः—वत्स, संयमवशेन प्रथमतो दृश्यमाने विराड्वैभवे किमपरं पश्यसि ।

---

परितः सर्वतः पच्यमानम् सञ्जायमानपाकक्रियम् उदरं मध्यभागो यस्य तादृशमथ च मर्मरितं मर्मरायमाणमुपरितनपुटं बाह्यभागो यस्य तादृशञ्च तस्मिन् । विघटमानम् भ्रश्यद् ध्रुवस्य बुध्नबन्धनं मूलबन्धनं यस्मिंस्तथोक्ते । गगनगोले—आकाशमण्डले । कौतुकम्—आश्चर्यम् । 'मूलं बुध्नोऽङ्घ्रिनामकः' इत्यमरः ॥

आविर्भवन्तीति । प्रलये सृष्ट्यवसानकाले प्रगल्भाः प्रौढाः अश्वामुखानलस्य वडवावह्नेः शिखाः ज्वालाः विदलतः सद्यो विशीर्यमाणस्य जगदण्डस्य ब्रह्माण्डस्य गर्भात् मध्यभागात्—आविर्भवन्ति प्रकटन्ति, यथा कालपरिपाकवशात् समयजनित-रसवर्णसंयोगस्वरूपादिपरिवर्त्तनवशात्; विदीर्यमाणस्य स्वयमेव विशकलीभवतः दाडिमफलस्य बीजानि उच्छ्वसन्ति बहिर्भवन्ति कालकृतपरिपाकवशविशीर्यमाण-दाडिमफलबीजतुल्या इमा वड़वानलशिखाः विदलज्जगदण्डमध्यान्निःसरन्ति इत्यर्थः ॥ स्फुटोपमा ॥ ३४ ॥

---

भीतरसे पच्यमान तथा ऊपरसे मुरमुरे, एवं विघटित हो गया है ध्रुवरूप मूलबन्धन जिसका ऐसे इस आकाशगोलमें कुछ आश्चर्यजनक दृश्य दिखाई दे रहा है :—

टूटते हुए ब्रह्माण्डके गर्भसे प्रलय करनेको उद्यत बड़वानल की ज्वाला प्रकट हो रही है, जैसे समयकृतपरिपाकवश फटनेवाले अनार-फलसे बीज बाहर निकल रहे हों ॥ ३४ ॥

पुरुषोत्तम—संयमवश पहलेपहल दीखनेवाले इस विराट् वैभवमें क्या देख रहे हो ?

पुरुषः—एतावत्पश्यामि ।

अविरतपरिवृत्तदण्डकाष्ठाकुलमतुलव्यतिवर्तमानवेगम् ।
भ्रमयसि जगदण्डगोलमालाकलशकलापकुलाल कालचक्रम् ॥३५॥

इदं चापरं च तर्कयामि—

अपरिमितविभागभूमिरेकस्त्वमसि ततो जगदण्डबिन्दुरासीत् ।
तदिति दशविधा दिशामधीश त्वदवतरा गणितक्रमेण सिद्धाः॥३६॥

अविरतेति । हे जगदण्डगोलमालाकलशकलापकुलाल, ब्रह्माण्डगोलरूपबहुकलशनिर्माणपटो कुम्भकार, त्वम् अविरतम् सर्वदा परिवृत्ते भ्रान्ते दण्डः काष्ठा चेति दण्डकाष्ठे ताभ्याम् आकुलम् सततसञ्चारि ( चक्रपक्षे अनवरतपरिवृत्तेन दण्डकाष्ठेन काष्ठदण्डेन आकुलं सञ्चार्यमाणम् ) [ अतुलव्यतिवर्त्तमानः अनुपमतया सततवर्द्धमानो वेगो भ्रमणजन्यवेगो यस्य तादृशञ्च ] कालचक्रं भ्रमयसि । यथा बहूनां घटानां निर्माता कुलालः सततसञ्चारिकाष्ठदण्डेन वर्धमानवेगं चक्रं भ्रमयति तथैव त्वं बहूनां ब्रह्माण्डानां निर्माता दण्डकाष्ठायुतं सततं वेगेन धावन्तं चामुं कालं सृजसीति दिक्कालयोरपि त्वमेव कर्त्तासीति महत्ते वैभवमिति भावः । दण्डो दिनरात्र्योः षष्टितमो भागः प्रसिद्धः, काष्ठा अष्टादशनिमेषाः । रूपकमलङ्कारः ॥ ३५ ॥

अपरिमितेति । हे दिशामधीश, अपरिमितविभागानाम् घटपटगोमनुष्यस्त्रीपुंसादिरूपाणाम् द्वित्वादिसंख्याभेदानाञ्च भूमिः स्थानम् मूलञ्च त्वम् एकः सजातीयद्वितीयरहितः असि, ततः त्वत्तः जगदण्डबिन्दुः बिन्दुरूपब्रह्माण्डम् आसीत् अजायत । तत् ततः गणितक्रमेण गणनारीत्या दशविधाः त्वदवतराः तवावतार-

पुरुष—इतना ही देखता हूँ कि—

ब्रह्माण्डसमूहरूप कलशोंके निर्माणमें प्रवृत्त कुम्भकारस्वरूप आप बराबर घूमते रहनेवाले दण्डकाष्ठसे ( दण्ड—काल, दिशाकाष्ठा ) आकुल तथा वेगसे घूमतेहुए इस कालचक्र ( चाक ) को घुमा रहे हैं ॥ ३५ ॥

और मैं यह तर्क करता हूँ कि—

आप पहले विभागसे रहित एक थे बादमें यह ब्रह्माण्ड बिन्दु ( शून्य )

पुरुषोत्तमः—किमपरं ते प्रतिभाति ।

पुरुषः—भगवन्ननन्त,

**ग्रहगृहसरसीरुहाणि राहुभ्रमरविमर्दसहार्ककर्णिकानि ।**
**नियतिपवनवेगघट्टितानि त्वयि करुणाकमलाकरे भ्रमन्ति ॥३७॥**

---

भेदाः सिद्धाः । सृष्ट्यादौ सर्वविधविभागानां मूलस्थानभूत एकस्त्वं भवसि ततो ब्रह्माण्डबिन्दुर्जात इति एकोपरि बिन्दुन्यासेन गणितानुसारेण दश तवावताराः सिद्धा इत्यर्थः । क्वचित्पुस्तके—"तदिति दशविधा दिशामधीशास्त्वदवतराः" इत्येवंरूपः पाठः, तत्र दिशामधीशानामेव भगवदवताररूपता साधिता बोध्या, तत्र 'दिशाञ्च पतये नमः' इति शतरुद्रियमपि समर्थकम् । शिवस्तुतिपुस्तके त्वस्य श्लोकस्य भिन्नमिव रूपं दृश्यते—तत्रोत्तरार्धे यथा—"इति भुवनभवैकधुर्यं, जाने दशककुभो गणितक्रमेण सिद्धाः ।' अत्र पाठे दिशामेव दशविधत्वं साध्यते ॥ ३६ ॥

ग्रहगृहेति । त्वयि त्वद्रूपे करुणाकमलाकरे कारुण्यसरोवरे ( आकाशमूर्तौ ) ग्रहगृहाणि नक्षत्रमण्डलानि एव सरसीरुहाणि कमलानि, राहुभ्रमराणां विमर्दः आक्रमणम् तस्य सहानि, अर्का एव कर्णिकाः कमलान्तर्गतकोशा येषु तथाविधानि च, नियति पवनवेगघट्टितानि भाग्यरूपवायुवेगचलितानि सन्ति भ्रमन्ति । यथा क्वचनान्यत्र सरोवरे भ्रमरविमर्दसहानि सकर्णिकानि वायुप्रचलानि च कमलानि भ्रमन्ति तथैव त्वयि कारुण्यकमलाकरे राहुरूपभ्रमरकृतविमर्दसहानि सूर्यरूपकर्णिका-युतानि भाग्यवायुपरिचालितानि नक्षत्रमण्डलस्वरूपाणि कमलानि भ्रमन्तीति परम्परितरूपकम् ॥ ३७ ॥

---

पैदा हुआ, ( इसतरह १ पर ० होनेसे ) गणित शास्त्रके अनुसार—हे दिक्पति, तुमसे उत्पन्न दशदिशायें सिद्ध हुईं ॥ ३६ ॥

पुरुषोत्तम—तुमको और क्या मालूम पड़ रहा है ?

पुरुष—हे भगवन् , हे अनन्त,

आप करुणाकमलाकर ( गगनविग्रह ) हैं जिसमें राहुके आक्रमणको सहसकनेवाले सूर्यरूप कर्णिकाओंसे युक्त ग्रहमण्डलरूप अनेक कमल स्वभाग्यरूप पवनके वेगसे चालित होकर घूम रहे हैं ॥ ३७ ॥

पुरुषोत्तमः—कथय एवंविधं मम स्वरूपमवलोक्य कीदृशि चित्तवृत्तौ वर्तसे।

पुरुषः—अरे दिगम्बर,

**प्रकृतिमलिनमृक्षलक्षलिक्षाचयचितमम्बरचीवरं वसानम्।**
**प्रकटितवृहदण्डमत्रपं त्वां पुरुषमुदीक्ष्य हसामि चोल्लसामि ॥३८॥**

पुरुषोत्तमः—वत्स, प्रणिधेहि तावदन्तर्मुखेन संयतचेतसा मम

---

प्रकृतीति। प्रकृत्या मायया मलिनम् (मायाशबलस्य ब्रह्मणो मालिन्यमुक्तं शास्त्रे) स्वभावेन च वार्द्धक्यप्रयुक्तेन स्नानाद्ययोगेन च मलिनम् मलदूषितम्। ऋक्षाणां नक्षत्राणां लक्षं तदेव लिक्षाचयः यूकाण्डसमूहस्तेन चितं व्याप्तम् अम्बरचीवरम् आकाशस्वरूपं वस्त्रखण्डं वसानम्, वृद्धपक्षे च ऋक्षा यत्र तत्र दृश्या लक्षलिक्षाः लक्षसंख्याकानि यूकाण्डानि ताभिश्चितम् अम्बरचीवरम् अनावरणक्षमं वस्त्रखण्डं परिदधानम्। प्रकटितवृहदण्डं महतो विश्वब्रह्माण्डस्य प्रकटयितारम् अन्यत्र स्फुटदृश्यविशालाण्डकोशम् अत्रपम् (द्वितीयाभावादलज्जम्) अन्यत्र वार्धक्यवशाद् गलितलज्जम् त्वां पुराणपुरुषम् जरन्तं च पुरुषमालोक्य आवरणापगमेन साक्षात्कृत्य दृष्ट्वा च हसामि उल्लसामि प्रसीदामि च। विकृताकारवाक्चेष्टादिदर्शनादत्र हासः सम्भवी। भगवत्साक्षात्कारेऽपि हासप्रसादयोरुक्तिश्च बहिर्विषयसंवलितं भगवन्तमुपासीनस्यापि न विलीयन्ते चित्तविकारा इत्याशयेन बोध्या॥ ३८॥

प्रणिधेहि—समाधानं कुरु। संहरणलीलाम्—संहारकौशलम् (प्रणिधानेन साक्षा-

---

पुरुषोत्तम—मेरे इसतरहके स्वरूपको देखकर तुम्हारी कैसी चित्तवृत्ति हो रही है, यह तो बताओ।

पुरुष—हे दिगम्बर,

तुमने प्रकृतिमलिन एवं नक्षत्रगणस्वरूप लीखोंसे भरे हुए आकाशस्वरूप वस्त्रखण्ड पहन लिया है, तुमसे यह विशाल ब्रह्माण्ड प्रकटित होता है, (तुम्हारा बृहत् कोष दीख रहा है) तुझको देखकर मुझे हंसी आती है और खुशी होती है॥ ३८॥

पुरुषोत्तम—अरे वत्स, अन्तर्मुख तथा संयत चित्तके द्वारा मेरी संहरण-

संहरणलीलाम् ।

पुरुषः—( प्रणिदधद् । ) इदं पश्यामि ।

किरति सकलभूतवञ्चनाय त्वदुपरि पिष्टपसर्षपानविद्या ।
तदपि निमिषमात्रनिर्गतोऽपि प्रविशति भूतगणो भवन्तमेव ॥३९॥

त्कुरु ) सृष्टिलीलाध्यानापेक्षया संहारलीलाध्यानस्य वैराग्यप्रकर्षसम्पादकतयाऽन्तर्मुखचित्तवेद्यत्वमुच्यते ।

प्रणिदधत्—समाधिं कुर्वन् ( प्रथमान्तं पुरुषविशेषणम् ) ।

किरतीति । अविद्या माया सकलभूतानाम् पृथिव्याद्याकाशान्तानां तत्त्वानाम् वञ्चनाय प्रपञ्चाध्यासरूपप्रतारणाय त्वदुपरि पिष्टपानि भुवनान्येव सर्षपास्तान् किरति निक्षिपति—( यथा काचिद्योगिनी सकलानां देवयोनिप्रभेदभूतानां भूतानां वञ्चनाय अपसारणाय कस्याप्युपरि सर्षपान् विकिरति तथैव अविद्या सर्वेषां भूतानां पृथिव्यादीनाम् प्रपञ्चाध्यासाय सर्वाण्यपि ब्रह्माण्डानि त्वयि विकिरति ) तदपि तथापि निमिषमात्रं कियन्तं कालं यावत् सृष्टिकाले निर्गतोऽपि सभूतगणः भवन्तमेव ( प्रलये ) विशति । कृतेपि योगिन्या सर्षपप्रक्षेपद्वारा भूतनिर्गमे पुनरपि भूतग्रामो भवन्तमेव विशतीति तत्प्रयासो विफलत्वमापद्यमानो बोध्यः । भूतापसारणक्रियायां सर्षपनिक्षेपोऽभिचारतन्त्रे प्रतिपादितः । सर्षपप्रक्षेपेण यथा भूतानां वञ्चनमिष्यते तथात्र पिष्टपानां जगतां भवति क्षेपेण प्रपञ्चाध्यासरूपं वञ्चनमिष्टम् , पञ्चानां भूतानामाविर्भावविलयौ निर्गमप्रवेशाभ्यामध्यवसितौ । निमिषपदेन सृष्टिकालापेक्षया प्रलयकालस्य दैर्घ्यं व्यज्यते ॥ ३९ ॥

लीलाको ध्यानमें ला ।

पुरुष—( प्रणिधान करता हुआ ) मैं यही देखता हूँ कि—

सकल भूतगणकी दृष्टि बचानेके लिये ( सभी प्राणियोंकी दृष्टिसे तुमको अलग रखनेके लिये ) अविद्या तुमपर भुवनरूप सरसो छींट रही है, फिरभी थोड़ी देरके लिये तुमसे अलग होकर यह भूतगण पुनः तुममें ही पैठता जा रहा है ॥ ३९ ॥

अपि च।

परपुरमभिविश्य सर्वलोकं भ्रमयति सर्वदिनेषु भूतवर्गः।
भवपितृवनवाटबोधिवृक्ष प्रलयनिशासु निलीय सेवते त्वाम् ॥४०॥

पुरुषोत्तमः—अपि नाम पश्यसि संवर्तसमये मदीहितम्।

पुरुषः—कथं न पश्यामि।

---

परपुरमिति। हे भवपितृवनवाटबोधिवृक्ष, भवः संसार एव पितृवनं श्मशानं तस्य वाटः पन्थास्तत्र स्थितो बोधिवृक्षः पिप्पलतरुस्तत्सम्बोधने भवपितृवनवाट-बोधिवृक्ष, भूतवर्गः आकाशादिपञ्चभूतसमुदयः ( भूतगणश्च ) सर्गदिनेषु सृष्टिकाले परेषां जीवानां पुरं कायमभिविश्य प्रविश्य सर्वलोकं स्थावरजङ्गमात्मकं समस्तमेव विश्वम् भ्रमयति संसारयति। पुनश्च प्रलयनिशासु प्रलयकालस्वरूपासु रात्रिषु निलीय त्वां सेवते तिरोधाय त्वयि गूढस्तिष्ठति। भूता योनिविशेषतयोक्ताः परस्य पुरं प्रविश्य लोकान्भ्रमयन्तो दिवसं यापयन्ति निशि च श्मशानपिप्पलतरुमाश्रित्य तिष्ठन्ति, तथैवामी आकाशादयो भूतसङ्घाः परेषां जीवानां पुरं कायं प्रविश्य सृष्टौ भ्रमयन्ति, प्रलये च त्वयि निलीय तिष्ठन्तीति भूतवृत्तान्तवर्णनयोपक्षिप्तो महाभूत-वृत्तान्तो नितरां मनोहरः। परमात्मनः श्मशानपथस्थितपिप्पलतरुत्वप्रतिपादनेन तस्य नित्यत्वताटस्थ्यादिकं प्रतीङ्गितं कृतं बोध्यम्। 'वाटः पथि वृतौ वाटं वरण्डे गात्रभेदयोः' 'बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः' इत्युभयत्राप्यमरः। अत्र श्लोके पञ्चभूतस्य काये समवायितया प्रवेशः, भूतस्य पुरे संयोगेनेति विवेकः। स्पष्टमन्यत् ॥ ४० ॥

संवर्त्तसमये—प्रलयकाले। 'संवर्त्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि'। मदीहितम्—मम परमात्मनः ईहितम् चेष्टितम् ॥

---

सृष्टिके दिनों में भूतवर्ग ( पञ्चतत्त्व और भूतप्रेत ) दूसरे नगरोंमें जाकर ( दूसरोंकी देहमें प्रवेशकर ) समस्त संसारको भ्रमित करता रहता है, हे संसार-रूप श्मशानके पिप्पलवृक्ष, प्रलय-निशाके आनेपर वह भूतगण तुमपर ही आकर छिप जाता है ॥ ४० ॥

पुरुषोत्तम—प्रलयकालकी हमारी चेष्टाओंको देखते हो क्या?

पुरुष—क्यों नहीं, अवश्य देखता हूँ—

प्रकृतिचटुलसूक्ष्मभूतशेषे प्रकृतिविकारनिकोचभाजि काले ।
अविरतपरिवृत्तिखेदखिन्ने स्वपति जने प्रतिबुध्यसे त्वमेकः ॥४१॥

अपि च ।

विलयमुपजगाम चेदखण्डस्त्वयि जरठो जगदण्डगुल्मपिण्डः ।
क्षपयसि तदपि क्षपामनिद्रः कतिभिरसौ हि बुभूषति प्ररोहैः ॥४२॥

प्रकृतिचटुलेति । प्रकृत्या स्वभावेन चटुलानि चपलानि यानि सूक्ष्मभूतानि पृथिव्यादिपञ्चतन्मात्राः तानि शिष्यन्ते यस्मिँस्तादृशे, प्रकृतेर्मायाया विकाराणां बुद्ध्यादिमनोऽन्तानां निकोचम् अवसानं स्वकारणे लयं भजति तस्मिँस्तथोक्ते काले प्रलयसमये, अनवरतं निरन्तरं या परिवृत्तिः परिभ्रमणं प्रेत्यभावपरम्परा तया यः खेदः श्रमः तेन खिन्ने जने जीवजाते स्वपति निद्रामाश्रयति सति त्वमेव एकः प्रतिबुध्यसे जागर्षि । यस्मिन्प्रलयकाले स्वभावचपलाः सूक्ष्मभूतपदाभिलप्याः पञ्चतन्मात्रा एव शिष्येत, अन्ये च बुद्ध्यादिमनोऽन्ताः प्रकृतेर्विकाराः स्वकारणे लीना भवन्ति, जीवाश्च प्रेत्यभावपरम्परापरिभ्रमणखिन्नाः सन्तो निद्रान्ति, तस्मिन्नपि समये त्वमेक एव चेतनावाँस्तिष्ठसीत्यहो ते महाप्रभावत्वमिति भावपोषकगुणातिशयध्वनिः ॥ ४१ ॥

विलयमिति । जरठः कठिनः कर्कशश्च जगदण्डः ब्रह्माण्ड एव गुल्मपिण्डः । पिण्डाकारो गुल्मनामा व्याधिः अखण्डः अस्फुटितः समस्त एव त्वयि परमात्मनि ( स्वकारणे ) विलयं गतः शान्तिमुपगतः । तदपि तथापि अनिद्रः अनलसः सदा जागरूकः चेतनावान् क्षपाम् रात्रिम् प्रलयकालं क्षपयसि व्यतियापयसि । हि यतः असौ गुल्मपिण्डः कतिभिः कतिसंख्यैः प्ररोहैः अङ्कुरैः बुभूषति पुनः उत्पित्सति ।

जब स्वभावतः चपल सूक्ष्मभूत ( पृथिव्यादि पञ्चतन्मात्रा ) हो शेष रह जाता है, प्रकृतिके समस्त विकार अवसित हो जाते हैं, ऐसे समयमें सभी जीव अनवरत ( नानायोनियोंमें ) घूमते रहनेकी श्रान्तिसे खिन्न होकर सो जाते हैं, तथापि आप अकेले ही जागते रहते हैं ॥ ४१ ॥

यद्यपि यह सारा पुराना ब्रह्माण्डपिण्ड आपमें लीन हो गया है, तथापि आप अनिद्रित भावसे रात्रि ( प्रलय ) बिताते हैं तथा देखते हैं कि वह ब्रह्माण्ड पुनः प्रलयान्तमें कितने प्ररोहों के रूपमें प्रकट होता है ॥ ४२ ॥

पुरुषोत्तमः—वत्स, पश्य क्षयसमयदग्धजगदण्डगणावशिष्यमाणस्य रुद्रगणस्य व्यवसितम् ।

पुरुषः—नाथ, पश्यामि ।

ब्रह्मस्तम्बकदम्बडिम्बफलिने दग्धे जगत्कानने
येषां नैष ललाटकोटरगतो निर्वाति कालानलः ।
ते वक्रेन्दुवकाधिवासविकृतोत्तंसभ्रमत्पन्नगाः
शिष्यन्ते जलवेगजर्जरजटाजालाविलाः स्थाणवः ॥४३॥

---

शान्तोऽपि बाह्यतो गुल्मव्याधिः पुनर्नानाप्रकारेण जायतेऽतो गुल्मरोगी सदा सतर्को निदानपरिवर्जने तिष्ठेदिति चिकित्साशास्त्रीयं वस्त्वत्र परमात्मनि योज्यते । ब्रह्माण्डे ब्रह्मणि लीनेऽपि पुनरनेकरूपतामापत्स्यमाने गुल्मव्याधिसमत्वं स्पष्टम् । ब्रह्माण्डस्य परमात्मनिलये—"यत्प्रयन्त्यभिसंविशन्ति" इत्यादयः श्रुतयः प्रमाणम् ॥ ४२ ॥

क्षयेति । क्षयसमये प्रलयकाले दग्धेषु जगदण्डगणेषु समाप्तेषु ब्रह्माण्डसमूहेषु अवशिष्यमाणस्य रुद्रगणस्य व्यवसितम् चेष्टितम् पश्य—साक्षात्कुरु ।

ब्रह्मस्तम्बेति । ब्रह्मस्तम्बकदम्बाः ब्रह्मादिस्थावरान्तभूतभौतिकसृष्टिसमूहाः एव निम्बफलिनाः निम्बवृक्षाः ( कटुफलाः क्लेशप्रदतया ) यत्र तादृशे जगत्कानने भुवनवने दग्धे सति ( इदं जगत्पक्षे—काननपक्षे तु ब्रह्मस्तम्बः ब्रह्मवृक्षः पलाशः कदम्बः स्वनामख्यातः निम्बश्च ते फलिनाः फलपूर्णास्तरवो यत्र तादृशे ) येषां रुद्राणां वृक्षाणाञ्च ललाटभूताः ललाटरूपतां प्राप्ताः कोटराः वृक्षविवराः तत्र गतः कालानलः प्रलयाग्निः न समाप्तिं गच्छति, ते स्थाणवो रुद्राः नदीतटतरवश्च वक्रेन्दुर्बालशशी एव वकस्तस्य अधिवासेन अवस्थानेन विकृताः लब्धमनोविकाराः

---

पुरुषोत्तम—वत्स, प्रलयकालमें ब्रह्माण्डके दग्ध हो जाने पर बचेहुए रुद्रगणकी चेष्टायें देखो ।

पुरुष—नाथ, देखता हूँ ।

ब्रह्मादि स्थावरपर्यन्त निम्बसे भरा यह संसार-कानन दग्ध हो गया, फिर भी जिन ( स्थाणुओं ) के ललाट-कोटरकी दावाग्नि अभी पूर्णरूपसे शान्त नहीं

अये विश्वंभर, किमपि पृच्छामि।
खपुटपटलमभ्युदीर्यदाशावृतिरदलन्निरवाद्रविप्रदीपः।
विलयमवनिवास्त्वगात्तथापि क्व जगदगारगृहस्थ निशयवात्सीः ४४

अथ च उत्तंसाः शिरोमाल्यभूताः भ्रमन्तः पन्नगाः सर्पाः येषान्तादृशाः, जलवेगेन जटाजूटस्थितगङ्गाप्रवाहेण समीपस्थनदीप्रवाहेण च जर्जरैः जीर्णैः जटाजालैः परस्पर-संसक्तैः केशराशिभिः शिफासमूहैः च आविलाः मलिनाः सन्तः शिष्यन्ते। यत्र वने वह्निः प्रवर्त्तते तत्रापि पलाशकदम्बनिम्बादिफलवद्वृक्षेषु दग्धेष्वपि वकाधिष्ठिता भ्रमत्पन्नगभूषिताः नदीप्रवाहमलिनीकृतशिफासङ्घाताश्च केचन स्थाणवोऽनिर्वाण-कोटरगताग्नयोऽवशिष्यन्ते, ब्रह्मादिस्थावरान्तसृष्टिसमूहरूपम् कष्टप्रदतया कटुफलेन निम्बवृक्षेण समं जगत्प्रलये दग्धं तथापि कतिचन चन्द्रशेखरा उत्तंसीकृतसर्पाः जटाजूटस्थितगङ्गाप्रवाहमलिनीकृतजटाश्च रुद्रा अवशिष्यन्ते येषां ललाटलोचनान्य-धुनापि न शान्ताग्नीनि जातानि। 'एको रुद्रो न द्वितीयोऽवतस्थे' इति प्रमाणयति प्रलयेऽपि रुद्रावस्थानम्। 'ब्रह्मवृक्षः पलाशः' इति हैमः। 'मूले लग्नकचे जटा' इत्यमरः ॥ ४३ ॥

पृच्छामि—जिज्ञासे।

खपुटपटलमिति। हे जगदगारगृहस्थ संसारमन्दिरगृहपते, खपुटपटलम् आ-काशरूपं गृहशीर्षमावरणम् अभ्यदीर्यत् सर्वतो विदीर्णमभवत्, आशावृत्तिः दिशा-रूपा भित्तिः अदलत् विदीर्णाऽभवत्, रविप्रदीपः सूर्यरूपो दीपः निरवात् निर्वाणः, अवनिवास्तु पृथ्वीरूपं गृहान्तःस्थलम् विलयम् अगात् जले लीनं जातम्, (अस्यां स्थितौ) त्वं निशि प्रलयरात्रौ क्व कुत्र अवात्सीः वासं कृतवान्। गृहस्थो हि गृहच्छदौ दीर्णे भित्तौ पतितायां दीपे निर्वाणे गृहान्तःस्थले च जलमग्ने सति न तत्र वसति, अयं तु संसारमन्दिरगृहस्थः परमात्मा स्वभवनभूतस्य संसारस्यावरके

हुई है, वक्रचन्द्रस्वरूप बगुलोंके निवाससे जिनका शिरोभाग विकृत दीखता है, जलके वेगसे जिनकी जटायें (केश—तथा सिरा) अस्तव्यस्त हैं, ऐसे यह स्थाणु (रुद्र तथा ठूंठ वृक्ष) बच रहे हैं ॥ ४३ ॥

हे विश्वम्भर, मैं कुछ पूछना चाहता हूँ—

हे इस संसारस्वरूप घरके गृहस्थ, इस (संसारस्वरूप) घरकी आकाशमण्डल-

कथं च ।

**प्रकृतिचपलपीलुबीजवर्गं दलितखगोलकुसूलविप्रकीर्णम् ।**
**अघटितमितरेतरेण कल्पप्रशमदिने समचीकलस्त्वमेकः ॥४५॥**

---

व्योमनि नष्टे तत्स्वरूपायामाशायामपि भित्तिस्थानीयायां नष्टायां जातायां रवौ निर्वाणे संसारे जलमग्ने कुत्र स्थित इति प्रश्नो गृहस्थान्तरव्यतिरेकव्यञ्जकः । अत्र पृथिव्याः स्वकारणतत्त्वे जले, जलस्य स्वकारणतत्त्वेऽग्नौ, अग्नेः स्वकारणतत्त्वे पवने, तस्यापि स्वकारणतत्त्वे आकाशे लयो वेदान्तबोध्यो दिदर्शयिषितो बोध्यः ॥ ४४ ॥

प्रकृतिचपलेति । कल्पप्रशमदिने कल्पावसानदिवसे दलितात् विशकलितात् खगोलकुशूलात् आकाशकोष्ठात् विप्रकीर्णम् इतस्ततो विक्षिप्तम् इतरेतरेण अन्योन्येन अघटितम् अनाश्लिष्टम् प्रकृतिचपलानां स्वभावतश्चटुलानाम् पीलुबीजानाम् , बीजस्वरूपाणाम् परमाणूनाम् वर्गम् समुदायम् त्वम् परमात्मा एकः सहायकान्तररहितः सन्नेव कथं समचीकलः सङ्कलय्य एकत्र स्थापितवान् ? कल्पावसाने परस्परविभक्तेषु परमाणुषु ईश्वरेच्छया कर्मोत्पद्यते, ततः परमाणुद्वयसंयोगे द्व्यणुकम्, द्व्यणुकद्वयसंयोगे त्रसरेणुकम् , ततः तयोर्द्वयोर्द्वयोः संयोगेन वस्तुविशेषावयवा उत्पद्यन्ते इति न्यायाभिमता सृष्टिप्रक्रिया, तदाधारोऽयं प्रश्नः, प्रलये आकाशगोलरूपे कोष्ठे विदीर्णे सति तत्र स्थितः स्वभावचपलो बीजभूतपरमाणुगणो विकीर्णो जातस्तदा त्वया सहायकान्तरविरहेऽपि कथमिव ते संहृत्य पुनः सृष्टौ वस्त्वन्तररूपतां प्रापिता इत्यहो ते महामहिमत्वमिति भावः ॥ ४५ ॥

---

रूप छत फट चुकी है, दिशारूप दीवारें गिर गई हैं, सूर्यस्वरूप दीप बुत चुका है, पृथ्वीस्वरूप जमीन विलीन हो चुकी है। फिर आपने रातमें ( प्रलयमें ) निवास कहाँ किया ? ॥ ४४ ॥

कल्पान्त-दिवसमें खगोलस्वरूप कोठीके फूटजाने पर बिखरे हुए, एक दूसरेसे नितान्त असंबद्ध, प्रकृत्या चपल इन परमाणुस्वरूप बीजोंको विना किसी दूसरे की सहायताके ही किस प्रकार एकत्र किया ? ॥ ४५ ॥

पुरुषोत्तमः—वत्स, विश्वाधारस्य किमधिकरणम् । ऐश्वर्यसहायस्य किमुपकरणमन्विष्यसि । परिभावय तावत्सर्गलीलाम् ।

पुरुषः—भूतभावन, भावयन्पश्यामि ।

प्रलयदहनदग्धशेषपीलुप्रकरशिलोञ्छपवित्रवृत्तिरादौ ।
घटयसि भुवनानि तेषु जीवप्रकृतिचलैः परमाणुभिः शरीरम् ।।४६।।

विश्वाधारस्य—जगदाश्रयस्य, विश्वात्मकस्य वा । ऐश्वर्यसहायस्य–ईशितृत्वयुक्तस्य । उपकरणम्–सामग्रीसङ्कलनम् । परिभावय–विचारय पश्य वा ।

भूतभावन—संसारजनक ।

प्रलयदहनेति । आदौ सृष्ट्यारम्भसमये प्रलयदहनेन संवर्त्ताग्निना दग्धशेषा दग्धावशिष्टा ये पीलुप्रकराः परमाणुगणास्तैः शिलोञ्छरूपा पवित्रा वृत्तिर्जीविका यस्य तथाभूतः सन् भुवनानि जगन्ति त्रीणि चतुर्दश वा घटयसि रचयसि, तेषु भुवनेषु च जीवप्रकृतिचलैः जीवानामदृष्टस्य प्रेरणया सक्रियैः परमाणुभिः शरीरम् आत्मदेहं च घटयसि । प्राण्यदृष्टवशादेवेश्वरस्य शरीरपरिग्रहो नहि तस्यात्मनीनमदृष्टमस्ति–'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्' इति श्रुतेर्भगवतोऽदृष्टस्य प्रतिषेधात् । 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्' इति यादवः । 'ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् । मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् ॥ 'ऋतामृताभ्यां जीवेत्तु' इत्यादि मनूक्तदिशा शिलोञ्छस्य पवित्रवृत्तित्वम् उक्तम् । "क्षेत्रादौ स्वामित्यक्तसस्यमञ्जर्यादीनां ग्रहणं शिलम् । आपणादौ पतितान्नकणानामेकैकशो ग्रहणमुञ्छः" ॥ ४६ ॥

पुरुषोत्तम—वत्स, मैं विश्वका आधार हूँ, मेरे अधिकरणकी क्या बात करते हो ? मैं ऐश्वर्यसे युक्त हूँ तुम मेरे उपकरणका क्या अन्वेषण करते हो ? मेरी सर्गलीला देखो ।

पुरुष—हे भूतभावन ! भावनाके द्वारा देख रहा हूँ ।

आप प्रलयकी अग्निसे दग्ध शेष परमाणुओंके समुदायको एकत्र करनेमें मुनिजनसेवित पवित्र शिलोञ्छवृत्तिका अवलम्बनकरके त्रिभुवनकी सृष्टि करते हैं और उस त्रिभुवनमें प्राणियोंके अदृष्टसे प्रेरित परमाणुओं द्वारा शरीरका निर्माण किया करते हैं ॥ ४६ ॥

पुरुषोत्तमः—ननु किमनेन सर्गादिशरीरेण प्रयोजनमुपपद्यते ।

पुरुषः—

जनशरण शरीरिणां प्रवृत्तैः करणगणैरुपलब्धचेतनानाम् ।
कतिचनजनुरन्तरानुभूतिप्रसृमरवासनया स्मृतीः प्रसूषे ॥४७॥
अथ शयितविबुद्धवत्पुराणः स्मरति मुनिर्निगमं हिरण्यगर्भः ।

सर्गादिशरीरेण—सृष्ट्यादौ प्राण्यदृष्टवशादुत्पद्यमानेनेश्वरस्य देहेन ।

जनशरणेति । हे जनशरण लोकरक्षक, प्रवृत्तैः क्रियाशीलैः करणगणैः इन्द्रियसमूहैः उपलब्धचेतनानाम् अनुमितचैतन्यानाम् शरीरिणां हिरण्यगर्भादीनाम् कतिचन अज्ञातसंख्यानि यानि जनुरन्तराणि जन्मान्तराणि तेषु या अनुभूतयः अनुभवलक्षणा वेदार्थविषया बुद्धयः ताभ्यो बुद्धिभ्यः प्रसृमरया जायमानया वासनया भावनाख्यसंस्कारेण स्मृतीः आम्नायस्मरणानि प्रसूषे जनयसि । तथा च शरीरं ते स्मरणाय, स्मरणञ्च हिरण्यगर्भादिभ्यो वेदमुच्चारयितुमिति 'किमनेन सर्गादिशरीरेण प्रयोजनमुपपद्यते' इति प्रश्नः समाहितः । 'प्रवृत्तैः करणगणैरुपलब्धचेतनानाम्' इत्यनेन शरीरिणामिन्द्रियप्रवृत्त्यैवात्मानुमीयते । यथोक्तम्—'आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम्' । इत्यर्थं आवेदितः। प्रतिसर्गं हिरण्यगर्भादयः प्रनष्टमागमं स्मरन्ति, तत्रोद्बोधको भवति परमात्मैव—"यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति तस्मै" इति श्रुतेः । श्रुतयोऽनादयः, सृष्ट्यादौ परमेश्वरस्ताः स्मृत्वा हिरण्यगर्भादिभ्य उपदिशति इति एकः पक्षः, स एवात्र श्लोके निर्दिष्टः । हिरण्यगर्भः सुप्तोत्थितवत् पूर्वकल्पाधीतं निगमं सृष्ट्यादौ स्मरति, तत्रापि परमात्मेच्छैवोद्बोधिकेति द्वितीयः पक्षः, सोऽप्यग्रेतनेन श्लोकेन वक्ष्यते ॥ ४७ ॥

अथ शयितेति । अथ पुराणो मुनिर्हिरण्यगर्भः ब्रह्मा शयितविबुद्धवत्

पुरुषोत्तम—इस सर्गादिकालिक शरीरसे क्या प्रयोजन है ?

पुरुष—हे विश्वके रक्षक, शरीरियोंके इन्द्रियगण प्रवृत्युन्मुख होकर उनमें चेतनाका आविर्भाव करते हैं, तब आप असंख्य जन्मान्तरके अनुभवोंपर आधारित वासनासे स्मृतियाँ उत्पन्न करते हैं ॥ ४७ ॥

अथवा—पुराना मुनि हिरण्यगर्भ होकर जो सोकर उठे मनुष्यकी तरह वेदोंका

गगनपवनसंनिपातकर्ता कथयसि वा करुणानपेक्ष एव ॥४८॥

पुरुषोत्तमः—आः, किमनेन मदीयाम्नायेनाप्रतिपन्नसमयस्य सर्गादिजनस्योपकृतं भवति।

---

सुप्तोत्थित इव निगमं पूर्वकल्पाधीतं वेदं स्मरति ( तत्रापि त्वदिच्छैवोद्बोधिका, तथा च भागवतम्—

"प्रचोदिता येन पुरा सरस्वती वितन्वताऽजस्य सतीं स्मृतिं हृदि।
स्वलक्षणा प्रादुरभूत् किलास्यतः स मे स्वयंभूर्भगवान् प्रसीदताम् ॥"

तदनेन श्लोकार्धेन द्वितीयः कल्प उपपादितः।

अथ वर्णोच्चारणे कण्ठादीनां कण्ठत्वादिरूपेणैव नापेक्षणीयत्वं किन्तु विलक्षण-पवनव्योमसंयोगाय कण्ठादीनामपेक्षणीयत्वं स्वीक्रियते, स पुनरशरीरस्यापि तव प्रयत्नेन संभवतीति किमाम्नायप्रवर्त्तने शरीरेणोपकर्त्तव्यं तमेतं पक्षमनुसृत्याह—वा अथवा गगनपवनसन्निपातकर्त्ता वर्णोच्चारणाय अपेक्षितस्य विलक्षणगगनपवन-संयोगस्य घटकः करणानपेक्षः निरिन्द्रियः एव ( हिरण्यगर्भादिभ्यः आगमम् ) कथयसि। नित्यज्ञानेच्छाप्रयत्नानां शरीरग्रहणानपेक्षया भगवतो निरिन्द्रियस्यापि वेदोपदेष्टृत्वमुपपन्नमेवेति भावः ॥ ४८ ॥

मदीयेनाम्नायेन—मयोपदिश्यमानेन वेदेन। अप्रतिपन्नसमयस्य—अज्ञात-सङ्केतस्य। कामं मयोपदिश्यतां वेदः परमसौ अगृहीतसंकेतस्य सर्गादिजनस्य न किमप्युपकरिष्यति, सङ्केतसहायस्यैव शब्दस्य प्रवृत्तिनिवृत्तिसाधकतया स्वीकृतत्वात् सङ्केतग्रहस्य च पुरुषत्रयावस्थत्युपपाद्यस्य तदानीमशक्यक्रियत्वादिति शङ्कामुप-स्थापयति—किमनेनेत्यादिः-कृतं भवतीत्यन्तश्च ग्रन्थः। तदुत्तरं वक्ष्यति—ननु कृतकेत्यादिना परवर्त्तिना श्लोकेन।

---

स्मरण करता है, आप विलक्षण आकाश तथा वायुके संयोगको पैदा करनेकी क्षमतासे युक्त हैं अतः विना इन्द्रियोंके ही आप हिरण्यगर्भको वेदका उपदेश करदेते हैं ॥ ४८ ॥

पुरुषोत्तम—मेरे द्वारा किये गये वेदोपदेशसे सङ्केतग्रह करने वाले सृष्ट्या-दिकालिक जनका क्या उपकार होता है ?

पुरुषः—

नन्तु कृतककलेवरद्वयेन व्यवहरता च निदेशदायिना च ।
अवगमितपदप्रवृत्तिमादौ कवयसि लोकहिताय संप्रदायम् ॥४९॥

पुरुषोत्तमः—किमिव लोकहितं मम वचो जनयति ।

पुरुषः—

प्रभवति परमाप्त यो दुरन्तादपसरणाय हिते प्रवर्तनाय ।

---

नन्विति । आदौ सृष्टिप्रारम्भसमये व्यवहरता मध्यमवृद्धरूपेण उत्तमवृद्धोक्तानुसारमनुतिष्ठता, निदेशदायिना उत्तमवृद्धरूपेणाज्ञाप्रदायिना च कृतकेन मायाकल्पितेन कलेवरद्वयेन उत्तमवृद्धमध्यमवृद्धरूपदेहद्वितयेन अवगमिता (बालकबुद्धाववतारिता) अनुभवगोचरतामापादिता पदानां सुप्तिङन्तलक्षणानाम् प्रवृत्तिः अर्थैः सह शक्तिग्रहः येन तादृशः त्वम् लोकहिताय लोकानामामुष्मिकमैहिकं च श्रेय उपपादयितुम् वेदं कवयसि हिरण्यगर्भद्वारा वर्णयसि । सर्वेषामेव श्रुतिवाक्यानां ब्रह्मणि समन्वयेन तद्विज्ञानद्वारा मोक्षसाधनविषयां लोकोपकारकत्वं पारमार्थिकम्, ऐहिकञ्चोपकारकत्वं स्वतः प्रसिद्धम् । अत्रोक्तं मायिककलेवरद्वयग्रहणं तत्प्रवर्त्तितव्यवहारद्वारा वेदशब्दानां सङ्केतग्रहबोधनं च परमेश्वरेण लोकानुजिघृक्षया क्रियत इति 'मायावत्संप्रदायः' इति कुसुमाञ्जलावुपपादितम् । संकेतग्रहो व्यवहारायत्तः, अतएव व्यवहारः सङ्केतग्राहकशिरोमणिरुच्यते । उत्तमवृद्धमध्यमवृद्धव्यवहारद्वारा यथा संकेतग्रहो जायते तथा साहित्यदर्पणादौ स्पष्टम् ॥ ४९ ॥

प्रभवतीति । परम उत्कृष्टश्चासावाप्तो विश्वास्यवचनश्चेति परमाप्तः तत्संबोधने हे परमाप्त अत्यन्तविश्वसनीयवचन, परमात्मन्, यो (निगमः) दुरन्तात् परिणामे कष्टप्रदात् संसारात् अपसरणाय ब्रह्मज्ञानसंपादनद्वारा निस्ताराय मोक्षायेत्यर्थः, प्रभवति समर्थो भवति, हिते अभीष्टसुखदातरि स्वर्गादौ प्रवर्त्तनाय पुरुषस्य प्रवृत्तिं जनयितुञ्च चतुर्भिः स्तुतिनिन्दापरकृतिपुराकल्पभेदेन चातुर्विध्यं

---

पुरुष—एक व्यवहारकर्त्ता तथा एक आदेशदाता इस प्रकार दो कृत्रिमशरीरोंका निर्माणकरके सृष्टिके आदिमें आप शब्दोंके सङ्केतका ज्ञान करा देते हैं, जिसके द्वारा सम्प्रदायसे लोकहित सिद्ध होता है ॥ ४९ ॥

पुरुषोत्तम—मेरे वचनोंसे क्या लोकहित होता है ?

पुरुष—हे परम विश्वसनीय, वेदके निर्माता, आपका सूक्तसार (वेद)

सहचरति चतुर्भिरर्थवादैर्निगमकवे स तवैव सूक्तसारः ॥५०॥

पुरुषोत्तमः—ननु स्वतःप्रमाणमसौ चोदनाविधिनिषेधौ बोधयन्ती प्रवर्तयति निवर्तयति च मदीयमिदं वचनमिति कुतो निरचायि ।

पुरुषः—अये निवृत्तिधर्मोपदेशगुरो,

भवतु विधिरपूर्वकार्यतत्त्वाशयहितसाधनताभिदासु कश्चित् ।
तदपि मुषितदोषमन्तरा त्वां न भवितुमर्हति चोदना प्रमाणम् ॥५१॥

---

दधद्भिः अर्थवादैः सहचरति व्यवहरति, हे निगमकवे वेदनिर्माणपटो, स वेदः तवैव सूक्तसारः वचनसारभूतः । अस्तीति शेषः । 'आप्तस्तु यथार्थवक्ता रागादिवशादपि नान्यथावादी यः सः' इति चरके पतञ्जलिः ॥ ५० ॥

स्वतः प्रमाणम्—परप्रामाण्यानधीनप्रामाण्यभाक् । चोदना—लिङर्थः । विधिनिषेधौ—कर्त्तव्याकर्त्तव्ये । निरचायि — निश्चितम् ।

भवतु विधीति । विधिर्लिङर्थश्चोदना अपूर्वकार्यतत्त्वाशयहितसाधनताभिधासु कश्चित् कोपि भवतु—लिङर्थविषये आचार्यभेदेन महान्मतभेदोऽस्ति, अपूर्वं सङ्कल्पो विधिरित्येकदेशिनः, कार्यं विधिरिति प्राभाकराः, कार्यतत्त्वं कार्यता तत्र लिङो निरूढलक्षणेत्यपि केचन प्रभाकरानुवर्त्तिनः, आशय आप्ताभिप्रायो लिङर्थ इत्युदयनाचार्याः, इष्टसाधनता लिङर्थ इति मिश्राः, अभिधा लिङर्थं इति कुमारिलः, एषु यः कोपि लिङर्थोऽस्तु, तदपि तथापि मुषितदोषं भ्रमप्रमादविप्रलिप्सादिजीवदोषरहितं त्वामन्तरा विना चोदना लिङर्थः प्रमाणं न भवितुमर्हति । सम्प्र-

---

इस दुरन्त संसारसे हटाकर प्राणियोंको स्वर्गादिहितसाधन यागादिकर्मकलापमें प्रवृत्त कराता है, चार तरहके अर्थवादोंके साथ विचरण करता है ॥ ५० ॥

पुरुषोत्तम—श्रुति ( वेद ) स्वतःप्रमाण है, स्वयं विधि-निषेधका बोधन करती है, प्रवृत्ति तथा निवृत्तिके लिये प्रेरित करती है, वह मेरी वाणी है यह आपको कैसे ज्ञात हुआ ?

पुरुष – हे निवृत्तिधर्मके उपदेशक आचार्य,

विधि—अपूर्व, कार्य, तत्त्व, आशय, या हितसाधनता विधि इनमें कुछ भी हो, परन्तु भ्रम-प्रमादादि दोषसे रहित आपके बिना श्रुतिकी प्रामाणिकता नहीं हो सकती है ॥ ५१ ॥

पुरुषोत्तमः—प्रवर्तनामप्युपदिशतो मम निवृत्त्युपदेशमेव कुतः श्लाघसे।

पुरुषः—नन्वधुना विज्ञातं नास्ति तव वचसि प्रवृत्तिपरतेति।

हितविधिकपटान्निसर्गमूढप्रकृतिरसाविह तान्निवर्तनीयः।
इति विषमतमेऽपि संविधाने गणयतु कस्तव नाथ कौशलानि ॥५२॥

---

दायप्रामाण्यार्थं मूलभूतं तत्प्रत्यक्षप्रामाण्यमवश्यमपेक्षणीयं भवतीति भावः ॥ ५१ ॥

प्रवर्त्तनाम्—वैदिकयागादिप्रवर्त्तकं वेदभागम्। निवृत्त्युपदेशम्—मोक्षोपयोगिनं वेदभागम्। श्लाघसे—प्रशंससि।

तव वचसि प्रवृत्तिपरता नास्ति—उपनिषद्भागास्तावदर्थवादान्तरवन्न विधिशेषतां गताः, तेषां परमपुरुषार्थसाधनीभूतार्थज्ञानफलकत्वेन स्वाध्यायविषयतासंभवेन विध्यन्तरनिराकाङ्क्षत्वात्। किन्तूपनिषदामेव सर्वे विधय इतिकर्त्तव्यतारूपकत्वेनोपयुज्यन्ते। यागादीनां च ब्रह्मज्ञाने आशयशुद्धिद्वारैवोपयोगः। आशयशुद्धिश्च वैधेतरहिंसानिवृत्त्यादेरेव संभवति इति 'यजेत' इत्यादिवाक्यानां न यागविधौ तात्पर्यम्, किन्तु हिंसाविशेषपरिसंख्यायामेव तात्पर्यम्‌ 'यजेत' इति विधानं तु गुडजिह्विकान्यायेन प्ररोचनामात्रम्, एतेन सर्वेषामेव वेदवचसां साक्षात्परम्परया वा मोक्षोपयोगितया प्रवृत्तिपरत्वं नैवास्तीति भावः।

हितविधिकपटादिति। हे नाथ, विषमतमे यत्र हितमहितरूपेण अहितञ्च हितरूपेण भासते तादृशे अपि संविधाने लोकचेष्टिते निसर्गमूढप्रकृतिः स्वभावतो मूढचेष्टः असौ लोकः हितविधिकपटात् 'एतत् कामयमानः, अनेन यजेत'-इत्यादिहितविधानव्याजात् अहितात् दुरुदर्कात् 'मा हिंस्यात्सर्वा भूतानि' इत्यादिश्रौतनिषेधविषयात् हिंसादेर्निवर्त्तनीयः निवारणीयः इति तव कौशलानि को गण-

---

पुरुषोत्तम—मैं जब प्रवृत्तिका भी उपदेश करता हूँ, तथापि तुम मेरे निवृत्त्युपदेश की ही प्रशंसा क्यों करते हो?

पुरुष—मैं अभी जान सका हूँ कि तुम्हारे वचनोंमें कहीं भी प्रवृत्तिपरता नहीं है।

स्वभावतः मूढचेष्टावाले लोकसमुदायको हितकथनके व्याजसे आप अहितसे निवारित करते हैं, आपका विधान भी निवृत्तिपरक है, इस प्रकार इस विषम संविधानमें आपकी चतुराईको को कौन गिना सकता है? ॥ ५२ ॥

संसार इव श्रुतिरपि त्वत्परैव । तथा हि

विकिरति परितो घनावलीव श्रुतिरमृतानि तवाशयादुदस्य ।
विलयमयमुपैति चित्समुद्र त्वयि जगतो निगमस्य च प्रवाहः ॥५३॥

पुरुषोत्तमः—ननु यज्ञेषु श्रुतिर्विश्राम्यति ।

---

यत्तु संख्यया परिच्छिनत्तु, त्वं सामान्यतो हिंसाप्रवृत्तं लोकं वैदिकहिंसामात्रस्य कर्त्तव्यतां बोधयन्तीभिः श्रुतिभिः प्रतार्य हितपथे नयसीति तव चातुर्यं गणयितुं न कोऽपि क्षमत इत्यर्थः ॥ ५२ ॥

संसार इव श्रुतिरपि त्वत्परैव—त्वय्येव विश्राम्यति यथा सकलः संसारश्चरमे त्वयि लीयते तथैव वेदोऽपि त्वामेव शरणीकरोति सर्वेषामेव वेदवाक्यानां साक्षात्परम्परया वा त्वय्येव समन्वयस्य समन्वयाधिकरणे साधितत्वादिति भावः ।

विकिरतीति । हे चित्समुद्र चैतन्यवारांनिधे, श्रुतिः अमृतानि अमृतफलानि स्वर्गादीनि तव आशयात् अभिप्रायात् उद्धृत्य परितः सर्वतः प्राणिसङ्घे घनावली मेघमाला समुद्रस्याशयात् अन्तःप्रदेशादुद्धृत्य अमृतानि जलानि इव विकिरति वर्षति, अयञ्जगतो भुवनस्य निगमस्य च प्रवाहः त्वयि समुद्रे परमात्मनि च विलयम् उपैति स्वरूपं जहाति । यथा घनावली समुद्राशयादमृतमुद्धृत्य सर्वतो वर्षति तया स्वकृतवर्षणद्वारा जनितश्च प्रवाहश्चरमे समुद्रे लीयते तथैव परमात्मन आशयाच्छ्रुतिस्मृतिफलानि स्वर्गादीनि समस्ते जगति विकिरति चरमे चेदं जगत् स्वकारणे परमात्मनि लीयते इत्युपमा । वेदान्तेषु त्वमेव गीयसे परिणामे च त्वमेवावशिष्यसे इति परमार्थः ॥ ५३ ॥

यज्ञेषु श्रुतिर्विश्राम्यति—वेदानां यज्ञे तात्पर्यम् ( तथा च श्रुतिरपि त्वत्परैवेति-

---

जैसे संसार आपमें विश्रान्त होता है, उसीतरह श्रुति भी आपमें ही विश्रान्त होती है ।

जैसे समुद्रसे जल लेकर मेघ जलकी वर्षा किया करता है उसीतरह आपसे लेकर श्रुतियाँ अमृतकी वर्षा किया करती हैं । इस संसारका तथा श्रुतिका प्रवाह- हे ज्ञानके सागर,—आपमें ही लीन होता है ॥ ५३ ॥

पुरुषोत्तम—तो क्या वेदोंका तात्पर्य यज्ञोंमें है ।

पुरुषः—हन्त, यज्ञा अपि त्वत्परा एव।

अजिन (मु)शलवेदिशूर्पशम्याः दृषदुपलस्य हविःकपालयूपैः।
अथ गुरुयजमानहोतृगातृप्रभृतिभिरध्वरकर्मसु त्वमिज्यः ॥५४॥

पुरुषोत्तमः—ननु पालनलीलासु मम प्रवेशय मनः।

पुरुषः—इदमिदमवलोक्यते तवावनविलसितम्।

---

त्वयाऽनन्तरमुच्यमानं न सङ्गच्छते इति शङ्कामुत्थाप्य समाधातुमाह—हन्तेति।) यज्ञा अपीति। काममस्तु यज्ञेषु तात्पर्यं श्रुतेरवसाने तु यज्ञानामपि त्वय्येव तात्पर्यस्य मान्यतया फलति श्रुतीनामपि त्वय्येव तात्पर्यमिति भावः ॥

अजिनेति। गुरुः आचार्यः, यजमानो यष्टा, होता ऋत्विक्, गाता सामवित्, प्रभृतिपदग्राह्यः अध्वर्युः यजुर्वित्, एभिः समस्तैर्यज्ञगतैः कर्तृभिः अजिनम् मृगचर्म, मुशलम् प्रसिद्धार्थम्, वेदिः परिष्कृता चतुर्हस्ता वितस्तिमिता उच्छ्रिता यज्ञभूमिः, शूर्पम् स्वयंप्रसिद्धम्, शम्या रथावयवकीलकयुगलम्, दृषदुपलः शिलापुत्रकः पेषणसाधनं शिलाखण्डयुगलम्, स्फ्यः खादिरः खड्गाकारोऽग्नि-स्थापनप्रदेशे रेखोल्लेखनसाधनतयाऽपेक्षितः, हविः हवनीयं घृतचरुसान्नाय्यपुरोडाशादिकम्, कपालम् कर्परापरपर्यायम् पुरोडाशपाकसाधनं मृन्मयं पात्रम्, यूपः नराकृति काष्ठम्, एभिः करणभूतैः पदार्थैः अध्वरकर्मसु त्वमेव यज्ञपुरुषः इज्यः यष्टव्यो भवसि, सर्वेषामेव कर्मणां त्वदर्पणबुद्ध्यैव कर्त्तव्यतायाः—"यत्करोषि यदश्नासि यज्जुहोषि ददासि च। यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्" इत्यादिस्मृतिभिः समर्थितत्वादिति भावः। मृगचर्मणो यज्ञे अभिषुतस्य धर्माख्यरसशिष्टभागस्य विशोषणे ऋत्विजामुपवेशनाद्यर्थं चोपयोगः क्रियते ॥ ५४ ॥

पालनलीला—परमात्मनो जगद्रक्षारूपा क्रीडा।

अवनविलसितम्—पालनरूपं तव क्रीडितम्।

---

पुरुष—हाय, यज्ञोंकाभी तात्पर्यतो आपमें ही है।

आचार्य, यजमान, होता, तथा गाता प्रभृति यज्ञगत पुरुष यज्ञोमें मृगचर्म मुशल, वेदी, शूर्प, रथके कील, खदिरका बना स्फ्य, हव्यद्रव्य, कपाल एवं यूपके द्वारा आपकी ही आराधना करते हैं ॥ ५४ ॥

पुरुषोत्तम—तुम मेरी पालनलीलाओंमें ध्यान दो।

पुरुष—यही तो देख रहा हूँ आपके पालन विलासको।

प्रथमसमयसंगमाय नैतज्जगदुपजीवति केवलं भवन्तम् ।
भवतु सततसन्तमन्तरा त्वां कथमनिदंप्रथमापि वस्तुसत्ता ॥ ५५ ॥

पुरुषधौरेय, स्वस्ति तव धारणशक्तये ।

न धरणिरुपरि प्रयाति नाथः
पतति न च प्लवते न बम्भ्रमीति ।
न च दिवि वसति स्वशक्तियोगा-

---

प्रथमसमयेति । एतत् जगत् केवलम् प्रथमसमयसङ्गमाय आद्यक्षण-सम्बन्धाय एव भवन्तम् न उपजीवति कारणत्वेन अपेक्षते ( जगतः केवलमुत्पत्तावेव न भवान्कारणतां गतोऽपि तु सत्तायामपि) [ यतः ] सततसन्तम् सर्वदा वर्त्तमानम्, आदौ मध्येऽन्ते च तिष्ठन्तं त्वां परमात्मानं विना अनिदंप्रथमा द्वितीया द्वितीयक्षणसंबद्धाऽपि वस्तुसत्ता स्थितिः कथं भवतु केन प्रकारेणोपपद्यताम् ? न केवलं भवान् जगतः प्रथमक्षणावच्छिन्नां सत्ताम् ( उत्पत्तिम् ) एवोपपादयति अपि तु तस्य द्वितीयादिक्षणावच्छिन्नायामपि सत्तायां भवानेवाधिष्ठानतां भजते, परमात्मसत्त्वौपाधिकस्यैव सर्वेषां सत्त्वस्योपनिषदभिधेयत्वादिति भावः ॥ ५५ ॥

पुरुषधौरेय—पुरुषोत्तम, तव धारणाशक्तये स्वस्ति-धन्या तव धारणा शक्तिः ।

न धरणिरुपरीति । धरणिः पृथ्वी उपरि ऊर्ध्वं न प्रयाति, अधः अपि न पतति, न च प्लवते जले तुम्बिका इव न तरति, न बंभ्रमीति न भृशं भ्रमति, न च स्वशक्तियोगात् स्वसामर्थ्यवशात् दिवि आकाशे वसति, अपि च किन्तु भवान् परमात्मा एव अचलायाः पृथिव्याः स्थिरत्वे हेतुः कारणम् । इयं पृथिवी यन्निरालम्बे व्योम्नि तिष्ठति तत्र भवानेव कारणम्, अन्यथाऽऽधारमन्तरेण द्रव्यस्थितेरसंभवात् इयं पृथिवी अचला न स्यादित्यर्थः ।

---

केवल उत्पत्तिमात्रके लिये ही यह विश्व आपपर आश्रित नहीं है, यदि सततसत्य आप वर्त्तमान न रहें तो उत्पन्न होकर भी यह विश्व टिका नहीं रह सकता है ॥ ५५ ॥

हे पुरुषश्रेष्ठ, धन्य है आपकी धारणक्षमता ।

न पृथ्वी ऊपर चली जाती है, न नीचे गिर पाती है, न तैरने लगती है और

दपि च भवानचलास्थिरत्वहेतुः ॥ ५६ ॥

'ग्रहनक्षत्रादिभिरूर्ध्वमाकृष्यमाणा भूमिः सततमूर्ध्वं गच्छति अतएव वृक्षात्पृथक् सञ्जातं पत्रं तत्पार्श्वदेशमागतया भुवा मिलति' इति बौद्धानां मतम्, तदुत्तरमाह—न धरणिरुपरि प्रयातीति। यदीयं धरणिरुपरि गच्छेत्तदा ग्रहादिभिः सहास्याः सन्निकर्षं आपतेन्न च तथा जातमधुनावधीत्ययुक्तं धरण्या उपरि प्रयाणकथनमित्याशयः।

इयं पृथिवी गुरुत्वादनारतमधो गच्छति इति तदेकदेशिनः, तान्प्रति वदति—नाधः पततीति। इयं पृथिवी अधो न पतति, तथा सति वियति विक्षिप्ताः शराः कदापि भूपृष्ठं न प्राप्नुयुरिति, प्राप्नुवन्ति च भूपृष्ठं वियति क्षिप्यमाणा अपि शरा अतो न युक्तमस्या अधः पतनस्य कथनमिति।

यच्च यवनाः कथयन्ति—रिक्तगर्भो भूगोलः महति सागरे जलतुम्बिकावत्तरतीति तान्प्रति ब्रूते—न च प्लवत इति। यदीयं पृथ्वी सलिले तरतीति कथ्यते तदा मृत्तिकारूपाया अस्याः पयसि विलयनं प्राप्नुयादतो न पृथिव्याः प्लवनमङ्गीकर्त्तव्यमिति, तथा चाह लल्लः—"सलिले विलयो मृदो भवेदिति गोरप्सु न युज्यते स्थितिः।" गोः पृथिव्याः ॥

यदपि च दिगम्बरा आहुः—'भूचक्रस्यैवाभिमुखं भ्रमणं न तु ग्रहगोलादेः प्रत्यगभिमुखं भ्रमणम्' इति तान्प्रत्युत्तरयति—न बंभ्रमीति इति। भुवः पूर्वाभिमुखे भ्रमणे स्वीक्रियमाणे स्वकुलायात्पश्चिमायां चरितुं गतैः पक्षिभिः सायं कुलायाभिमुखं चलद्भिरपि न लभ्येत निजः कुलायः, तदेवोक्तं लल्लाचार्येण—"पूर्वाभिमुखे भ्रमे भुवः स्वकुलायं कथमाप्नुयुः खगाः।" इति।

यच्च ज्यौतिषसिद्धान्तविद आहुः—"स्वशक्त्या वियति स्थिररूपेणावतिष्ठते भूगोलः" इति तत्रापि केयं स्वशक्तिः, यदि पृथिव्या ईश्वरानपेक्षया कापि निजा शक्तिः सेत्युच्यते तदाऽनाधारस्य द्रव्यस्य स्थितिर्नोपपद्यते इत्युक्तमेवोत्तरम्। अथ स्वशक्तिपदेन परमात्माधिष्ठानकत्वमास्थाप्यते तदा ओमिति ब्रूमः, तदाह—भवानिति ॥ ५६ ॥

न घूमने ही लगती है। यह आकाशमें भी अपनी शक्तिसे नहीं टिकी हुई है, इस अचलाकी स्थिरतामें निदान आप हैं ॥ ५६ ॥

अपि च।

प्रवहपवनवेगघट्टितोऽपि स्खलति न यज्जगदण्डपिण्डभारः।
लघुगुरुतुलनातुलाप्रकाण्डद्रढिमगुणः स भवद्गुणत्रयस्य ॥५७॥

इयमपि तव जगदवनलीलैव। यत्किल

भ्रमयति नवधा खमण्डलानि द्रढयति सप्तपुटानि भूतधात्र्याः।
उपदिशति च षड्गतीर्ग्रहाणां ध्रुवमसि तद्ध्रुवयोरपि ध्रुवत्वम् ॥५८॥

प्रवहेति। हे लघुगुरुतुलनातुलाप्रकाण्ड लघुगुरुतुलापरीक्षायां तुलादण्डस्वरूप, प्रवहपवनस्य प्रवहनामकस्यान्तरीक्षचरस्य वायोः वेगेन घट्टितः आहतः अपि जगदण्डपिण्डस्य ब्रह्माण्डगोलस्य भारः यत् न स्खलति स स्खलनविरहस्तव गुणत्रयस्य ज्ञानेच्छाप्रयत्नरूपस्य द्रढिम्नः दृढतायाः गुणः प्रभावः। अन्यत्रापि तुलाप्रकाण्डे सूत्रत्रयावलम्बितयोः फलकयोरारोप्यमाणो भारो न स्खलति तुलया च गुरुलघुनी परीक्षिते भवत इति वस्तुवृत्तं ध्वनितम्। भवदीयेन गुणत्रयेण बद्धत्वादेवास्याः प्रवहपवनवेगघट्टिताया अपि पृथिव्याः स्खलनं न जायते इत्याशयः॥ ५७॥

भ्रमयसीति। हे परमात्मन् त्वम् खमण्डलानि आकाशगोलम् नवधा नवकृत्वा भ्रमयसि सञ्चारयसि, ("भूमेः पिण्डः शशाङ्कज्ञकविरविकुजेज्यार्किनक्षत्रकक्षावृत्तैर्वृतैर्वृतः सन्मृदनिलसलिलव्योमतेजोमयोऽयम्" इति सप्तकक्षावृत्तानि एतदुपरिष्टादेकं भूमेरधश्चैकम् इति नवत्वानि ज्यौतिषाभिमतानीति खमण्डलस्य नवप्रकारकत्वमत्रोक्तम्) भूतधात्र्याः पृथिव्याः सप्तपुटानि अतलसुतलवितलादीन् सपातालान् द्रढयसि भङ्गान्निवारयितुं दृढतां प्रापयसि। ग्रहाणां सूर्यादीनां नवानां षट् षट्संख्याकाः गतीः गमनप्रकारान् उपदिशसि आविष्करोषि, तत् तस्मात् ध्रुवम्

लघु गुरुकी तुलनाके लिये तराजूके सदृश परमात्मन्, प्रवहपवनके वेगसे आहत होकर भी यह ब्रह्माण्ड अपनी जगहसे खिसकता नहीं है, यह आपके गुणत्रयकी द्रढिमाका प्रभाव है ॥ ५७ ॥

यह भी आपकी जगत्-पालन-लीला ही है—

जो आप खमण्डलको नौ प्रकारसे घुमाते हैं, पृथ्वीके सात पुटोंको दृढता प्रदान करते हैं, ग्रहोंकी छः प्रकारकी गतिओंका उपदेश देते हैं, और ध्रुवोंके ध्रुवत्वका कारण भी असन्दिग्ध रूपमें आप ही हैं ॥ ५८ ॥

इदमपि जनावस्थानसुखाय तवावनिघटनम् ।
अविषमचतुरस्रषड्विभागां न सृजसि कन्दुकनिस्तलां न सूषे ।
घटयसि पृथिवीमिमां भचक्रभ्रमणकुलालविशालदर्पणाभाम् ॥५९॥

---

निश्चयेन त्वं ध्रुवयोः सर्वग्रहाणां दक्षिणोत्तरभागस्थितयोः स्वनामख्यातयोः काल-मर्यादाकारणतां गतयोरपि ध्रुवः मर्यादाहेतुः असि । ग्रहाणां षड्गतयो यथा—प्रवहवायुघट्टनेन सर्वे प्रत्यग्देशं गच्छन्तीत्येका गतिः, स्वभावतः स्ववृत्तात्प्राग्देशं गच्छन्तीति द्वितीया गतिः । गोलक्रमेणोत्तरदक्षिणोर्ध्वाधोगतयश्च चतस्र इत मिलिताः सत्यः षट् । "भूतधात्री रत्नगर्भा जगती सागराम्बरा" इत्यमरः ॥ ५८ ॥

जनावस्थानसुखाय—लोकाः सुखमवतिष्ठन्तामित्युद्दिश्य । अवनिघटनम्—दर्पणाभधरणीनिर्माणम् ।

अविषमेति । हे भचक्रभ्रमणकुलाल – (कुलालः कुम्भकारश्चक्रभ्रमणे प्रथितोऽयं परमात्माऽपि नक्षत्रचक्रभ्रमकारकतयाऽत्र कुलालत्वेनाध्यवसितः ) तत्संबोधने नक्षत्रचक्रभ्रमकुम्भकार, इमां पृथिवीम् अविषमचतुरस्रषड्विभागाम् समचतुरस्र-रूपतया पार्श्वचतुष्टयोर्ध्वाधरभागैः षोढा विभक्तां न सृजसि न रचयसि, न वा कन्दुकनिस्तलां कन्दुकवद्वर्त्तुलाकारां सूषे उत्पादयसि, किन्तु ( लोकाः सुख-मासतामिति दयापारवश्येन ) [ इमां पृथ्वीम् ] विशालदर्पणाभाम् महादर्शत्र-त्सरम् घटयसि भ्राम्यमाणेनाकाशेन संबध्नासि ।

अत्र—'द्वौ सूर्यौ द्वौ चन्द्रौ' इत्यादि क्रमेणाष्टादशग्रहाः चतुष्पञ्चाशन्नक्षत्राणि, भुवश्च समचतुरस्राः पार्श्वचतुष्टयोर्ध्वाधरभागाः, एकत्र भागे एकः सूर्यः, ततस्तृतीय-भागे द्वितीयः सूर्यः, अवशिष्टयोस्तु प्राक्प्रत्यक्प्रविभागयो रात्रिः, इति दिगम्बराणां मतम्मनसि निधाय तदपनोदायैव 'अविषमचतुरस्रषड्विभागां न सृजसि' इत्युक्तम् ।

---

आपने लोगोंको रहनेकी सुविधाप्रदान करनेके निमित्त ही पृथ्वीको ( इस प्रकारसे ) बनाया है—

ग्रहमण्डलरूप चक्रके भ्रमणकारीकुलाल, आपने पृथ्वीको न समचतुरस्र बनाया, न छः पहलवाली बनाया और न गेंदकी तरह गोल ही बनाया । ( प्रयत्न करके ) आपने पृथ्वीको विशालदर्पणकी तरह बनाया ( जिसपर लोग आसानीसे वास कर सकें ) ॥ ५९ ॥

पुरुषोत्तमः—अपि मम प्रलयसर्गावसानसमर्थं शरीरमपि पश्यसि ।

पुरुषः—नहि नहि ।

**अपरिमितकृतेर्निराशयस्य भ्रमरहितस्य निरस्तचेष्टितस्य ।**
**दृषदुदरदरीषु दर्दुराणां घटनपटोस्तव कीदृशं शरीरम् ॥ ६० ॥**

एतच्च दिगम्बराणां मतम्—'किं गण्यं तव वैगुण्यं द्वैगुण्यं यो वृथाऽकृथाः । भार्केन्दूनां विलोक्याह्वा ध्रुवमत्स्यपरिभ्रमम् ॥" इत्यादिना प्रघट्टकेन भास्कराचार्यः स्वीये सिद्धान्तशिरोमणौ निपुणं परास्थदिति बोध्यम् । 'कन्दुकवर्त्तुला भूमिरिति' ज्यौतिषसिद्धान्तोऽपि नास्याभिमत इति व्यञ्जयितुं 'कन्दुकनिस्तलां न सूषे' इत्यभिहितमत्र भुवो वर्त्तुलाकारत्वस्य ज्योतिषाभिमतस्य खण्डनं म०म०गोकुलनाथोपाध्यायेनैतन्नाटकप्रणयनयशस्विना 'भूयाम्यसाधनप्रकरण' नामके स्वीये ग्रन्थान्तरे कृतमिति तत्कृतयाऽमृतोदयटिप्पण्या प्रतीयते ॥ ५९ ॥

अपरिमितेति । अपरिमिता असंख्याता ( जन्यमात्रजनकतयाऽतिप्रभूता ) कृतिः रचना यस्य तथोक्तस्य, निराशयस्य कर्मफलानुगुणवासनाशून्यस्य भ्रमरहितस्य सञ्चारशून्यस्य भ्रमप्रमादादिपुरुषदोषैः रहितस्य वा निरस्तचेष्टितस्य व्यापारसामान्यहीनस्य ( एवमपि ) दृषदुदरदरीषु शिलाभ्यन्तरभागेषु दर्दुराणाम् भेकानाम् घटने उत्पादने पटोः समर्थस्य तव शरीरं देहः कीदृशम् किंविधं भवतु, न युज्यते तव शरीरमतो न पश्यामीत्युत्तरमनेन दीयमानं बोध्यम् । यस्य शरीरं भवति तस्य कृतिः प्रयत्नः मितः ज्ञानगोचरो भवति तव तु कृतिर्न ज्ञानगोचरः, यस्य शरीरं भवति तस्य आमाशयपक्वाशयादयोऽपि भवन्ति, त्वं तु निराशयः, यस्य शरीरं भवति तस्य संचारोऽपि भवति त्वं तु भ्रमरहितः, यस्य शरीरं तस्य चेष्टा नियता, त्वं तु चेष्टासामान्यशून्यस्तत्कथमिवोपपद्यतां तव वपुरित्यपि

पुरुषोत्तम—क्या तुम हमारे प्रलय-कालमें सृष्टिको समाप्तकर सकनेवाले शरीरको भी देखते हो ?

पुरुष—नहीं, नहीं ।

अपरिमित निर्माणशक्तिसम्पन्न, कर्मफलसंबन्धशून्य, भ्रमप्रमादादिदोषरहित, सकलव्यापारशून्य होकर भी पर्वतोंके बीच बिलोंमें भेकोंकी उत्पत्ति करनेवाले आपका शरीर कैसा ? ( आप वस्तुतः परमाणुशरीर हैं ) ॥ ६० ॥

पुरुषोत्तमः—किमिमामाकस्मिकीं प्राकृतिकीं वा सृष्टिमभिमन्यसे।

पुरुषः—

**न जगदिदमहेतुतो न शून्यादवधिमतां कथमुद्भवोऽस्त्वकस्मात्।**
**प्रकृतिरियमधर्मधर्मरूपा पुरुषगुणः कथमारभेत विश्वम्॥ ६१॥**

---

गूढोऽर्थः। निराशयस्येत्युक्त्या—"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः ईश्वरः इति" पातञ्जलदर्शनोक्तमीश्वरलक्षणं स्मार्यते॥ ६०॥

न जगदिदमिति। इदम् प्रत्यक्षदृश्यम् महीधरादिसूक्ष्मान्तं भुवनम् अहेतुतो विना किमपि कारणन्न, जगद्विना कारणं न भवतीत्युक्तं तत्र शून्यमेव कारणं मन्यतां तत्राह—अवधीति। अवधिमताम् गोर्गोरेवोत्पद्यतेऽश्वादश्व एवोत्पद्यते इत्येवं मर्यादाशालिनाम् उद्भवः अकस्मात् किमपि प्रातिस्विकं कारणमतिरिच्य कथमस्तु केन प्रकारेण जायताम्? नन्वेवमपि प्रकृतिर्जगत्कारणं स्वीक्रियतामिति चेत्तत्राह—प्रकृतिरिति। इयंप्रकृतिः अधर्मधर्मरूपा पुरुषगुणः कर्मकर्त्तृपुरुषापेक्षित्वादस्वतन्त्रा तत्सा (पुरुषपरतन्त्रा प्रकृतिः) विश्वं भुवनं कथम् आरभेत कर्त्तुं शक्नुयात्। तन्न प्रकृतिरपि विश्वकारणमिति बोध्यम्। न्यायमते पुरुषैरनुष्ठितानां कर्मणां शुभाशुभादृष्टसंस्कारात्मकं फलं पुरुषस्यात्मनि गुणरूपेण जायमानं सदाफलोदयं पुरुषात्मनि तिष्ठति जाते च तत्फले नश्यति, तदेवादृष्टपदेन कथ्यते तच्च फलतो धर्माधर्मावेव, इति पुरुषगुणरूपा प्रकृतिः स्वतन्त्रताविरहाद्विश्वं निर्मातुं न शक्नोति, पुरुषस्य विश्वनिर्मातृता तु न कस्याप्यभिमता, शून्यतोऽपि न शक्नोति जगदुत्पत्तुं प्रतिनियतमर्यादाभङ्गप्रसङ्गात्, विनैव किमपि कारणम् विश्वस्योत्पत्तिश्च न शक्यतेऽभ्युपगन्तुमित्यगत्या परमात्मा कारणत्वेन स्वीकर्त्तव्य एवेति 'किमिमामाकस्मिकीं प्राकृतिकीं वा सृष्टिमभिमन्यसे' इत्यस्य प्रश्नस्योत्तरं दत्तं ज्ञेयम्॥ ६१॥

---

पुरुषोत्तम—तब तुम इस सृष्टिको आकस्मिक अथवा प्राकृतिक मानते हो?

पुरुष—यह जगत् विना कारणके नहीं हुआ है, जो जगत् सान्त है वह अकस्मात् विना किसी खासकारणके हो नहीं सकता है। प्रकृति तो धर्माधर्मस्वरूप है (वह कारण नहीं है) वह तो पुरुषका गुण है, उससे जगत् की उत्पत्ति कैसे मानें॥ ६१॥

पुरुषोत्तमः—ननु मामुपादानं निमित्तं वा जगतोऽनुमन्यसे ।

पुरुषः—

विशकलितमणु व्रजन्निचित्य
स्थपतिरिव त्वमजीघटः पडङ्गम् ।
विभुरसि च न युज्यसे विकारै-
स्त्वयि समवैतु कथं स भूतवर्गः ॥ ६२ ॥

उपादानं—समवायिकारणम् ।

विशकलितेति । हे भगवन्, त्वं स्थपतिः गृहनिर्माणपटुः कारुभेदः, विश-कलितं प्रलयकाले विप्रकीर्णम् अणुव्रजम् परमाणुनिचयम् निचित्य सिसृक्षावशात् द्व्यणुकादिक्रमेण एकत्रीकृत्य प्रपञ्चं जगत् अजीघटः निर्मितवान् । विभुः व्यापकः असि, विकारैः जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यतीति संख्यातैः षड्भिः न युज्यसे, तथा च स प्रसिद्धः भूतवर्गः आकाशादिपञ्चकं त्वयि कथं समवैतु समवायेन तिष्ठतु । अयमाशयः—वेदान्तिनः परमात्मानमेव जगदु-पादानं मन्यन्ते, तदुक्तम्—'रज्जौ भुजङ्गवद्यत्र विवरीवृत्यते जगत्' विवर्त्ताधिष्ठान-तया परमात्मनो जगदुपादानत्वं सिद्ध्यति । नैयायिकास्तन्न मन्यन्ते, ते हि ब्रह्मणो निमित्तत्वमेव स्वीकुर्वते, तेषां मते परमात्मनः सञ्जिहीर्षावशाद्विशकलिता भवन्ति परमाणवः, तत्र नित्येच्छाद्वारेणेश्वरो निमित्तमेवं सिसृक्षावशादसौ परमाणून् सञ्चि-त्य जगन्निर्मीति तत्राप्यसौ कुलालवन्निमित्तमेव, समवायिकारणत्वं तु न कथमपि तस्य सिद्ध्यति, एतेन 'मामुपादानं निमित्तं वा जगतोऽनुमन्यसे' इति प्रश्नस्योत्तरं

पुरुषोत्तम—तुम मुझे जगत् का उपादान मानते हो अथवा निमित्त ?

पुरुष—जैसे कारु ( शिल्पी ) बिखरे हुए ईंट-रोड़ोंसे महल बना देता है उसी तरह आपने ( प्रलयमें ) बिखरे हुए परमाणुओंको एकत्र करके इस विश्व-प्रपञ्चकी रचना की है । आप विभु हैं, आपमें जन्मादि-विकारका संबन्ध नहीं है, ( आप जगत्के उपादान नहीं हैं ) [ क्योंकि ] आपमें यह भूतसृष्टि कैसे रहेगी । ( उपादान-कपालमें कार्य घट रहता है यदि ईश्वर उपादान माना जाय तब संसार उसमें मानना पड़ जायगा, अतः ईश्वर जगत् का उपादान सम-वायिकारण नहीं है निमित्तकारण है ) ॥ ६२ ॥

पुरुषोत्तमः—हन्त, तर्हि प्रपञ्चमसन्तं प्रतिपद्यसे ।

पुरुषः—न खलु न खलु ।

**त्वमखिलजगदीश षड्भिरङ्गैरुपचितदेहमजीजनः षडङ्गम् ।**
**कथय कथमसावुपैत्वसत्त्वं सततसतो भवतः स्वतः प्रपञ्चः ॥६३॥**

---

दत्तं बोध्यम् । 'विभुरसि' इत्यस्य परमात्मनोऽणुत्वे चैतन्यानुपपत्तिः अव्याप्यवृत्तिता च दोषः, मध्यमपरिमाणत्वे तु तस्या नित्यत्वप्रसङ्गः इति तस्य व्यापकत्वं स्वीक्रियत इति तात्पर्यम् । 'विकारायोगाद् भूतासमवायः' इत्यत्र सति विकारसंबन्धे अशुद्धत्वे एव पिशाचानुबन्ध इत्यप्यर्थो ध्वनयितुमिष्टो बोध्यः ॥ ६२ ॥

तर्हि—उपादानत्वास्वीकारे निरुपादानकताप्रसक्तौ । असन्तम्—अविद्यमानम् । कार्याणां भावानामुपादानसत्तायत्तसत्ताकतास्वाभाव्यादयं प्रश्नः ।

त्वमखिलेति । हे अखिलजगदीश, समस्तविश्वनियन्तः, षड्भिः सर्वज्ञतादिभिः षट्संख्यैः अङ्गैः ( उपलक्षित, अङ्गैरिति तृतीयोपलक्षणार्था ) उपचितदेहम् स्थूलशरीरम् अतिविशालम् षडङ्गम् । शिक्षाकल्पादिषडङ्गोपेतम् वेदम् अजीजनः उत्पादितवान् । सर्वज्ञतादिषड्गुणशालिना त्वया षडङ्गेन सता शिक्षादिषट्संख्यकाङ्गयुक्ततया षडङ्गो वेदो जनितः ( यस्य निःश्वसितं वेदाः—इत्यादिश्रुतिरत्र मानम् ) तथा च त्वया षडङ्गेन षडङ्गो वेद इव सता सन्नेव प्रपञ्चो जन्यते इत्याह—कथयेति । सततसतो नित्यसद्भावयुक्तस्य भवतः परमात्मनः स्वतः स्वस्माज्जातः असौ प्रपञ्चः असत्ताम् असत्यत्वम् कथमुपैति इति कथय । षडङ्गजनितस्य षडङ्गतावत् सज्जनितस्य सत्ता युक्तैवेति भावः ॥

वेदस्योपचितदेहता पतञ्जलिनोक्ता यथा—"चत्वारो वेदाः साङ्गाः सरहस्याः बहुधा भिन्नाः, एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाऽथर्वणो वेदः" इति ॥ ६३ ॥

---

पुरुषोत्तम—यदि ऐसा कहोगे तब तो विश्व असत्य हो जायगा ।

पुरुष—नहीं नहीं—

हे समस्त विश्वके ईश, आपने छः अङ्गोंसे परिपूर्ण वेदका निर्माण किया किया है । आप शाश्वत हैं, आपसे उत्पन्न प्रपञ्च असत्य कैसे हो सकता है ॥६३॥

पुरुषोत्तमः—वत्स, किमनेनासता सता वा प्रपञ्चेन। विहायैनमान्तरान्विषयान्परिशीलय।

पुरुषः—इदं तावदन्तः प्रणिधाय पश्यामि। आलोचनविकल्पाभिमानव्यवसायवृत्तिमतोरिन्द्रियमनोऽहंकारबुद्धीस्त्रिगुणमेकं प्रसूते, तदपरमविकारि पश्यतीति।

पुरुषोत्तमः—वत्स, कपिलकल्पितभेदमपहाय कर्तृचेतनयोरभेदमनुशीलय।

---

आलोचनम् निर्विकल्पकज्ञानम् इदमिन्द्रियस्य वृत्तिः। विकल्पो विकल्पनं मनसो वृत्तिः। अभिमानोऽहङ्कारस्य वृत्तिः। व्यवसायो बुद्धिवृत्तिः।

एकं त्रिगुणम्—प्रधानम्। अपरम्—पुरुषरूपं प्रधानविपरीतम्। अत्रिगुणात्मकम्। तदुक्तं कारिकायाम्:—

"त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि।
व्यक्तं तथा प्रधानं, तद्विपरीतस्तथा च पुमान्॥"

त्रयाणां गुणानां समाहारस्त्रिगुणम्, अत्र त्रिगुणं प्रधानम् तस्य गुणत्रयसमाहाररूपत्वं साङ्ख्यशास्त्रे प्रसिद्धम्॥

कपिलकल्पितभेदम्—कपिलेन प्रधानं कर्तृतया स्वीकृत्यापि तदचेतनं मतं, यश्च पुरुषश्चेतनतया स्वीकृतः स हि साक्षी स्वीकृतः। तदेवं कपिलेन कर्तृ चेतनयोर्भेदः कल्पितः। नैयायिकास्तु परमात्मानं कर्त्तारं मन्यमानाः कर्त्तुश्चेतनतामङ्गीकुर्वत एवेति तेषां मते कर्तृचेतनयोर्भेदो नास्ति, तदत्र न्यायमतमादर्त्तुमनुरोधः क्रियमाणो बोध्यः॥

---

पुरुषोत्तम—वत्स, यह संसार चाहे नित्य हो अथवा अनित्य, छोड़ो इसे, आन्तरिक विषयोंका विचार करो—

पुरुष—अन्तः प्रणिधान करनेपर मैं देखता हूँ कि एक त्रिगुण ( प्रकृति ) आलोचनवृत्तिक इन्द्रिय, विकल्पवृत्तिक मन, अभिमानवृत्तिक अहङ्कार एवं व्यवसायवृत्तिक बुद्धिको उत्पन्न करता है, और दूसरा ( पुरुष ) अविकृत भावसे देखता रहता है॥

पुरुषोत्तम—कपिलद्वारा कल्पित इस भेदको भूलकर कर्त्ता तथा चेतनके बीच अभेदकी भावना करो।

पुरुषः—एवमनुध्यायमाने कर्तृचेतनयोरभेदे तव मम च मध्ये जडं प्रतिभाति प्रधानव्यवधानम् ।

पुरुषोत्तमः—तेन किं मामावृतं पश्यसि ।

पुरुषः—नहि नहि ।

शिव तव मम चान्तरालभूमौ
विविधविधिं व्यवधां व्यधात्प्रधानम् ।
तदपि हि पिहितोऽहमेव भित्ति-
र्भवति वृतिः सदनस्य नाजिरस्य ॥ ६४ ॥

---

जडम्—मायारूपम् । प्रधानं व्यवधानम् मुख्यं निरोधकम् । जीवेश्वरयोर्मध्ये मायैवान्तर्धेति तदाशयः । मायावच्छिन्नं चैतन्यं जीवः इति मनसि कृत्येत्थमुक्तम् । तेन—प्रधानव्यवधानेन । माम्—परात्मानम् ।

शिव तवेति । हे शिव, शेते जगदस्मिन्निति शिवपदव्युत्पत्त्या संसारसमाहर्त्तः परमात्मन्, प्रधानम् मूलप्रकृतिः तव मम च अन्तरालभूमौ विविधविधिं नाना-प्रकाराम् व्यवधाम् अन्तर्द्धाम् व्यधात् कृतवती । तदपि तथापि ( ताभिर्व्यवधाभिः ) अहम् एव पिहितः आवृतः ( न तु त्वम् ) यतः भित्तिः वृतिः आवरणं सदनस्य भवति अजिरस्य अङ्गनस्य वृतिः न भवति । अङ्गनसदनयोर्मध्ये आवरकतया निर्मिता भित्तिः यथा सदनमेवावृणोति नाङ्गनम्, तथैव तव मम चान्तराले प्रधानरूप व्यवधानं सदपि मामेवावृणोति न तु त्वाम् । भित्तिनाशे गृहाकाशो यथा महाकाशेऽन्तर्भवति तथैव मायाहानौ जीवपरमात्मनोरैक्यं फलितेति तात्पर्यम् ॥ ६४ ॥

---

पुरुष—इसप्रकार जब मैं कर्त्ता तथा चेतनमें अभेदकी भावना करता हूँ तब आपके तथा मेरे बीच जड़ प्रधान व्यवधानसा लगता है ।

पुरुषोत्तम—तो क्या तुम उस प्रधानसे मुझे आवृत देखते हो ?

पुरुष—नहीं,

हे शिव, आपके और मेरे बीचमें प्रकृतिने नानाप्रकारके व्यवधान खड़े किये हैं; फिर भी उन व्यवधानोंसे मैं ही आवृत होता हूँ आप नहीं, टाट या दीवारका घेरा घरको घेरता है आंगनको नहीं ॥ ६४ ॥

किंतु विकारमलिनप्रधानान्तरितेन चक्षुषा त्वामनुशीलयन्निदं पश्यामि।

**किमपि निविशते प्रकाशराशौ त्वयि यमुनेव रवौ विधाविवाङ्कः।**
**असिततनुचतुर्भुजं स्वरूपं यदवतरा हृदयं हरन्ति रामाः ॥६५॥**

पुरुषोत्तमः—वत्स, त्रैगुण्यमयप्रधानव्यवधानमपहाय मां निपुणं निरूपयन्नाकलयिष्यसि तत्त्वम्।

---

'अत्र—'अजामेकां लोहितशुक्लकृष्णाम्' इत्यादिना वेदे वर्णिता माया एकैव, 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादिश्रुतिसिद्धास्तु तद्विपरिणामभूता नानाविधाः, तदविद्यावच्छिन्नं चैतन्यं जीवपदेनोच्यते। मूलभूतमायावच्छिन्नं च चैतन्यमीश्वरपदेन। अतएव मूलभूतमायायाः सर्वप्रपञ्चोपादानत्वात्तद्वृत्तौ प्रमितं चैतन्यं सर्वज्ञपदव्यवहारभाजनं भवति। अतएव च तस्य न केनचिदज्ञानेनावृतत्वसंभवः। किन्तु अयमेवोपासकानां बुद्धौ चतुर्भुजादिशरीरोपेत इवापाततः प्रतिभातीत्यभिप्रायेण वेदान्तिसम्मतब्रह्माभेदप्रकरणमत्रावतार्यते' इति विशिष्यावधेयम्।

किमपीति। प्रकाशराशौ तेजःपुञ्जात्मके रवौ यमुना इव, विधौ चन्द्रे अङ्कः कलङ्ककालिमा इव किमपि अनिर्वचनीयम्। असिततनु श्यामलविग्रहम् चतुर्भुजं कालीकृष्णादिशरीरात्मकम् शरीरम् प्रकाशस्वरूपे त्वयि निविशते निविशमानमिव प्रतिभाति। यदवतराः यस्यावतारभूताः रामाः स्त्रियोऽथवा परशुरामप्रभृतयो रामपदवाच्याः हृदयं हरन्ति मम आकर्षन्ति। त्वयि परमात्मनि किंमपि श्यामं चतुर्भुजं च कालीकृष्णादिशरीरं प्रविशदिव प्रतिभाति मे, यस्याः काल्या अवतारभूताः रामाः स्त्रियः कृष्णस्य चावतारभूताः सर्वानानन्दयन्ति। उपासकैः परमेब्रह्मण्यध्यस्तः कालीविग्रहः कृष्णविग्रहो वा ध्यातव्य इत्युपदेशोऽत्र दीयमानो बोध्यः ॥ ६५ ॥

---

किन्तु मैं अपने विकारमलिन प्रधानसे अन्तरित नयनोंसे जब आपको देखता हूँ तब मुझे ज्ञात होता है कि—

प्रकाशराशि सूर्यमें यमुनाकी तरह अथवा चन्द्रमामें कलङ्ककी तरह प्रकाशराशि आप परमात्मामें कोई काला चतुर्भुज शरीर लीन हो रहा है, (जिसके अंशसे अवतीर्ण) जिसके अवतार राम आदि हृदयका हरण करते हैं ॥ ६५ ॥

पुरुषोत्तम—त्रिगुणात्मकप्रधानके व्यवधानको दूरकरके जब अच्छी तरह मुझे देखोगे, तभी तत्त्व का ज्ञान होगा।

पुरुषः—हन्त भोः, निपुणनिरूप्यमाणे त्वयि विच्छिद्यत एव द्वैतम्।

त्वममृतविषयप्रवेशभूमौ भवसि दृशोः पथि यस्य स द्वितीयम्।
जगति न परिपश्यतीति जिह्मा स्मरहर दृष्टिविषाधिका गतिस्ते॥६६॥

पुरुषोत्तमः—एवमेव विषयान्तरप्रकाशदोषमोषनिरस्तद्वैतमद्वितीयतया

---

त्वममृतेति। हे स्मरहर, मदनसंहर्त्तः त्वम् अमृतविषयस्य अमृतनिधानस्थानभूतस्य मोक्षस्य प्रवेशभूमौ द्वारदेशे (वर्त्तमानः) यस्य जीवस्य दृशोः दृष्ट्योः पथि मार्गे भवसि सद्योमुक्तः सन् जगति भुवने द्वितीयम् स्वातिरिक्तं कमपि न पश्यति, इति दृष्टिविषात् दर्शनमात्रेणान्यस्य दाहकात् दृष्टिविषनाम्ना प्रथितात् सर्पादपि जिह्मा कुटिला तव गतिः स्थितिः अस्तीति शेषः। दृष्टिविषः सर्पो यं पश्यति स तदीयविषज्वालावलीढः सन् सद्योऽदृश्यत्वं गतो भवतीति तमपरो न पश्यति, मोक्षद्वारि स्थितं त्वां पश्यंस्तत्काल एव मुक्तो भवतीति तस्य विश्वात्मकतायां प्रतिपन्नायां त्रिपुटीनाशे जाते द्वितीयो दृश्यो नावतिष्ठते एवञ्च दृष्टिविषं सर्पमपि जयति तव स्थितिः। दृष्टिविषदृष्टो न स्वयं दृश्यते (तत्कालदग्धत्वात्) त्वया दृष्टोऽन्यं न पश्यति सर्वभेदनिवृत्तेरिति हृदयम्॥ ६६॥

एवमेव—यथा त्वया ज्ञातं तथैव। मद्दर्शनमिति विशेष्यम्। विषयान्तरस्य अन्यस्य विषयस्य प्रकाशः—परिस्फूर्त्तिः एव दोषः (भेदसमर्थकत्वात्) तस्य मोषेण निरासेन निरस्तम् अपगतम् द्वैतम् द्वैधीभावो यत्र तादृशम्। अद्वितीयतया

---

पुरुष—हाय, अच्छीतरह विचार करके देखने पर तो द्वैत ही समाप्त हो जाता है।

हे स्मरहर, अमृतविषय (मोक्षभूमि) के प्रवेश द्वारपर जिसकी दृष्टि आप पर पड़ जाती है, वह संसारमें दूसरेको नहीं देखता है (भेदज्ञान ही उसका मिट जाता है) इस प्रकार आपकी गति दृष्टिविष सर्पसे भी अधिक क्रूर है। (दृष्टिविष सर्प जिसे देख लेता है उसको दूसरा नहीं देखता है, क्योंकि वह तत्काल दग्ध हो जाता है, और तुमको जो देखलेता है वह भेदज्ञानके मिट जानेके कारण दूसरेको नहीं देखता है, अतः दृष्टिविष सर्पसे अधिक कुटिलगति हो तुम)॥ ६६॥

पुरुषोत्तम—विषयान्तरज्ञानरूप दोषसे मुक्त, अतएव अद्वैतस्वरूप, अद्वितीय

दलितमहाभयमपवर्गगोपानसीचरमसोपानभूतमस्मद्दर्शनम् ।

पुरुषः—हा, किमेतत् ।

**उडुनि मयि रवे प्रकाशलेशं व्यवधिवशादपरीक्षितो व्यतारीः ।**
**तदपहरसि संनिकर्षमेत्य त्वदुपरि तर्हि निजं वपुस्त्यजामि ॥६७॥**

---

द्वन्द्वस्थलोपमूलकाद्वैतेन दलितं समूलनष्टम् महाभयं पुनरावृत्तिशङ्का यत्र तादृशम् ( द्वितीयापगमे भयनिवृत्तिः वर्णिता—'द्वितीयाद्वै भयं भवती'ति श्रुत्या । अपवर्गो मोक्षः स एव गोपानसी ऊर्ध्वभागस्थं भवनम् तस्य चरमसोपानभूतम् अन्तिमारोहणतुल्यम् । मम दर्शनं मोक्षप्रापकं विषयान्तरप्रकाशनिवर्त्तकं सन्महाभयनिवर्त्तकं च भवतीति मतः ॥

उडुनीति । हे रवे हे सूर्य, उडुनि नक्षत्ररूपे ( अल्पप्रकाशे ) मयि जीवे व्यवधिवशात् अविद्यारूपव्यवधायकसद्भावात् अपरीक्षितः अदृष्टः त्वम् परमात्मा प्रकाशलेशम् अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यांशं व्यतारीः दत्तवान् । सम्प्रति मोक्षकाले सन्निकर्षं सामीप्यम् ( अभेदम् ) एत्य प्राप्य तत् पूर्वदत्तं प्रकाशलेशम् अपहरसि तर्हि त्वदुपरि त्वामुद्दिश्य निजं वपुः देहन्त्यजामि अशरीरीभवामीत्यर्थः । यथा सूर्यो नक्षत्रेषु स्वं प्रकाशं सङ्क्रमय्य तानि सप्रकाशानि करोति तथैव परमात्मना स्वीयस्याक्षयस्य चैतन्यस्यांशरूपमन्तःकरणावच्छिन्नं चैतन्यमर्पयित्वा जीवः प्रकाशभाक् चेतनः क्रियते । अथ मोक्षकाले तमपि चैतन्यं स्वलयद्वाराऽपहरति तदा जीवोऽपि स्वां सत्तां समाप्य स्वं वपुः जहातीवेति । यथा केनचिद्धनं दत्त्वा सुस्थतां प्रापितः स्वयमधनः कश्चित्तेनैव धनिना स्वदत्ते धने ह्रियमाणे स्वजीवनं कठिनं मन्यमानो दातुर्यशः प्रथयितुं तद्द्वारि स्वं वपुर्जहाति इति लोकवृत्तान्तोऽत्र पृष्ठभूमीकृतः ॥ त्वयि सन्निकृष्टे विषयाकारान्तःकरणवृत्तेरभावात्तदपहार इति

---

होनेसे ही सर्वविधभयरहित, अपवर्गस्वरूप छत की सीढ़ीके सदृश होता है हमारा दर्शन ।

पुरुष—हा, यह क्या हुआ ?

हे सूर्य, आपने अदृष्ट रहकर नक्षत्रस्वरूप मुझमें अपना थोड़ा सा प्रकाश दिया था समीव आकर आप वह प्रकाश भी छीन रहे है, फिर मैं अपना शरीर आपपर त्याग दूंगा ॥ ६७ ॥

पुरुषोत्तमः—न केवलं बहिर्विषयप्रकाशमेव मुष्णाम्यात्मदर्शिनाम्, अपि त्वशेषामेव विशेषगुणसंपदम्।

पुरुषः—का पुनरत्र प्रतिक्रिया। अथवा जानामि त्वयि कृतप्रतिकृतिम्।

**भवपथपथिकोऽसि वाटपाटच्चर मिलितोऽसि विलुण्ठ संपदो मे।**
**अहमपि भवदन्तरं प्रविश्य ध्रुवमचिरेण हरामि ते विभूतीः ॥६८॥**

---

मत्स्वरूपस्य त्वयि विलयः प्राप्त इति वेदान्तबोध्योऽर्थः, नित्यचैतन्यस्त्वमनित्यं चैतन्यं मयि व्यतारीरिदानीमनुध्यानसाक्षात्कृतस्तदपि जिहीर्षसि चेत्त्वामुद्दिश्यैव निजं वपुरपुनर्भवाय त्यजामीति चार्थोऽत्राङ्कुरविदृष्टान्तद्वारा बोधितः। सूर्ये समीपगते नाक्षत्रं ज्योतिः क्षीयत इति प्रत्यक्षमेव ॥ ६७ ॥

बहिर्विषयप्रकाशम्—बाह्यार्थदर्शनक्षमताम्।

कृतप्रतिकृतिम्—कृतस्य अशेषविशेषगुणसम्पन्मोषस्य प्रतिकृतिम् प्रतीकारम्।

भवपथेति। वाटपाटच्चरः मार्गस्थितः पथिकानां धनसम्पदपहर्ता मार्गलुण्ठाकस्तत्संबोधने हे वाटपाटच्चर, अहं भवपथस्य संसाराध्वनः पथिकः पान्थोऽस्मि, मिलितः भाग्यवशान्मया सङ्गतोऽसि मे मम संपदः (अशेषविशेषगुणरूपाः) विलुण्ठ अपहर। अहम् अपि कृतप्रतिकृतिज्ञानवत्तया भवदन्तरम् त्वन्मध्यं प्रविश्य भवदन्यतमो भूत्वा अचिरेण झटिति एव ते तव विभूतीः ऐश्वर्यलक्षणाः सम्पदः हरामि। कोपि यात्री लुण्ठाकैरपहृतसर्वस्वः सामर्षः कालान्तरेण तेष्वेव मिलितः सन् विश्वासमुत्पाद्य लुण्ठाकैः सञ्चितं कोषमपहरति तथैव जीवोऽपि संसारमार्गे चलन् मिलितेन तत्त्वतो ज्ञातेन परमात्मना अशेषविशेषगुणसम्पदोऽपहृत्य निःस्वतां गमितो (ज्ञानोदयवशात्) भगवदभिन्नतां गतस्तदीयमैश्वर्यं स्वहस्तगतं करोतीति भावः। 'पाटः पथि वृतौ' इति हैमः। "चौरैकागारिकस्तेनदस्युतस्करमोषकाः।

---

पुरुषोत्तम—आत्मदर्शियों का बाह्यविषय प्रकाश ही भर मैं नहीं लेता, उनके सारे विशेषगुण ले लेता हूँ ॥

पुरुष—फिर इसका क्या उपाय है? अथवा मुझे उपाय ज्ञात है, मैं संसारपथका पथिक हूँ, तुम मार्गके डाकू हो, मेरी विशेषगुणस्वरूप संपत्ति छीन रहे हो तो छीन लो। लुट जानेके बाद मैं भी तुमलोगोंमें ही मिलकर शीघ्र ही तुम्हारी सारी विभूतियाँ ले लूँगा ॥ ६८ ॥

पुरुषोत्तमः—मन्ये ममापहरिष्यसे विभूतिम् । आकलय तावदस्ति मयि किंचित्, आहोस्विदकिंचनोऽस्मि ।

पुरुषः—हन्त, प्रपञ्चप्रसारणाकुञ्चनैन्द्रजालिकस्य तव नाधुना कमपि प्रकारमुपलक्षयामि ।

**गुणगणमपनीय चित्तकूपे मम निगमैः सहसा निपातितोऽसि ।**
**अमृतकलश तिष्ठ तिष्ठ नातः परमपि जीवनमुद्धरिष्यसे नः ॥६९॥**

---

प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः" इत्यमरः । अत्र श्लोके भेदापगमावस्थारूपो मोक्षो वर्णितः ॥ ६८ ॥

मन्ये ममापहरिष्यसे विभूतिम्—मन्यसे मम परमात्मनो विभूतिमपहरिष्ये इत्येवं पुरुषपरिवर्त्तनेऽर्थः सुबोधः, 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च' इति तथा साधुतोपहासोऽत्र व्यङ्ग्यः । आकलय—पश्य । प्रपञ्चेति । प्रपञ्चस्य जगतः ।

प्रसारणम् विस्तारः । आकुञ्चनम्—अपसारणम् । तत्र ऐन्द्रजालिकस्य महामायाविनः अधुना मोक्षावस्थायाम् । प्रकारम्—स्वरूपभेदम् धनभेदं वा ।

गुणगणमिति । हे अमृतकलश मोक्षस्थान, निगमैः वेदान्तवाक्यैः (कर्तृभिः) सत्त्वादिं बुद्ध्यादिकं च (पक्षे उदकोदञ्चनसाधनरज्जुराशिम्) अपनीय दूरीकृत्य सहसा अकस्मादेव मम चित्तकूपे अज्ञानतमोवृतत्वात्कूपोपमे मम चेतसि निपातितः निहितः (क्षिप्तः) असि तिष्ठतिष्ठ अभीक्ष्णमत्र स्थितिं कुरु । नः अस्माकम् जीवनम् प्राणवायुम् (पानीयञ्च) अतः परमपि (पूर्ववत्) न उद्धरिष्यसे न उद्धर्त्तुं समर्थो भविष्यसि । यथा रज्जुं दूरीकृत्य कूपे क्षिप्तो घटस्त-

---

पुरुषोत्तम—मैं समझता हूँ तुम हमारी विभूतियाँ लोगे । अरे पहले देख तो ले कि मुझमें कुछ है भी या निरा दरिद्र हूँ ॥

पुरुष—हाय, प्रपञ्च को फैलाने तथा समेट लेने वाले तुझ ऐन्द्रजालिकका तो अब कोई प्रकार (सम्पत्ति) नहीं देख रहा हूँ ।

हे अमृतकलश, तेरे सारे गुणों को दूर करके निगमोंने तुझको मेरे चित्तकूपमें डाल दिया है, अब उसीमें पड़े रहो, अब तुम हमारा जीवन (जल) नहीं खींच सकते हो ॥ ६९ ॥

पुरुषोत्तमः—वत्स, औपनिषदैरदृश्यमानोऽपि मम गुणगणो न प्राकृत-पुरुषवत्परमार्थतो विलीयते । पश्य ।

सपदि गुणगणोऽयमूर्णनाभे-
विलयमुपैति वितायते च भूयः ।
जनजडिमभिदा पटुः पटस्तु
क्षणमपि न क्षमते क्षयं गुणानाम् ॥७०॥

त्रैव तिष्ठति न च तत्कूपजलं पुनरुद्धर्तुं शक्नोति, तथैवोपनिषद्भिरात्मैक्यज्ञापनविधया निर्गुणीकृतः परमात्मा जीवस्य हृदयेऽन्तर्गमिततया प्रवेशितः सदा तत्रैव तिष्ठति न प्राणानुद्धरति—"न तस्य ( अधिगतपरमार्थस्य ) प्राणा उत्क्रामन्ति तत्रैव समवलीयन्ते ।" इति श्रुतेरिति तात्पर्यम् ॥ ६९ ॥

औपनिषदैः—वेदान्तिभिः । ते हि 'नित्यं विज्ञानमानन्दं ब्रह्मेत्येवमुपनिषद्वाक्यैर्नित्यविज्ञानादिरूपत्वं वदन्तो ब्रह्मणो निर्गुणतामातिष्ठन्ते । प्राकृतपुरुषः—प्रकृत्या नित्यसम्बद्धः सांख्याभिमतो जीवः, तत्र सांख्यमते त्रिगुणातीत एव पुरुषः, न्याये तु अनित्यज्ञानादिमान् जीव इति परमार्थतो विलय एव गुणानाम् ; परं पक्षान्तरे ते पुनः समुत्पद्यन्ते इति मकरीकृमिदृष्टान्तेन प्रदर्शयिष्यति ।

सपदीति । अयम् ऊर्णनाभेः मकरीकीटस्य गुणगणः सूत्रसमुदयः सपदि तत्क्षणम् एव विलयम् अदृश्यताम् उपैति पुनः वितायते विस्तार्यते च ( इत्यनेन अनित्यबुद्ध्यादिगुणकप्राकृतपुरुषो व्यञ्जितः तथा च प्राकृतपुरुषस्य बद्धत्वम्, स हि आत्मना विस्तारितेषु तन्तुषु बद्धोऽकिञ्चित्कर इवावतिष्ठते, तद्वज्जीवोऽपि प्रकृतिपरतन्त्रस्तत्कृतान् गुणानासेवमानो बद्धमिवात्मानं मन्यते इति सर्वोऽप्ययमर्थः ऊर्णनाभिवृत्तेन विवक्षितो बोध्यः ) जनानां जडिम्नः अज्ञानस्य शैत्यस्य

पुरुषोत्तम—वत्स, उपनिषद्भक्तजन मेरे गुणों को नहीं देखते हैं फिर भी सामान्य जन की तरह मेरे गुण वस्तुतः समाप्त नहीं हो जाते । मकड़े की सूत ( गुण ) तुरन्त लीन हो जाता है फिर शीघ्र ही फैल भी जाता है । लोगोंके ( अज्ञान-शैत्य ) जड़ताको दूर करने वाला पट तो क्षणभर भी गुणोंके नाशको नहीं सह सकता है ॥ ७० ॥

पुरुषः—अधुना प्रबोध्यमानोऽप्यात्मानमपि गुणवन्तं नावधारयामि, कुतो भवन्तम् ।

**भुवनभवनभासनप्रदीप न्यपतदसौ त्वयि चेतनापतङ्गी ।**
**क्षणमधिकमदीप्यत ज्वलन्ती पुनरजहात्प्रथमामपि स्वसत्ताम् ॥७१॥**

पुरुषोत्तमः—तत्त्वतो ज्ञाते मयि तत्त्वविदामात्मा प्रतिभाति । तत्कथय

---

च भिदायाम् अपनयने पटुर्निपुणः पटुस्तु पटः क्षणम् अल्पकालमपि क्षयं न क्षमते न सहते । गुणविगमेऽसमवेतकार्यस्थितेरभावान्निर्गुणोत्रावतिष्ठते इत्ययमात्मदृष्टान्तः, नित्या एव हि बुद्धीच्छाप्रयत्ना ईश्वरस्येति विवक्षितम् ॥ ७० ॥

भुवनेति । हे भुवनभवनभासनप्रदीप, जगद्रूपस्य गृहस्य प्रकाशक, मम असौ एव पतङ्गी शलभा त्वयि न्यपतत् पतिता । ( यथा दीपे पतङ्गी—पतति स्वभावतस्तथा नित्यचैतन्ये जीवचैतन्यं स्वभावादेवापतत् ) [ निपत्य च ] क्षणम् अल्पकालावधि अधिकम् अदीप्यत अधिकं प्रकाशमापत् ( स्वशरीरदाहद्वारा-प्रकाशमवर्धयत् ) पुनः प्रथमाम् पतनसमयतः पूर्वम् अवस्थिताम् अपि स्वसत्ताम् स्वीयं सद्भावम् अजहात् अत्यजत् । ( जीवोऽपि समाधितः पूर्वमवस्थितं स्वं जीवत्वं जहाति । त्वयि परमात्मनि निवेशिता चेतना कर्त्तृत्वादिप्रकारानुल्लिखन्ती प्रथमं सर्वज्ञतायां परिणता, ततः कर्त्तृत्वादिप्रकारानपहाय निर्धर्मकं त्वामाश्रिता, अथ स्वरूपेणापि निर्वाति, यथा पतङ्गी प्रदीपे पतिता क्षणं ज्वलति ततो भस्मीभूता स्वशरीरं त्यजतीति गम्यते । अत्र पतङ्गी चेतना, दीपः परमात्मा, अधिकदीप्तिः सर्वज्ञता, स्वरूपनिर्वाणं शरीरभस्मीभाव इति यथायथमूहनीयम् ॥ ७१ ॥

तत्त्वविदात्मा प्रतिभाति—'स हि तत्त्वतो ज्ञातः स्वात्मसाक्षात्कारस्योपकरोती'ति न्यायवार्त्तिकतात्पर्यटीकोक्तेरनुरोधादित्थमुक्तम् ।

---

पुरुष—अब समझाने पर भी मैं अपनेको भी गुणवान् नहीं पा रहा हूँ, फिर आपको किसप्रकार गुणवान् मान लूं ।

हे भुवनस्वरूप भवनको भासित करने वाले दीप, मेरी यह चेतना पतङ्गीकी तरह आपपर गिर पड़ी, थोड़ी देर तक तो वह खूब प्रकाश फैलाती रही, परन्तु शीघ्र ही उसकी अपनी सत्ता ( अस्तित्व ) भी समाप्त हो गई ॥ ७१ ॥



पुरुषोत्तम—मेरा तात्त्विक ज्ञान आत्माके तत्त्वतः ज्ञानका जन्मदाता होता

कीदृशं स्वमवधारयसि।

पुरुषः—देव, पश्यामि।

**न धरणिसलिला न चापि वायुर्न खमत एव न खानि नापि वर्ष्म।**
**न समयककुभौ न चिन्न चित्तं पुरुषपुरंदर पूरुषस्तवास्मि ॥७२॥**

पुरुषोत्तमः—मया नाथवन्तमात्मानमनुध्यायतस्तव स्फुरन्निवोपलक्ष्यते मयि स्वतादात्म्यारोपः।

पुरुषः—एवमेतत्।

---

न धरणीति। अहम् धरणिः पृथिवी न अगन्धवत्त्वात्, सलिलं जलं न शीतस्पर्शवत्त्वाभावात्, अनलोऽपि न अनाश्रयाशत्वात्, वायुर्न स्पर्शरहितत्वात्, खम् आकाशो न अशब्दगुणत्वात्। (अतएव गन्धरसरूपस्पर्शशब्दानां पृथिव्यादिगुणानां ग्राहकाणि) खानि इन्द्रियाणि नाहम् मम स्वदंशरूपतया सकलग्राहकत्वेन इन्द्रियरूपतास्वीकारस्य निरर्थकत्वाद् दुरर्थकत्वाच्च। वर्ष्म शरीरमपि नाहम्, अनश्वरस्वभावत्वात्। समयः कालो नाहम्, अपरिच्छिन्नस्वभावत्वात्, अतएव च ककुबपि नाहम्। अहं चित् चेतना न, मम चेतनाश्रयत्वेन चेतनास्वरूपतानुपपत्तेः। चित्तमपि नाहम् नित्यप्रबुद्धत्वात्। हे पुरुषपुरन्दर, पुरुषश्रेष्ठ, अहं तव पूरुषः स्वदंशभूतश्चेतनोऽस्मि (यदपेक्षया त्वमुत्तमः कथ्यसे) ॥ ७२ ॥

मया—परमात्मना नाथवन्तम् सनाथम् अनुध्यायतः भावयतः, स्फुरन् जायमानः, स्वतादात्म्यारोपः मम तव चाभेदबुद्धिः। प्रथमं भेदेनात्मसाक्षात्कारो भवति जीवः स्वं परमात्मांशभूतमात्मानं मन्यते, स एवेतरत्वेनात्मसाक्षात्कारः

---

है। अच्छा कहो तो आत्माको क्या समझते हो।

पुरुष—देव, देखता हूँ—

मैं पृथिवी, जल या वायु नहीं हूँ, आकाशस्वरूप नहीं हूँ, इसीलिये इन्द्रिय अथवा देहस्वरूप नहीं हूँ। न समय या दिशा रूप हूँ, अथवा चित्स्वरूप हूँ, हे पुरुषपुरन्दर, मैं तो आपका पुरुष हूँ ॥ ७२ ॥

पुरुषोत्तम—तुम मुझे अपना नाथ समझने लगे तब तेरा मुझमें तादात्म्यारोप स्फुरित सा हो रहा है।



पुरुष—हाँ, यही बात है।

**असकृदनटदस्मिता नटी मे विहितपदा मशके मतङ्गजे न ।**
**ध्रुवमुपरि तवाधिरोहतीयं भव महतोऽपि महानणोरणीयान् ॥७३॥**
**हा, किमेतत् ।**
**विगलदवयवं विकारमात्रारहितमनिन्द्रियमक्रियं पुराणम् ।**

---

संसारबीजभूतां वासनामवसाययति । स एवेतरस्त्वेनात्मसाक्षात्कारः उपनिषद्वाक्यार्थसहकृतेन मनसा जीवपरात्मनोरभेदं साक्षात्कारयतीति भावः ।

असकृदिति । हे पुरुषोत्तम, मे मम जीवस्य अस्मिता नटी, स्थूलोहं कृशोहमित्यादिबुद्धिरेव नटी मशके सूक्ष्मतरे देहे मतङ्गजे स्थूलतरे वा देहे निहितपदा अर्पितचरणा ( मशकोहं मतङ्गजोऽहमित्येवं प्रकारेण व्यवस्यन्तीतिबुद्धौ ) असकृत् भूयः अनटत् नाट्यं कृतवती । सेयं स्थूले सूक्ष्मे च शरीरे कृतात्माभेदभावनाबुद्धिः सूक्ष्मे स्थूले च वस्तुनि पादन्यासं कृत्वा नाट्यमभ्यस्तवती नटी च ध्रुवम् निश्चयेन कदाचित् तवापि उपरि अधिरोक्ष्यति आरोहणं करिष्यति, त्वं महतो महीयान् अणोः सूक्ष्मात् अणीयान् सूक्ष्मतरो वा भव कामं जायस्व । यथा स्थूलेषु सूक्ष्मेषु वस्तुषु पादन्यासं कृत्वा कृतनर्त्तनाभ्यासा नटी महतोपि महीयसी अणोरपि चाणीयसी (पर्वते सूत्रादौ) वा नाट्यं कर्त्तुं प्रभवति, तथैव सूक्ष्मे मशकादौ स्थूले गजादौ च आत्माभेदाध्यासं कुर्वती ममेयं बुद्धिः कदाचित् मशकोऽहं गजोऽहमितिबुद्धिमिव शिवोऽहमित्येवमप्यध्यासं कुर्यादेव कामं त्वं तदध्यासपात्रतापरिजिहीर्षयेव महतो महीयानणोरणीयान्वा जायस्व, नापैति संभावना सेति भावः ॥ ७३ ॥

विगलदवयवमिति । विगलन्तः पृथग् भवन्तोऽवयवा यस्मात्तं तथोक्तं निरवयवम्, विकारमात्राभिः जन्मादिभिः षड्भिः रहितम् असम्पृक्तम्, अनिन्द्रियम् सकलेन्द्रियवर्जितम् ( अतएव ) अक्रियम् क्रियाशून्यम् पुराणम् सनातनं नित्यम्

---

मशक या मतङ्गज पर पदन्यास करने वाली मेरी यह अस्मिता नटी बारबार नाचती रही है, मेरी यह अस्मिता निश्चय ही कभी आप पर भी आरोहण करेगी भले ही आप 'अणोरणीयान् महतो महीयान्' बनते रहें ॥ ७३ ॥

हाय, यह क्या !

त्वमसि तदिति चेतनामयं मामुपनिषदोऽपि बत प्रमोहयन्ति ॥ ७४ ॥
जगज्जनक, जानामि गतमिदानीं मम संचरणचर्चया ।

दिगपदिशविपर्ययोऽपि पुंसा-
मभिमतसंसरणक्रियां रुणद्धि ।
मम तु भवकदध्वगस्य कोऽपि
त्वमहमिति प्रथितो महान्प्रमोहः ॥ ७५ ॥

---

चेतनामयम् चैतन्यघनम् तत् ब्रह्म त्वम् जीवः असि इति एवम् उपनिषदः वेदान्ताः अपि मां प्रमोहयन्ति बत। उद्यदात्मबोधोऽयं जीवो वेदान्तवाक्यैः परमात्माभेदं बोधयद्भिर्निरिन्द्रियनिर्विकारनिरवयवनिष्क्रियसनातनचैतन्यघनब्रह्म त्वमसीति कथ्यमानः स्वं प्रतार्यमाणमिव मन्यते प्रथमम्, जाते चास्यैवाभ्यासे दृढीभवत्यात्मपरमात्मैक्यभावनेति भावः ॥ ७४ ॥

संसरणचर्चया गतम्—समाप्ता मम जन्ममरणवार्त्ता ।

दिगपदिशेति । दिगपदिशविपर्ययः दिक् प्राच्यादिदिशा अपदिशम् दिशयोर्मध्यम् तयोर्दिगपदिशयोः विपर्ययः भ्रमोऽपि जायमानः सन् पुंसाम् अभिमतसंसरणक्रियाम् यथाभिमतस्थानगमनकार्यम् रुणद्धि प्रतिबध्नाति। मम भवः संसार एव कदध्वा कुत्सितो मार्गस्तत्र गच्छति तादृशस्य तु कोऽपि अवर्णनीयः त्वम् अहम् त्वम् ब्रह्मैवाहं जीव इत्याकारकः महान् प्रमोहः चित्तविभ्रमः प्रथितः

---

आप चेतनामय हैं, परन्तु उपनिषद् मुझे धोखा दे देनेके लिये कहती रहती हैं कि पुरुष निरवयव, विकारमात्रासे शून्य, इन्द्रियविकल, निष्क्रिय तथा पुराण हैं ॥ ७४ ॥

हे संसारके जनक, मैं जानता हूँ अब मेरे संसरण ( जन्मग्रहण ) की बात समाप्त हो गई ।

जिस पथिकको दिग्भ्रम हो जाता है उसका भी संसरण ( आगे बढ़ना ) रुक जाता है । मुझ संसार-मार्गके अभागे पथिकको तो इतना अज्ञान हो गया कि मैं तुमको स्व और स्व को तुम समझ रहा हूँ, फिर मेरी संसारयात्रा कैसे निभ सकती है ? ॥ ७५ ॥

किं वा कृते प्रतिकृतमेवैतत्।

मयि परमविभौ विशुद्धसत्त्वे
यदिह शरीरतदात्मतामधास्त्वम्।
निगमपुरुष तत्प्रतिक्रियार्थं
त्वयि निदधामि समस्तवस्त्वभेदम् ॥ ७६ ॥

पुरुषोत्तमः—वत्स, सेयमपवर्गनगरगोपुरायमाणा दशा भवतु मोहमयी न पुनरेनामवधीरयिष्यसि।

---

चिरादनुवृत्तः (तत्कथं मम संसारयात्रोपपद्येत एतद्गतं मम संसरणचर्चयेति प्रागुक्तस्योपपादनायोक्तम्) साधारणे दिग्भ्रमे जाते साधीयसि मार्गेऽपि यात्रा निरुध्यते, अत्यन्तविषमेऽत्र भवमार्गे स्वपराभेदरूपे भ्रमे महति जायमाने नैव शक्यते यात्रा कर्तुमिति भावः ॥ ७५ ॥

मयि परमेति। हे निगमपुरुष वेदप्रतिपाद्यपरमात्मन्, परमविभौ सर्वव्यापके विशुद्धसत्त्वे प्रकाशात्मनि इह मयि विषये यत् त्वम् शरीरतदात्मताम् देहेन्द्रियाद्यभेदम् अधाशीः आरोपितवान्। तस्य त्वया कृतपूर्वस्य देहेन्द्रियादेरध्यासरूपस्यापकारस्य प्रतिक्रियार्थम् त्वयि परमात्मनि विषये समस्तवस्त्वभेदम् सर्वात्मकताम् निदधामि आरोपयामि। त्वं मयि देहेन्द्रियादिमात्रात्मतामारोपितवानहं तु त्वयि समस्तवस्त्वात्मकतामारोपयामीति मया कृतस्य प्रतिक्रियां कृत्वा लब्धा शान्तिरित्यर्थः ॥ ७६ ॥

अपवर्गनगरस्य मोक्षपुरस्य गोपुरम् पुरद्वारम् इवाचरतीति अपवर्गनगरगोपुरायमाणा मोक्षप्राक्कालिकी। दशा—जीवन्मुक्त्यवस्था। अवधीरयिष्यसि—अवमंस्यसे अस्वीकारोऽस्या अवधीरणा। तत्त्वमसीत्याद्याः श्रुतयोऽमुमेव जीवन्मोक्षरूप-

---

अथवा—यह तो बदला है—

मुझ व्यापक तथा विशुद्ध चैतन्यमय जीवनें तुमने शरीरात्मताका आरोप किया, उसके बदलेमें, हे निगमपुरुष, अब मैं तुममें सभी वस्तुओंका अभेद—सर्वभूतात्मकता—का आरोप करता हूँ ॥ ७६ ॥

पुरुषोत्तम—वत्स, यह मोक्षरूप नगरके गोपुरस्वरूप दशा भले ही मोहमय हो, इसका अनादर मत करना।

पुरुषः—एवमेतत्

शमितजडतदात्मताप्रमोहो
विमलयति त्वदभेदविभ्रमो माम् ।
प्रकृतिमुपनयन्ति वारिधानीं
कतकरजांसि रजोऽन्तरापकर्षात् ॥ ७७ ॥

मात्मपरमात्मनोरभेदमुपपाद्य कृतार्थतां भजन्ते, स चाभेदः स्वात्मसाक्षात्कारे उपयुज्यते, स चात्मसाक्षात्कारो निर्वाणे इतीयं परम्परा। तन्निर्वाणमपवर्गपुरम् तद्-द्वारभूतं च जीवन्मुक्तत्वम्, इत्यवश्यं मन्तव्यम्। अतएवात्र जीवन्मुक्तिदशा अप-वर्गनगरगोपुरायमाणोक्ता। 'पुरद्वारं तु गोपुरम्' इत्यमरः।

शमितेति। शमितः शान्तिं गमितः जडेन देहादिना सह तदात्मता तद्रू-पता सैव प्रमोहः अनाद्यविद्यकज्ञानम् येन तादृशः (शमितजडतदात्मता-प्रमोहः) त्वदभेदविभ्रमः त्वया सहाभेदस्य विलासः माम् विमलयति विशुद्ध-सत्त्वरूपतामापादयति। (देहाध्यासं त्वदभेदो निवारयति, देहाध्यासस्य प्रमोह-रूपता नितान्तव्यामोहकतयोक्ता, ब्रह्माभेदबुद्धेरपि जीवन्मोक्षरूपाया विभ्रमरूपता निर्वाणदशापूर्वभावितयाऽपरमपुरुषार्थस्वरूपतयोक्ता) (मोहे प्रवृत्तिसामान्याभावः विभ्रमे तु प्रवृत्तिसंभवः सा प्रवृत्तिः साधीयसी तदितरा वेत्यन्यदेतत्, अतएव चात्र विभ्रमस्य मोहनिवर्त्तकताऽभिहिता) विमलीकरणे दृष्टान्तमाह—प्रकृतिमिति। कतकरजांसि कतकं नाम जलनिर्मलीकरणद्रव्यविशेषः फलात्मकः तस्य रजांसि चूर्णानि रजोऽन्तरापकर्षात् अन्येषां कर्दमादिभागभूतानां रजसाम् अपकर्षात् अपनयनात् (द्वारभूतात्) वारिधानीम् जलस्थापनपात्रं घटादि (पात्रस्थितं जलम्) प्रकृतिं स्वाभाविकीं स्वच्छताम् उपनयन्ति प्रापयन्ति। यथा कतकरजांसि जलगतानि कर्दमादिसंबन्धीनि रजांसि दूरीकृत्य जलं प्रकृतिम् स्वाभाविकीं शुद्धिं प्रापयन्ति तद्वत् त्वदभेदविभ्रमः

पुरुष—हाँ, आप ठीक कहते हैं,

जडात्मता ज्ञानको शमित करके (देहाध्यास छुड़ाकर) यह आपके साथ अभेदका विभ्रम मुझे विमल बना रहा है जैसे निर्मली रज जलगत अन्य रजःकणों-को दूर करके जलको स्वाभाविक निर्मलता प्रदान करता है॥ ७७॥

पुरुषोत्तमः—पुरुष, कथय कमर्थमिदानीमर्थयसे ।

पुरुषः—पुराणपुरुष,

व्यवधिरुपरराम भूर्विविक्ता प्रभवसि[1] गूढगतिर्न मां प्रहर्तुम् ।
तदिह भवतु तावदेकशेषापरविलयावधिरावयोर्विमर्दः ॥ ७८ ॥

जडाभेदप्रमोहं निवर्त्य मां विशुद्धसत्त्वरूपतां प्रापयति । कतकादिभिः शोधनद्रव्यैः कर्दमांशभूतरजस्सु दूरीकृतेष्वपि यथा कतकरजःसंबन्धोऽनुवृत्त एव तिष्ठति तथैव ब्रह्माभेदबोधनद्वारा जडाभेदबुद्धौ निवर्त्यमानायामपि सत्यां ब्रह्मजीवयोस्तादर्थ्यं जीवन्मोक्षदशायां तिष्ठत्येव, तत्तु निर्वाणे सत्येव लीयते इत्यर्थोऽत्रोपमारहस्यभूतः । अत्र कतकरजांसि वारिधानीं न शोधयन्ति किन्तु वारीण्येव शोधयन्ति, अतोऽत्र वारिधानीपदं लक्षणया वारिपरम् । अथवा—"सविशेषणे हि विधिनिषेधौ सति विशेष्येऽन्वयबाधे विशेषणमुपसङ्क्रामतः" इतिन्यायादत्र वारिधान्यां शोधनान्वय-बाधात् तत्र विशेषणीभूते वारिण्येव शोधनविधिः संचार्यत इति बोध्यम् ॥ ७७ ॥

व्यवधिरिति । व्यवधिः व्यवधानम् ( मायारूपम् ) उपरराम—विरतम् । भूः आश्रयदेशः, विविक्ता विजनाजिररूपा जाता । इदानीम्—व्यवध्युपरम भूविवि-क्तयो र्जातयोः सत्योः पुरा इव पूर्ववत् ( व्यवधिसद्भावेन भुवि अविविक्तायां सत्यां यथा प्रहृतवानसि तथा ) माम् प्रहर्त्तुम् नानाविधप्रमादैः क्लेशयितुम् न प्रभवसि न शक्नोषि । तत् तस्मात् इह विविक्तायां व्यवधिशून्यायां भुवि तावत् आवयोः जीवपरमात्मनोः एकशेषापरविलयावधिः एकस्य शेषः अपरस्य विलयः समाप्तिश्च अवधिर्मर्यादा यस्य तादृशः विमर्दः सङ्घर्षः भवतु जायताम् । यथा परस्परं निरुन्धा-

पुरुषोत्तम—पुरुष, कहो, अब क्या चाहते हो ?

पुरुष—हे पुराणपुरुष,

हमारे आपके बीच जो व्यवधान था वह मिट गया, हमारे और आपके बीचकी भूमि निर्जन है, तुम छिपकर मुझपर प्रहार नहीं कर सकते हो, इस लिये अब मेरे तथा आपके बीच वह युद्ध होगा जिसमें हम दोनों में एकही बचा रह जायगा ॥ ७८ ॥

१. 'भवसि पुरेव न मां क्षमः प्रहर्तुम्' इति पाठान्तरम् ।

पुरुषोत्तमः—न संभवति नित्ययोरावयोरेकतरस्यापि विलयः। तन्मया सह भेदाभेदताटस्थ्येन निखिलेतरविषयपरिहारेण च स्वमात्मानमनुशीलय। अहमपि हि तत्त्वतो ज्ञातः स्वात्मसाक्षत्कारस्योपकरोमि पुरुषाणामिति।

---

नयोर्भटयोरेको व्यवधायकेन कुड्यादिनाऽन्तरितो विषमायां वृक्षादिच्छन्नायां वा भुवि वर्त्तमानः परं प्रच्छन्नभावेन प्रहरति, केनापि कारणेन जाते तु व्यवधानापगमे विविक्तायां भुवि प्राप्तायां सत्यां तयोर्निर्भरयुद्धे एकस्य शेषः परस्य नाशश्च पर्यन्ते पर्यवस्यति तथैवात्र मायाव्यवधिसत्त्वे आशयाशुद्धिरूपायां भुवोऽविविक्तौ वर्त्तमानायां च जीवः प्रकामं कष्टमापत्, परं सम्प्रति मोक्षकाले मायानिवृत्त्या सत्त्वशुद्धौ जातायामेकः परमात्मैव शिष्येत जीवः स्वरूपं जह्यादेवेति युद्धवृत्तान्तोऽत्र मोक्षवृत्तान्तस्य पृष्ठभूमीकृतः। सोऽयं त्रिदण्डिसम्मतो जीवात्मनः परमात्मनि विलयो नाम मोक्षोऽत्र प्रस्तुतो बोध्यः॥ ७८॥

पूर्वश्लोके परमात्मनि जीवात्मविलयो मोक्षोऽभिहितः, तत्खण्डयति—न संभवतीति। आवयोः—जीवपरमात्मनोः। एकतरस्य—कस्याप्येकस्य। विलयः—ध्वंसः। तत्—विलयस्यासंभवात्। भेदाभेदताटस्थ्येन—अंशतोऽभेदेऽपि वस्तुतो भेद इति न सर्वथा भेदो नाप्यभेदः, किन्तु भेदाभेदयोस्ताटस्थ्यम् माध्यस्थ्यम्। यथा वैयाकरणानां शब्दार्थयोर्भेदसहिष्णुरभेदः शास्त्रसिद्धोऽपि न वास्तविकस्तथा नैयायिकानामपि जीवेश्वरयोरभेदावभास एव। निखिलेतरविषयपरिहारेण— सर्वमपि विषयासङ्गं परित्यज्य। (निदिध्यासनमत्र सर्वविषयपरिहारः) अनुशीलय—सततं भावय। अभेदसाक्षात्कारानन्तरं केवलमात्मालोचनं कर्त्तव्यम्, तदेव सञ्चितानि सर्वाणि कर्माणि क्षिणोति, तदत्र तन्मयेत्यादिनाऽभिहितं बोध्यम्॥

---

पुरुषोत्तम—हम दोनों ही नित्य हैं, हम में किसी भी एकका विलय नहीं संभव है। अतः मेरे साथ भेदाभेद-ताटस्थ्य के द्वारा तथा अन्य समस्त विषयोंका परिहार करके अपनी आत्माकी भावना करो, मेरा तात्त्विक ज्ञान भी पुरुषोंके आत्मसाक्षात्कारमें उपकारी होता है।

पुरुषः—( सकरुणम् । ) अरे अनारतप्रबोधमहिमन अभङ्गुरगुणनिधे,

**सुभगपरिचयं जहाति चेत्त्वामतिचपला मम चित्तचेतनेयम् ।**
**परिणतिजडिमप्रकर्षदुःस्थे भिदुरगुणे मयि सा कथं रमेत ॥७९॥**

तथापि भवदादेशतः पश्यामि केवलमात्मानम् ।

( नेपथ्ये । )

हंहो पुरिसाणं उत्तम, अणुप्पण्णप्पसवा अम्हे । ण जुज्जइ अम्हाकं मूलुच्छेदो । ( हंहो पुरुषाणामुत्तम, अनुत्पन्नप्रसवा वयम् । न युज्यतेऽस्माकं मूलोच्छेदः ।

---

अनारतप्रबोधमहिमन्—नित्यविज्ञानमहिमशालिन् । अभङ्गुरगुणनिधे —नित्यबुद्धीच्छाप्रयत्नयुक्त ।

सुभगेति । अतिचपला ममेयं चित्तचेतना बुद्धिः सुभगः शोभनः ( निर्वाणलाभफलकः ) परिचयो ज्ञानं यस्य तादृशम् त्वां चेज्जहाति त्यजति तदा परिणतौ अन्तिमावस्थायाम् जडिम्नो जडतायाः ( अबोधस्य ) प्रकर्षेण अतिशयेन दुःस्थे दुःखिनि भिदुरा अनित्या गुणा बुद्ध्यादयो यस्य तादृशे च मयि सा चेतना कथं रमते ? या मम चित्तवृत्तिर्ज्ञायमानतया परिचिते निर्वाणफलप्रदे परमात्मनि नारमत चापल्यात्, सा अज्ञानोपहततया दुःखिनि अनित्यज्ञानादिगुणके च मयि कथं रमते । अतः कथञ्चिदनुनीयमाना सा त्वय्येव रता भवत्विति भावः ॥ ७९ ॥

निदिध्यासनेन अनारब्धकर्मगणनाशो भवतीत्युक्तम्, तदत्र जीवं निदिध्यासन-

---

पुरुष—( करुणभावसे ) अरे नित्यज्ञानमहिमाशालिन्, अविनश्वरगुणगणोपपन्न,

मेरी यह चञ्चल चेतना निर्वाणप्रद होनेके कारण रमणीय आपके परिचयको छोड़ देगी तो भला वह अन्तमें अबोधमें परिणत होने वाले तथा अनित्यगुणशाली मुझमें किस तरह रम सकेगी ? ॥ ७९ ॥

फिर भी आपके आदेशसे मैं विषयान्तर-परिहारपूर्वक आत्माकी भावना करता हूँ ॥

[ नेपथ्यमें ]

हे पुरुषोत्तम, हम अभीतक फल नहीं दे सके हैं, हमारा मूलोच्छेद करना उचित नहीं है ।

पुरुषोत्तमः—सोऽयमनारब्धव्यापारकः कर्मगणो विलीयते।

पुरुषः—त्यक्ता मया तर्हि संसारकान्तारमरुषु संसरणचर्चा।

स्तनकलशमुखेन वा जनन्यास्तनयकराङ्गुलिमध्यकुल्यया वा।
मुहुरहमपिबं पयांसि यस्मात्तदिदमशुष्यत जालमाशयानाम् ॥८०॥

(नेपथ्ये।)

हा आवुअ, सिसिरभिसिणीसण्डो व्व तुमं विलीनो मा जाण क्खणंपि

---

प्रवृत्तं दृष्ट्वाऽनारब्धकर्मगण आक्रोशमारभते—हंहोइत्यादिना। अनुत्पन्नप्रसवाः—अनुत्पादितफलाः। (असन्ततयश्चेति ध्वन्यते) सन्ततिमतां नाशे तत्सन्ततयोऽनुवर्त्तन्ते, असन्ततिकानां नाशे तु मूलोच्छेदः प्रसज्यते इति तदाक्रोशकारणम्।

स्तनकलशेति। अहम् जनन्याः मातुः स्तनकलशमुखेन चूचुकेन सुतस्य पुत्रस्य कराङ्गुल्योरङ्गुष्ठतर्जन्योर्मध्यमेव कुल्या प्रणाली तया वा यस्मात् कर्मगणात् मुहुः पुनः पुनः पयांसि दुग्धानि जलानि च अपिबम् पूर्वं पीतवान् तदिदम् आशयानां जालम् जन्ममरणप्रयोजकः कर्माशयगणः अशुष्यत शुष्कतामगमत्। कर्मगणे सति तत्फलभोगाय लोको जायते ततश्च मातुः स्तनमुखेन दुग्धं पिबति, म्रियते इति पुत्रैर्दीयमानं जलं पिबति, जाते च कर्मक्षये सर्वमपीदं दुग्धस्य जलस्य वा पानं निवर्त्तते, तदत्र कर्मगणक्षयो हि पयोनिधानशोषरूपेणोक्तः। पुत्रेण पित्रे अङ्गुष्ठतर्जन्योर्मध्यदेशेन जलदानस्य विधिर्धर्मशास्त्रेषूक्तः॥ ८० ॥

आवुको विद्वान्। महामोहसंबोधनमिदम्, तस्य विद्वत्त्वं च सकलविषयक-

---

पुरुषोत्तम—यह सञ्चित कर्मगण विलीन हो रहे हैं॥

पुरुष—अब मेरा संसारस्वरूप बन तथा मरुभूमिमें भटकनेसे पिण्ड छूट गया।

जिस संचित कर्मगणरूप जलाशयके भरे रहनेसे मैं माताके स्तनरूप कलशद्वारा पय (दूध-जन्म ग्रहण द्वारा) पीता रहा हूँ, और पुत्रकी तर्जनी अङ्गुलीके मूलरूप नालीके द्वारा पानी (मरण द्वारा तर्पणजल) पीता रहा हूँ वह आशयजाल (कर्मगण-जलाशय) शुष्क हो गया॥ ८०॥

[नेपथ्यमें]



हा विद्वन्, (महामोह) शिशिर ऋतुके कमलनालकी तरह तुम स्वयं

अम्हे जीआमो त्ति। हा वच्छे पउत्ति, तुम्हं पि अणाहा असरणा विपज्जिहसि। (हा आवुक, शिशिरबिसिनीखण्ड इव त्वं विलीनो मा ज्ञासीः क्षणमपि वयं जीवाम इति। हा वत्से प्रवृत्ते, त्वमप्यनाथाऽशरणा विपत्स्यसे।)

पुरुषोत्तमः—पश्य पुरुष, तव विवेकप्रदीपे पतङ्गवृत्तिमाश्रित्य विलीने महामोहे कुमारौ रागद्वेषावपि प्रवृत्तिविलयाय विरमतः।

पुरुषः—हन्त विरतेषु चिरंतनप्रियसुहृत्सु दोषेषु विरतजन्मफलो विदलद्विनश्यदाशयग्रन्थिर्मुहूर्तं क्वचिद्विश्रमितुमिच्छामि।

---

प्रवर्त्तकतया तत्तद्विषयज्ञानवत्त्वेन साधितम्। शिशिरबिसिनीखण्ड इव—यथा शिशिरसमये बिसिनीखण्डो लीयते तथैव त्वमपि लीन इति। सद्यो मृतः स्वमरणोत्तरकालमृतान् स्वपुत्रान् यथा न जानाति तथा सद्यो मृतोऽयं महामोहः स्वमरणोत्तरकाले म्रियमाणान् स्वजन्यतया पुत्रान् रागद्वेषादीन् म्रियमाणानपि तथा न जानातीत्यर्थः। वत्सा—इयं प्रवृत्तिः महामोहस्य पौत्री, महामोहः पितामहः, तत्पुत्रा रागद्वेषादयः, रागजन्या चेयं प्रवृत्तिरिति। अनाथा—अशरणा, पितुः पितामहस्य च रागस्य महामोहस्य चाचिरेण मरणादशरणेयं प्रवृत्तिः। लोकव्यवहारस्य शास्त्रेऽवतारणा चमत्कारकरी।

दोषेषु—रागद्वेषादिषु। विरतजन्मफलः—मोहविलयाद्रागद्वेषयोर्विलयः, तद्विलयात् प्रवृत्तेर्विलयः, ततो जन्मविलय इति जन्मविलयान्तो मोक्षोऽत्र जीवन्मोक्षः सूचितः। एतेन 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इति गौतमसूत्रमर्थतो निबद्धम्।

---

विलीन हो गये, तुमको क्या पता कि हम भी क्षणभरके लिये ही जीवित हैं। हा वत्से प्रवृत्ते, तुम भी अनाथ तथा अशरण हो गई।

पुरुषोत्तम—देखो देखो, तुम्हारे विवेक-प्रदीपपर पतङ्ग की तरह महामोह विलीन हो गया, उसके दोनों कुमार राग-द्वेष भी प्रवृत्तिके विलयके लिये विलीन हो रहे हैं।

पुरुष—हाय, मेरे चिरसुहृत् दोषोंके विरत हो जानेसे मेरे जीवनका फल ही नहीं रह गया, मेरे कर्मगणरूप आकाशग्रन्थिका नाश हो रहा है या अभी अभी होगा, मैं कहीं थोड़ा विश्राम करना चाहता हूँ।

पुरुषोत्तमः—वत्स, तदिदमग्रतः कायारण्यम्। इह विश्राम्य तावद् चिरमिह परिचरिष्यन्तस्त्वां प्रतिपालयन्ति फलवन्तः कर्माशयतरवः।

पुरुषः—नाथ, भुक्तानि कायारण्ये कर्मतरुफलानि। विलीनं सपादपमरण्यम्। अयं पुनः को नाम।

नोर्ध्वं धावन्नवनिवलयान्नाम्बराल्लम्बमानो
दिग्भ्यस्तिर्यङ् न च विचलितो नान्तरैव प्रसूतः।
आनन्दाब्धेरपगततटद्वीपवेलाविभागः
पूरः पारे वचनमचिराद्विश्वमेकीकरोति ॥८१॥

---

अथ—निर्वाणनाम्नोऽपवर्गस्य प्राक्काले कायव्यूहद्वाराऽऽरब्धव्यापारकर्मफलानामशेषतो भोगः ततो ज्ञानफलमानन्दभोगः, 'आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम्' इति स्मृत्युक्तः, तमेव वक्ष्यति—'अयमानन्दसमुद्र' इत्यादिना। कायारण्यम्—कायव्यूहः।

कर्माशयतरवः—कर्मसमूहा वृक्षाः। सपादपम्—वृक्षैः सहितम्।

नोर्ध्वमिति। अयम् अपगतः दूरीभूतः तटस्य तीरस्य द्वीपस्य जलावृतभूभागस्य वेलायाश्च विभागो यत्र तादृशः निरवच्छिन्नः आनन्दाब्धेः आनन्दवारांनिधेः पूरः प्रवाहः न अवनिवलयात् भूमण्डलात् ऊर्ध्वम् उपरिदेशे धावन् प्लवमानः, न वा अम्बरात् आकाशात् एव लम्बमानः, न च दिग्भ्यः पूर्वादिभ्यः तिर्यक् वक्रक्रमेण चलितः, न च अन्तरा मध्ये एव प्रसूतः उत्पन्नः, पारेवचनम् अवर्णनीयश्च सन् विश्वम् एकीकरोति आनन्दमयन्दर्शयति, अन्यो हि सागरः

---

पुरुषोत्तम—वत्स, यही आगे कायारण्य है, तब तक यहाँ विश्राम करो, यहाँके कर्माशयरूप वृक्ष अपने फलोंसे तुम्हारी सेवा करनेके लिये तुम्हारी प्रतीक्षा कर रहे हैं।

पुरुष—नाथ, मैंने कायारण्यमें कर्मतरुओंके फलोंका भोगकर लिया। वृक्षों समेत वह कायारण्य विलीन हो गया। यह कौन है?।

तटद्वीप मर्यादा आदि विभागसे रहित यह आनन्दसागरका प्रवाह न पृथ्वी से ऊपर उठ रहा है, न आकाशसे लटक रहा है, न दिशाओंसे आ

पुरुषोत्तमः—अयमानन्दसमुद्रोऽनुषङ्गलभ्यो हेय एव दृष्टानुश्रविकानन्द-वदपवर्गपान्थानाम्।

**सुखकामः परानन्दमप्राप्यैहिकमिच्छति ।**
**अभावे मत्तकाशिन्या दृष्टा तिर्यक्षु कामिता ॥८२॥**

---

तद्द्वीपवेलापरिच्छिन्नो भूतलादूर्ध्वंगामी व्योम्नः पतन् कस्याश्चित् दिशो वक्र-भावेनागच्छन् मध्य एव वा जनितः संभवति, अयमानन्दाब्धिस्तु सर्वविलक्षणो भवन् सकलं विश्वमेकीकरोति तदयं वर्णयितुमशक्य इति सागरान्तरापेक्षोऽत्रानन्द-सागरे व्यतिरेक उक्तः ॥ ८१ ॥

अनुषङ्गलभ्यः—अनायासप्राप्यः। हेयः-परित्याज्यः। दृष्टानुश्रविकवत्—वैष-यिकवैदिकयज्ञादिजन्यस्वर्गादिसुखवत्। अयमाशयः—यथा वैषयिको वेदविहित-यज्ञादिसमुत्थश्च स्वर्गादिसमुत्थ आनन्दोऽनित्यत्वात्परित्याज्यकोटौ गण्यते पारमा-र्थिकानन्दकामुकैस्तथैवायमपि निर्वाणवर्त्मनि लभ्यः परमानन्दो हेय एवास्यापि क्षयित्वात्। निर्वाणसुखमेव नित्यतया काम्यमिति माऽत्र लोभं कृथा इति।

सुखकाम इति। सुखकामः सुखमीहमानो जीवः परमानन्दं निर्वाणसुखम् अप्राप्य अलब्ध्वा ऐहिकं वैषयिकादिक्षयिसुखजातम् इच्छति। तत्र दृष्टान्तमाह—अभावे इति। मत्तकाशिन्याः वरवर्णिन्याः स्त्रियोऽभावेऽलाभे तिर्यक्षु पश्वादि-योनिष्वपि कामिता वासनाशमनार्थी प्रवृत्तिर्दृष्टा (पामराणाम्)। यथा पशु-स्त्रीवरवर्णिन्योः सुमहदन्तरं तथैव क्षयिणः सुखादस्मान्निर्वाणसुखस्यापि महदन्तर-मिति तात्पर्यम् ॥ ८२ ॥

---

रहा है, और न बीचमें उत्पन्न हुआ है, यह कहाँसे अकस्मात् आकर विश्वको एकाकार करता जा रहा है, यह तो अवर्णनीय है ॥ ८१ ॥

पुरुषोत्तम—अनायासलभ्य यह आनन्दसागर मोक्षमार्गगामी पथिकोंके लिये वैषयिक तथा स्वर्गादि सुखोंकी तरह ही त्याज्य है।

सुखकी कामना रखनेवाले परमानन्दको नहीं पाकर ऐहिक आनन्द चाहने लगते हैं, उत्तम स्त्रीकी अप्राप्तिमें कामियोंकी प्रवृत्ति पशु आदि योनिमें देखी गई है ॥ ८२ ॥

तदिमामानन्दकक्षामतिक्रम्य कैवल्यभूमौ निर्वाणं नामापवारकमाश्रित्य विश्राम्यतु भवान् ।

पुरुषः—इदं तावत्प्रागपि सुषुपता मयाऽध्यासितमासीदिति प्रत्यभिज्ञायते ।

इदमपवरकं तदेव यस्मि-
न्नसकृदहं निरगां निशि प्रविश्य ।
विगलितवरणाद् बहिर्विहीनात्
कथमधुना सदनादितो निरीयाम् ॥८३॥

---

निर्वाणम्—दुःखात्यन्तविलयस्वरूपम् । अपवरकम्—वासगृहम् ।

सुषुपता—सुषुप्तिं गच्छता । प्रत्यभिज्ञायते—प्रत्यभिज्ञानं नाम पूर्वानुभूतस्य कालान्तरे केनाप्युद्बोधकेन तत्त्वोल्लेखपूर्वकं तदेवेदमिति ज्ञानम् ।

इदमपवरकमिति । इदं सम्प्रति प्रत्यक्षीक्रियमाणं सुषुप्तिलभ्यापवरक तुल्यं निर्वाणनामकम् अपवरकम् वासगृहं तदेव नितान्ततत्तुल्यम् यस्मिन् सुषुप्तिलभ्येऽपवरकेऽहंजीवः असकृत् अनेकधा निशि रात्रौ प्रविश्य निरगमम् निर्गतः । सुषुप्तौ दैनंदिनं प्रलयं निर्वृतिं च मन्यन्ते शास्त्रकारास्तदनुरोधेनेयमुक्तिः, जीवो हि सुषुप्तिकाले निर्वाणलभ्यसुखसजातीयं निर्वृतिनामकं सुखमासाद्य जातायां सुषुप्तेः समाप्तौ पुनः संसारं प्रविशति स एवार्थोऽत्रापवरकप्रवेशनिर्गमपदेनोक्तः । अधुना

---

अतः इस आनन्दकक्षाको पार करके कैवल्य भूमिमें निर्माणनामक कोष्ठगृहमें जाकर तुम विश्राम करो ।

पुरुष—इस प्रकोष्ठमें मैं पहले भी स्वप्नावस्थामें रह चुका हूँ, ऐसा स्मरण होता है ।

यह वही प्रकोष्ठ है जिसमें इससे पहले भी कई बार रातमें प्रवेश करके प्रातःकाल निकल चुका हूँ, लेकिन इस प्रकोष्ठमें बाहरके आवरण नहीं हैं और जो स्वतः बाहरी भागसे हीन है, उस प्रकोष्ठसे कैसे निकला जायगा ? ॥ ८३ ॥

पुरुषोत्तमः—विद्यते भवदध्यासिताध्यासयिष्यमाणयोर्निवृत्त्यपवरकयोः सूक्ष्मो भेदः। तदधुना विरमति भवदिवसे प्रकाशराशिरयमपि तिरोभवति। तदसौ सुदृष्टः क्रियताम्।

पुरुषः—( नाट्येनार्घ्यविधिं निर्वर्त्य। ) भगवन् अशेषभुवनभावनत्रयी-पुरुष,

ध्रुवमियमपवर्गरात्रिसंध्या
भवति यतस्त्वयि निर्भरोऽनुरागः।

---

निर्वाणकाले विगलितवरणात् कुड्यादिरूपवृतिविरहितात् बहिर्विलीनात् बाह्यगृह-शून्याच्च अस्मात् निर्वाणरूपापवरकात् कथं केन प्रकारेण निरीयाम् निर्गच्छेयम्। यत्र गृहे कुड्यादिवृतयो भवन्ति बाह्यगृहाणि च ततो निर्गमः क्रियते अत्र तु न कापि वृतिः ( देहाध्यासः ) न वा किमपि बाह्यगृहादिकम् ( भेदबुद्धिः ) तद-शक्यक्रियमतो निर्गमनमिति भावः॥ ८३॥

भवदध्यासिता—जीवेनोषिता भुक्ता निर्वृतिः सुषुप्तिसुखम्। अध्यासयिष्य-माणम्—वस्तव्यम् भोक्तव्यम् अपवरकम् निर्वाणसुखम्। तयोरस्ति सूक्ष्मो भेदः। सुषुप्तौ—निर्वृतिः उत्तरकालबाध्या। निर्वाणं तु नित्यमिति भेदः॥

भवदिवसे—संसाररूपे दिने। प्रकाशराशिः—सूर्यः परमात्मा च।

ध्रुवमियमिति। ध्रुवम् निश्चयेन इयम् साम्प्रतिकी अवस्था अपवर्गरात्रेः मोक्षलक्षणायाः निशः सन्ध्या भवति जायते, यतः त्वयि मे निर्भरः गाढः रागः प्रेमा भवति। रात्रेः पूर्वं जायमानायामपि सन्ध्यायां प्रकाशराशौ सूर्ये यथा गाढो रागो जायते तथैव मुक्तेः पूर्वकाले परमात्मनि गाढो रागो जायते स च जाय-

---

पुरुषोत्तम—तुम जिस प्रकोष्ठमें रह चुके हो, और अब जिसमें रहने जा रहे हो, उन दोनों प्रकोष्ठोंमें अन्तर है। संसार दिवसका अन्त हो रहा है, यह प्रकाश जब तक छिप नहीं जाता है, तभीतक इसे अच्छी तरह देख लो।



पुरुष—( अभिनयपूर्वक अर्घ्य देकर ) हे समस्त भुवनके जनक त्रयीपुरुष,

रुचिमय चरमोऽयमञ्जलिस्ते
नन्तु न चिराद्भविता भवानदृश्यः ॥८४॥

( इति निष्क्रान्ताः सर्वे । )

इति तुरीयोऽयमात्मदर्शनं नामाऽङ्कः ।

---

मानोऽस्तीति—अस्याः सन्ध्याया अपवर्गरात्रिपूर्वभावोऽनुमीयते । हे रुचिमय प्रकाशमय प्रेममय वा, अयन्ते तुभ्यम् मम चरमोऽञ्जलिः अन्तिमः प्रणामः, नचिरात् शीघ्रमेव भवान् सूर्यः परमात्मा च अदृश्यो भविता ननु । रात्रौ सूर्यो यथा न दृश्यते, तथैव जाते मोक्षे दृग्दृश्यसंबन्धसामान्याभावेन परमात्मा नावभासते इति भावः ॥ ८४ ॥

इति मैथिलपण्डितश्रीरामचन्द्रमिश्रप्रणीते अमृतोदयप्रकाशे
चतुर्थाङ्कप्रकाशः ।

---

हे रुचिमय, निश्चय ही अपवर्ग रात्रि की यह सन्ध्या हो रही है क्योंकि आपमें गाढ़ अनुराग ( लाली ) है, हमारा यह अन्तिम नमस्कार स्वीकार करें, अब तो आप शीघ्र ही अदृश्य होने जा रहे हैं ॥ ८४ ॥

[ सबका प्रस्थान ]

॥ चतुर्थ अङ्क समाप्त ॥

## पञ्चमोऽङ्कः ।

( ततः प्रविशति श्रुतिरान्वीक्षिकी च । )

श्रुतिः—ततस्ततः ।

आन्वीक्षिकी—ततश्च प्रमित्यनुमितिसिद्धिभिः सहचरितधर्मगणः पुरुषस्य प्रादुर्बभूव विलीने च सान्वये महामोहे कैवल्यभुवमागते पुरुषे तिरोबभूव पुरुषोत्तमः ।

---

ततः—तदनन्तरम् । (आत्मदर्शने जात इत्यर्थः ) चरितधर्मगणः—पूर्वानुष्ठित-धर्मसमूहः ।

अयमाशयः—पुरुषस्यात्मदर्शने पूर्वोक्तरूपेण जाते सति तस्य प्रमित्या अनुमित्या सिद्ध्या सह तदीयः पूर्वानुष्ठितधर्मनिवहः प्रादुरासीत् फलोन्मुखोऽभवदिति । सान्वये—सपरिवारे—रागद्वेषरूपपरिवारसहिते । महामोहे—जीवपरमात्माभेदभ्रममूलभूते मोहे । विलीने - अपगते सति । कैवल्यभुवम्—निर्वाणस्थानम् । तिरोबभूव—स्वरूपं विहाय परमात्मरूपो जातः । तदत्र—आत्मदर्शनात्सान्वय मोहनिवृत्तिः पूर्वाचरितधर्मसमूहस्य प्रादुर्भावः, कैवल्यभूप्राप्तिः स्वरूपपार्थक्यनिवृत्तिश्चेति क्रमशो जायमानानां भावानामुत्तरोत्तरं कार्यकारणभाव उपपादितो बोध्यः । भगवन्—सर्वसामर्थ्यशालिन् । अनिमित्तमैत्रीमयचरित्र—अकारणबन्धो । निष्कारणकरुणारत्नाकर—निरुपधिदयासागर । शङ्कर—लोककल्याणकारिन् ।

---

[ श्रुति तथा आन्वीक्षिकीका प्रवेश ]

श्रुति—इसके बाद ?

आन्वीक्षिकी—इसकेबाद प्रमिति अनुमिति एवं सिद्धिके साथ पुरुष द्वारा आचरितधर्मगण पुरुषके सामने आया, महामोह सवंश विलीन हो गया, पुरुष कैवल्य भूमिमें पहुँच गया, फिर पुरुषोत्तम छिप गया ।

( नेपथ्ये । )

भगवन् अनिमित्तमैत्रीमयचरित्र निष्कारणकरुणारत्नाकर शंकर,

त्यक्ताध्वन्यसुहृज्जनस्य तरतः कान्तारमेकाकिनः
प्रच्छन्नेन सखे त्वया वसतयो भोगाय मे निर्मिताः ।
संसाराध्वविरामसीमनि मनागेकात्मवत्संगते
विश्लिष्टे त्वयि केवलस्य गलितः सर्वः प्रकारो मम ॥१॥

---

त्यक्ता ध्वन्येति । हे सखे, पुरुषोत्तम, त्यक्ताः विसृष्टाः अध्वन्याः मध्येमार्गं मिलिताः सुहृज्जनाः रागादिरूपा बन्धवो येन तादृशस्य संसारवर्त्मनि मिलितान् रागादीन् परित्यक्तवतः एकाकिनः सहायान्तररहितस्य कान्तारम् दुर्गमं संसारवर्त्म तरतः लङ्घयतः मे मम भोगाय विश्रामसुखावाप्तये प्रच्छन्नेन आवृतस्वस्वरूपेण मायाविना त्वया वसतयः निवासस्थानानि सुरनरतिर्यगादियोनिरूपाणि निर्मिताः रचिताः । संसाराध्वविरामसीमनि संसाररूपमार्गस्य समाप्तिरूपेऽवधौ निर्वाणकालस्वरूपेऽस्मिन् मनाक् ईषत् अतिस्वल्पकालस्य कृते एकात्मवत् अद्वयाकारेण संगते मिलिते ( पश्चाच्च ) विश्लिष्टे वियुक्ते सति त्वयि मे मम सर्वोऽपि ( त्वया कल्पितः ) [ भवाध्वनि विश्रान्तेः ] प्रकारः गलितः अपगतोऽभूत् । अयमाशयः—यथा कश्चन दुर्गमं मार्गं तरीतुं प्रवृत्तस्य कस्यचित्पुरुषस्य कोऽपि दयालुः सखा मध्येमार्गं तदीयविश्रामस्य कृते आवश्यकोपकरणयुतानि भवनानि निर्मापयेत् तथैव त्वया संसारं तरीतुं प्रवृत्तस्य मम विश्रामाय सुरनरतिर्यगादियोनयः कल्पिता आसन् । अधुना निर्वाणसमये त्वं कियतः कालस्य कृतेऽद्वयाकारेण मया सह मिलसि एकात्मताबुद्धौ दृढीभूतायां च स्वरूपमात्रप्रतिष्ठिते मयि वियुक्तो भवसि, तन्मम सर्वोऽपि भोगप्रकारः समाप्नोतीति । तदत्र समाधिपरिणामो व्याख्यातो

---

( नेपथ्यमें )

भगवन्, अकारणमैत्रीपरायण, अकारणदयालु, शङ्कर, मैं मार्गमें मिलने वाले साथियोंको छोड़कर अकेले दुर्गवनमार्गसे चलरहा था, आपने मेरे भोगके लिये छिपकर आवास बनवा दिये, संसाररूप मार्गके विराम की सीमापर एकात्म भावसे आपमिले और बिछुड़ गये, मैं अकेला तथा सर्वथा निर्धन हो रहा हूँ ॥१॥

विगलितगुणसामान्यं केवलमात्मानमालोच्य ।
पुरुषोऽननुभूतचरं चरमतरं दुःखमनुभवति ॥ २ ॥

श्रुतिः—वत्से, एतदवसानानि पुरुषस्य व्यवसितानि । अस्मान्नेत्र चास्य दुःखानामत्यन्तविमोक्षो यदपवर्गप्रतिष्ठा नाम । प्रतिष्ठिते च प्रशान्तिसामैकधने राजन्यपवर्गे

---

बोध्यः—तथा च योगसूत्रम्—"सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः" : पा० यो० सू० ३।१ । अनेन श्लोकेन प्रच्छन्नस्थितेन भाविकष्टनिवृत्तये मध्येमार्गं विश्रामस्थानानि कल्पयता स्वस्याकारणमित्रता दयासागरता च प्रमापिता पुरुषोत्तमेन, ततश्च तत्संबोधने अत्रोक्ते समर्थिते बोध्ये ॥ १ ॥

विगलितेति । पुरुषः विगलितं समाप्तं गुणसामान्यं बुद्ध्यादिगुणगणो यस्य तादृशम् । केवलम् पुरुषोत्तमरूपसहायकापायेऽसहायम् आत्मानम् स्वम् आलोच्य विभाव्य अननुभूतचरम्—अननुभूतपूर्वम् चरमतरम् अन्तिमकालिकमतिमहच्च दुःखमनुभवति । निर्वाणसमये समुपस्थिते समूलबुद्ध्यादिगुणसामान्योच्छेदे जातेऽद्वयाकारेण स्थितः पुरुषः पुरुषोत्तमरूपेण सुहृदा वियुक्तः सन् इतः पूर्वं कदाऽप्यननुभूतं चरमकोटिकञ्च दुःखमनुभवतीत्यर्थः । 'समूलबुद्ध्यादिविशेषगुणसामान्योच्छेदो मोक्षः' इति काणादमतमनुसृत्येदमुक्तम् ॥ २ ॥

एतदवसानानि—एतदन्तानि, ( एतत्पर्यन्तमेव पुरुषस्य ) व्यवसितानि—व्यापाराः अद्वयभूमिप्राप्तिपर्यन्त एव पुरुषव्यापार इत्यर्थः । अत्यन्तविमोक्षः—समूहनिवृत्तिः प्रशान्तिसामैकधने—प्रशान्तिः सर्वोपरतिः एव साम उपायचतुष्टयेषु प्रथमं तदेवैकं मुख्यं धनं यस्य तादृशे—सामैकपरे । राजन्यपवर्गे—अपवर्गनामनि नृपे । प्रतिष्ठिते—राज्यभाजि ।

---

गुणसामान्यशून्य केवल आत्माको पाकर पुरुष अननुभूतपूर्व एवं निःसीम दुःखका अनुभव कर रहा है ॥ २ ॥

श्रुति—वत्से, यहीं पुरुषके कर्त्तव्यकी इतिश्री होती है, वही है पुरुषका आत्यन्तिक दुःखमोक्ष जिसे अपवर्ग प्रतिष्ठा कहा जाता है । शान्ति धनके धनी राजा अपवर्गके सिंहासनारूढ हो जानेपर इस पुरुषके मनमें भेद रह जाता

पुरुषस्यास्य नगरे न भेदो न च विग्रहः ।
भेदविग्रहमूलस्तु दुःखदण्डः पतेत्कुतः ॥ ३ ॥

तदभिषिच्यतामपवर्गः क्षेत्रज्ञनगराधिपत्ये ।

( प्रविश्य । )

बुद्धमार्गः—नमो भगवते तथागताय ।

क्षणिकाणुसंचयमये त्रिविष्टपे स्थिरता कथं भवतु चेतनात्मनः ।
चितिसंततिर्गलितवासनावलिर्विषयोपरागरहिता निरुध्यते ॥ ४ ॥

---

पुरुषस्यास्येति । अस्य पुरुषस्य लिङ्गशरीरावच्छिन्नस्य जीवचैतन्यस्य नगरे क्षेत्रज्ञनगरे न भेदः न च विग्रहः, विग्रहस्य शरीरस्य निवृत्तौ देहाभिमाननिवृत्तौ जातायां न भेदः शरीरोपाधिप्रयुक्तो भेदो नास्ति, तथा सति भेदविग्रहमूलः भेदं विग्रहं चोपादाय प्रवर्त्तमानः दुःखदण्डः कुतः पतेत् । अयमाशयः—यत्र नगरे भेदो विग्रहश्च तिष्ठति तत्र तन्मूलको दुःखदण्डोऽपि कदाचिदापतति, निर्वाणभूमिं गतस्य पुरुषस्य नगरे क्षेत्ररूपे भेदस्य तन्निदानस्य विग्रहस्य चाभावेन न संभवति दुःखदण्डपात इति ॥ ३ ॥

अभिषिच्यताम्—राज्यासनमारोप्यमाणो भवतु ।

तथागताय—बुद्धाय ।

क्षणिकाणुसञ्चयमये इति । क्षणिकाणुसञ्चयमये क्षणिकानां क्षणमात्रस्थायिनाम् अणूनां परमाणूनां सञ्चयस्वरूपे त्रिविष्टपे त्रिभुवने चेतनात्मनः जीवस्वरूपस्य चेतनस्य स्थिरता चिरकालावस्थायित्वम् कथं भवतु केन प्रकारेणोपपद्यताम् , गलितवासनावलिः विगतवासनासमूहा विषयोपरागरहिता विषयसम्पर्कशून्या चितिसन्ततिः

---

है और न विग्रह ( देह-झगड़ा ) रह जाता है, फिर भेदविग्रहमूलक दुःखदण्ड कहाँसे आवे ? ॥ ३ ॥

अतः अपवर्गको क्षेत्रज्ञनगरके राज्यपर अभिषिक्त किया जाय ।

[ प्रवेश करके ]

बुद्धमत—भगवान् तथागतको नमस्कार ।

यह त्रिभुवन क्षणिक परमाणुमय है इससे चेतन आत्माकी स्थिरता किस

स एष ममापत्यं क्षीणवासनो विलीनक्लेशत्रयनिरुद्धो विषयोपरागरहितो वा चेतनासंतानो नामापवर्गः साम्राज्येऽभिषिच्यताम् ।

आन्वीक्षिकी—भद्र श्रमणकमार्ग, कस्ते विषयः ।

मार्गः—नैरात्म्यं क्षणिकता च । मया गृहीतो हि पुरुषो न दवीयः फलं कामयते, न प्रवर्तते, न कर्मसंस्कारस्कन्धेन सीव्यते, न संसरतीति ।

---

चित्परम्परा निरुध्यते योगकृतेन निरोधपरिणामेन वार्यते । अयमाशयः—बुद्धमतानुसारेण सर्वेषां भावानां क्षणस्थायितया चेतनः स्थिरो जीवो नोपपद्यतेऽतो विगतवासना चित्परम्परैव निरुध्यते मोक्षे, जीवस्याद्वयावस्थितिरूपो मोक्षस्त्वयोक्तो नोपपद्यते तस्य क्षणस्थायित्वस्य स्वीकर्त्तव्यत्वात् । इति ॥ ४ ॥

मम—बुद्धमार्गस्य । अपत्यम्—सन्ततिः । क्षीणवासनः—विगलितवासनासञ्चयः । विलीनक्लेशत्रयनिरुद्धः—रागद्वेषमोहात्मके त्रिविधे क्लेशे विलीने सति निरुद्धप्रसरः । विषयोपरागरहितः—विषयसंपर्कशून्यः । अत्र बुद्धमार्गे मतभेदेन मोक्षस्वरूपाण्युक्तानि, यथा—'क्षीणवासना चितिसन्ततिरपवर्गः' इति योगाचाराः । 'रागद्वेषमोहात्मकक्लेशत्रयविलयस्वरूपनिरोधवती सा तथा' इति सौत्रान्तिकाः । 'विषयोपरागरहिता चितिसन्ततिरसौ इति वैभाषिकाः ॥

साम्राज्ये—क्षेत्रज्ञनगराधिपपदे ।

श्रमणकमार्ग—बुद्धमत । श्राम्यति तपसा कायं क्लेशयतीति श्रमणः ( नद्यादित्वाल्ल्युः ) श्रमण एव श्रमणकः, स्वार्थे कः । तस्य मार्गो मतं तत्सम्बोधने 'श्रमणकमार्ग' इतिपदम् ।

कस्ते विषयः—देशः प्रतिपाद्यवस्तु च ।

नैरात्म्यम्—आत्मसामान्याभावः, तथा चोक्तम्—शरीरे रूपविज्ञानवेदना-

---

प्रकार हो सकती है । वासनाओंके विगत हो जानेपर विषयोपरागरहित चितिसन्तति ही मुक्तिप्राप्त करती है । ( अतः यही मोक्ष अभिषिक्त किया जाय ) ॥४॥

यही मेरा पुत्र क्षीणवसन विलीनक्लेशत्रय एवं विषयोपरागरहित चेतना सन्तान ही अपवर्ग है, उसीको साम्राज्य पदपर अभिषिक्त किया जाय ।

आन्वीक्षिकी—भद्र बुद्धमत, तुम्हारा विषय क्या है ?

बुद्धमत—नैरात्म्य तथा क्षणिकता ही मेरा विषय है । उससे गृहीत न

आन्वीक्षिकी—दुर्दर्शनकथामपि मादृशेन जनेन नार्हसि, यस्तावदात्मानमेव न चेतयसे।

मार्गः—स्त्रीत्यवज्ञाता प्राणिहि। न हि त्यजाम्यहिंसाधर्मम्। ( इति निष्क्रान्तः। )

श्रुतिः—अरे विद्याः, प्रवेशयतापवर्गम्।

---

संज्ञासंस्कारनामकं स्कन्धपञ्चकमतिरिच्य कोऽप्यात्मनामकः पदार्थो नास्ति, तदुक्तं शिशुपालवधेऽपि "सर्वकार्यशरीरेषु मुक्त्वाङ्ग स्कन्धपञ्चकम्। सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम्॥"

क्षणिकता—सर्वेषामेव वस्तूनां क्षणस्थायित्वम्—तथोक्तम्—"यत्सत्तत् क्षणिकं यथा जलधराः सन्तश्च भावा अमी" क्षणिकत्वञ्च 'तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम्' इति विश्वनाथः। 'स्वाधिकरणसमयप्रागभावाधिकरणक्षणावृत्तित्वं क्षणिकत्वमिति तु न्यायः' इति बौद्धाधिकारे रघुनाथशिरोमणिः। मया—बुद्धमार्गेण। दवीयः—विलम्बितकालम्। क्षणिकत्वनये विलम्बलभ्ये फले ( स्वस्यासत्तया ) कामना नोदयत इति भावः। कामनाया इच्छाया अनुदये प्रवृत्तिरपि नोपपद्यते इच्छाजन्यत्वनियमात्तस्या इति भावः। कर्मसंस्कारस्कन्धेन—कर्मप्रवृत्तिरूपेण बन्धने। सीव्यते—बध्यते। संसरति-संसारं प्राप्नोति, दुर्दर्शन—दर्शनाधम ( कुरूप इति च ध्वन्यते )। नार्हसि—नाधिकरोषि, नितान्तोपेक्ष्यसिद्धान्तावलम्बनात्तव मया-सह कथाया अपि योग्यता नास्ति, दूरे त्वदनुरोधस्य मया ध्यातव्यत्वमिति भावः।

अवज्ञाता—दत्तक्षमा। प्राणिहि—जीवनं धारय।

---

दूरवर्त्ती फलकी कामना करता है, न प्रवृत्ति होती है, अतः कर्मसंस्कारसे बंधता नहीं है, फलतः संसारसे छूट जाता है।

आन्वीक्षिकी—दुर्दर्शन, तुम तो हमसे बात करनेके योग्य भी नहीं हो। तुम तो आत्माको भी चेतन नहीं मानता है।

बुद्धमत—स्त्री समझकर मैं तुम्हारी उपेक्षा कर रहा हूँ, जाओ जीती रहो, मैं अहिंसाधर्म नहीं छोडूंगा।

[ जाता है ]

श्रुति—अरी विद्याओ, अपवर्गको उपस्थित करो।

( प्रविश्य । )

अर्हत्सिद्धान्तः—णमो अलिहन्ताणम् ।

**णिज्जरजज्जलसंवलविहुडिअगलिअट्ठविधबन्धा ।**

**अच्छिण्णघणाणन्दा मुत्तप्पाणो जअन्ति जिणा ॥ ५ ॥**

एसे मह पुत्ते पडे अवले अ ओवग्गे ।

[ नमो अर्हद्भ्यः ।

निर्जरजर्जरसंवरविघटितगलिताष्टविधबन्धाः ।

अच्छिन्नघनानन्दा मुक्तात्मानो जयन्ति जिनाः ॥

एष मम पुत्रः परश्चापरश्चापवर्गः । ]

आन्वीक्षिकी—भद्र भदन्तसिद्धान्त, कस्ते विषयः । कोऽयमपरः परस्त्वापवर्गः ।

---

अर्हद्भ्यः—जिनेभ्यः ।

णिज्जलेति । निःशेषेण जीर्यत्येतेन कामक्रोधादिरिति निर्ज्जरः कथ्यते केशोल्लुञ्चनतप्तशिलाधिरोहणादिः, तेन निर्जरेण तपोरूपेण जर्जरः क्षपितकल्पो योऽसामर्थ्यः संवृणोति विवेकम् इति संवरोऽविवेकः, तेन च विघटिताः विगलिताश्च अष्टविधबन्धा येषां तादृशाः अच्छिन्नघनानन्दाः अव्याहतसुखदशाः मुक्तात्मानो जिना जयन्तीन्वयः । कर्माष्टकेन जन्मपरम्पराबन्धः, कर्माष्टकं तु चत्वारि घातिकर्माणि, चत्वारि शुभानि, तत्कर्माष्टकबन्धविगमश्च निर्जरादिसाध्यः संवरादिघटनीयश्चेति ॥ ५ ॥

भदन्तसिद्धान्त—जिनमत ।

---

[ प्रवेश करके ]

जैनमत—निर्जरासे संवरको जर्जर बनाकर अष्टविध बन्धनको दूरकरके अच्छिन्न घनानन्द स्वरूप मुक्ति प्राप्त करने वाले जिनोंकी जय हो ॥ ५ ॥

यही हमारे पुत्र पर तथा अपवर्ग हैं, ( इन्हें अभिषिक्त करो )

आन्वीक्षिकी—भद्र जैनमत, तुम्हारा क्या विषय है। यह पर तथा अपर अपवर्ग कौन हैं ?

सिद्धान्तः—णिम्मले विण्णाणमए सलीलपरिणामे अप्पा मह विसए णिरावलणाह जीअविहङ्गाह अवाहआ सुहदसा ठिई णाम अवले ओवग्गं। उद्धगई णाम परममोक्खे। [ निर्मलो विज्ञानमयः शरीरपरिणाम आत्मा मम विषयो निरावरणस्य जीवविहङ्गस्याव्याहता सुखदशा स्थितिर्नामापरोऽपवर्गः। ऊर्ध्वगतिर्नाम परममोक्षः।

आन्वीक्षिकी—( सक्रोधम्। ) अरे दौवारिकदर्शनानि, निरुध्यन्याममी पाखण्डाः।

सिद्धान्तः—कडुअभासिणि, अज्जेव्व शाहेमि। [ कटुभाषिणि, अद्यैव साधयामि। ] ( इति निष्क्रान्तः। )

( ततः प्रविशतः सिद्धान्तौ पाशुपतो वैष्णवश्च। )

पाशुपतसिद्धान्तः—अये, लोकविरुद्धैः सर्पदहनधारणगरप्राशनादिभिर्वेदविरुद्धैर्ब्रह्ममूर्धवश्चनदारुवनद्विजविध्वंसनादिभिरपि निर्लेपस्य स्वतन्त्रतया

---

निर्मलः—सकलदूषणरहितः। विज्ञानमयः–ज्ञानस्वरूपः। शरीरपरिमाणः–यावान् यस्य देहस्तावाँस्तस्यात्मा। विषयः—प्रतिपाद्यः।

कटुकभाषिणि—कठोरवचने। पाखण्डत्वोक्तिरेव कठोरभाषिता।

लोकविरुद्धैः—लोकेऽप्रथितैः लोके द्विष्टैर्वा। सर्पधारणम्–शिवस्य प्रसिद्धम्। दहनधारणमपि तस्य तृतीयनेत्रे वह्निसत्तास्वीकारेण प्रमाणीकृतम् ( अतएव कामो दग्धुमशक्यत ) गरप्राशनम्—विषपानम् ( मथ्यमाने सागरे निर्गतेन हालाहलेन

---

जैनमत—निर्मल विज्ञानमय शरीरपरिमाण आत्मा मेरा विषय है। निरावरणजीव विहङ्गमकी अव्याहत सुखदशामें अवस्थिति अपर अपवर्ग, और ऊर्ध्व गतिपर अपवर्ग है।

आन्वीक्षिकी—अरे दौवारिक दर्शनगण, इन पाखण्डोंको पकड़ लो।

जैनमत—कटुभाषिणि, आजही जा रहा हूँ।

[ प्रस्थान ]

[ अनन्तर पाशुपत एवं वैष्णव सिद्धान्तका प्रवेश ]

पाशुपत—अरे, लोकविरुद्ध सर्प एवं अग्निका धारण तथा विषपान, वेदविरुद्ध ब्रह्मशिरश्छेदन, दारुवनद्विजविध्वंस आदि कर्मोंसे निर्लेप, स्वतन्त्र

वशीकृतसिद्धेर्न केवलं पशूनामेव किंतु पशुपाशबन्धमोक्षाणामपि प्रभवतो दुरवगाहा विभूतयः ।

**विधिवशमिलितो भवाध्वयात्रां हरसि जगत्तिलपेषतैलिकोऽसि ।**

---

ताप्यमानस्य जगतः कल्याणाय शिवस्तत्पानेन जगदनुजग्राहेति प्रसिद्धम् ) इमानि त्रीण्यपि सर्पधारण-दहनधारण-गरप्राशनात्मकानि कर्माणि लोकविरुद्धानि तैः ( आलिप्तस्येति वक्ष्यति ) ब्रह्ममूर्द्धवृश्चनम्—धातृशिरश्छेदनम् ( ब्रह्मणः शिरो वटुकभैरवरूपः शिवोऽच्छिनत् ) दारुवने द्विजान् पक्षिणस्तद्वनं दग्ध्वाऽदहदिति दारुवनद्विजविध्वंसनं तदादिभिः । निर्लेपस्य—एतादृशैः पापविशेषं जनयद्भिः सद्यः प्राणानपहर्त्तुं क्षममाणैरपि च कर्मभिरलिप्यमानस्य अस्पृश्यमानस्य । स्वतन्त्रतया—अकर्मपारतन्त्र्येण । वशीकृतसिद्धेः—आयत्ताणिमादिसिद्धिसमूहस्य । ( अन्येषां हि देवानां सिद्धयस्तत्कृतकर्मायत्ताः, शिवस्य सिद्धयस्तु तदिच्छामात्रोपस्थापितया स्वतन्त्रतया तेन वशीकृताः कथिताः ) पशूनाम्—जीवानाम् । ( अविमृश्यकार्यकारिता बद्धता च जीवानां पशुसाम्यमिति जीवेषु पशुशब्दस्यौपचारिकः प्रयोगः ) पशुपाशबन्धमोक्षः शैवागमसिद्धो मोक्षः तेषाम् । प्रभवतः—तत्समर्थस्य । विभूतयः—सामर्थ्यानि । दुरवाहाः—कष्टेन ज्ञातुं योग्याः ।

विधिवशमिलित इति । जगन्ति भुवनानि तिलाः तान् पिनष्टि इति जगत्तिलपेषः तत्संबोधने हे जगत्तिलपेष, संसारप्रलयकर, त्वं तैलिकः असि, ( प्रसादनमुद्दिश्य परिहासोक्तिरियम् ) यतः त्वं विधिवशमिलितः वेदबोधितकर्म विधिस्तद्वशेन मिलितः प्राप्तः सन् भवाध्वयात्राम् संसारमार्गे सञ्चारं प्रेत्यभावपरम्पराम् हरसि निवर्त्तयसि । ( लौकिकोऽपि तैलिकः संयोगवशान्मार्गे दृश्यमानोऽशकुनतया यात्रां निषेधति, तैलिकस्याकस्मान्मध्येमार्गं दर्शने जाते जनो यात्रां रुणद्धीतिलोकाचारः ) ननु त्वमितः पूर्वं किमिति पशुपतिं नाद्राक्षीस्तव पशोस्तत्सन्निहितत्वादिति

---

भावसे सिद्धिको वशमें रखने वाले, केवल पशुओं पर ही नहीं पशुपाश-बन्धमोक्ष-पर अधिकार रखने वाले पशुपतिकी विभूतियाँ अपार हैं ।

हे जगत् स्वरूप तिलोंको पीसने ( पेरने ) वाले तैलिक, तुम जभी विधिवश मिलजाते हो कि संसार मार्गकी यात्रा रुक जाती है, हे पशुपते, हम पशुगण

न तव पशुपते विदन्ति पाशं पिहितदृशः पशवः परिभ्रमन्ति ॥६॥
अपि च ।

दुर्दम्भजम्भरिपुधर्षितधर्मदार-
रूपानुरूपवचसो वत गोतमस्य ।
कः श्रद्धीत गिरि किंतु भवच्छरीर-
सारूप्यलब्धविभवं वपुरेव मोक्षः ॥ ७ ॥

तत्राह—न तवेति । हे पशुपत, पिहितदृशः मायावरुद्धनयनाः नेत्रपिधानाय नेत्र-पार्श्वयोः कल्पितेनावरकेणच्छन्नदृशाश्च पशवो जीवाः वृषभाश्च परिभ्रमन्ति अतएव च तव पाशं मायां बन्धनरज्जुं च न विदन्ति न पश्यन्ति, अयमर्थः—यथा तैलिकः पशूनां नेत्रयोरावरकं विन्यस्य तैलपेषणकर्मणि तान्नियुञ्जानस्तान् भ्रमयति ते च समीपस्थितस्यापि तस्य तैलिकस्य पाशमपि न द्रष्टुं शक्नुवन्ति दूरे तस्य तैलिकस्य दर्शनं, तद्वदिमे जीवाः परमात्मना मायया ऽवरुद्धदृक्शक्तयः प्रेत्यभावपरम्परा-मनुभवन्ति न चाध्यक्षयन्ति समीपस्थितामपि मायां ततो दूरे परमात्मदर्शनकथेति । 'तैलिको विधिवशमिलित एव यात्रानिरोधकः' एतेन यदि कोपि तैलिकवाह्यमेव यानमारुह्य यात्रां करोति तदा न तद्दर्शनं यात्रायामशकुनं भवतीति शकुनहृदयं व्यञ्जितम् ॥ ६ ॥

दुर्दम्भजम्भेति । दुष्टो दम्भः पाखण्डः एव जम्भरिपुः इन्द्रः पक्षे दुष्टः दम्भः स्वाराज्याभिमानो यस्य तादृशो जम्भरिपुरिन्द्रः तेन धर्षिताः विनाशिताः धर्मा एव दाराः उपभोग्या यस्य तस्य, पक्षे तेन धर्षिताः सतीत्वभङ्गविधया दूषिता धर्मदाराः पाणिगृहीती भार्याऽहल्या यस्य तस्य, रूपानुरूपवचसः मुखवैलक्ष्यादि-रूपानुकूलवाचः गोतमस्य तदाख्यस्य अतिमूर्खस्य च गिरि वचने 'तदत्यन्त-विमोक्षोऽपवर्गः' इत्येवंप्रकारायामुक्तौ कः श्रद्धधातु विश्वसितु । ( तस्मात् )

तुम्हारे पाशको नहीं देखते हैं, तुमने हमारी आंखों पर पट्टियां बांध रखी हैं, हम केवल घूमाकरते हैं ॥ ६ ॥

दम्भस्वरूप इन्द्रने जिसकी धर्मस्वरूप पत्नीको दूषित कर दिया है, दम्भी इन्द्रने जिसकी धर्मपत्नीको दूषितकर दिया है, उसी स्थितिके अनुकूल वचन

स एव विरूपाक्षसारूप्यं नामापवर्गोऽभिषिच्यताम् ।

वैष्णवसिद्धान्तः—

**दहनमभिविशन्तु कर्मतन्त्राण्युपनिषदा सह दह्यतां विवेकः ।**
**मम तु भवतु भूतिभाजि भक्तिर्भगवति वारिदभासि वासुदेवे ॥८॥**

---

भवच्छरीरस्य पशुपतिदेहस्य सारूप्यमभेदस्तेन लब्धविभवं प्राप्तसामर्थ्यम् वपुः शरीरम् ( तादृशशरीरप्राप्तिः ) एव मोक्षः । यस्य गोतमस्य दम्भेन धर्मो दूषितः अथवा स्वाराज्यदृप्तेनेन्द्रेण पत्नी दूषिता, तेनोक्ते आत्यन्तिकदुःखविगमरूपे मोक्षे कस्यादरो जायताम् ? अतो भवच्छरीरतादात्म्यं प्राप्तस्यात एव चाधिगताबाधित-सामर्थ्यस्य वपुषः प्राप्तिरेव मोक्ष इत्यर्थः । गोतमेन अतिशयेन गौर्गोतमो महामूर्खः, तेन हि अत्यन्तदुःखविगमो मोक्ष उक्तस्तत्रात्यन्तिकत्वं नाम स्वसमानाधिकरण-दुःखासमानकालिकत्वम् । तादृशश्चायं गोतमोक्तो मोक्षः शिलात्वप्राप्तिलक्षणतयो-पहस्यते, तदुक्तं नैषधीयेऽपि—"मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम् । गोतमं तमवेक्ष्यैव यथा वित्थ तथैव सः ॥" इति ॥ ७ ॥

विरूपाक्षसारूप्यम्—शिवसाधर्म्यम् , इदं मुक्तिः पौराणिकानाम्—ते हि सायुज्य-सारूप्य-सालोक्य-सामीप्य नामभिरुच्यमानप्रकारचतुष्टयं मोक्षमाहुः । शैवा अपि पशुपतिसारूप्यं मोक्षमङ्गीकुर्वन्तस्तत्रैवान्तर्भावयन्ति स्वम् ।

दहनमभिविशन्विति । कर्मतन्त्राणि नित्यनैमित्तिककाम्यकर्मकलापप्रतिपाद-ककर्मकाण्डानि तत्साध्यानि फलानि वा कर्म मीमांसाशास्त्रोक्तानि दहनमभिविशन्तु अग्नौ दह्यन्ताम् । ( न मम तत्र स्वल्पोऽप्यादरः ) विवेकः चिदचिद्भेदरूपः उपनिषदा स्वजनन्या सह दह्यताम् भस्मसाद् भवतु । ( तत्रापि मम न स्पृहा ) मम तु भक्तिः अनुरागः भूतिभाजि सर्वसामर्थ्यसम्पदुपेते वारिदभासि नवघनद्युतौ

---

बोलने वाले गौतमकी बातों पर कौन श्रद्धा करे, हे पशुपते, आपके सारूप्यसे वैभवको प्राप्त करनेवाले शरीरकी उपलब्धि ही हमारा मोक्ष है ॥ ७ ॥

यह शिव-सारूप्य ही मोक्ष है; इसीका अभिषेक किया जाय ।

वैष्णवमत—

कर्मकाण्ड आगमें जांय, और आपका विवेक उपनिषदोंके साथ दग्ध हो, मेरी भक्ति भूतियुक्त मेघश्यामलवत् भगवान् वासुदेवमें ( सभी ) रहे ॥ ८ ॥

अपि च।

> वरं वृन्दावने रम्ये शृगालोऽपि भवाम्यहम्।
> गोतमोक्तां पुनर्मुक्तिं गोतमः प्रतिपद्यताम्॥ ९॥

स एष साम्राज्यमर्हति वैकुण्ठसालोक्यं नामापवर्गः।

आन्वीक्षिकी—अरे, स्वर्गप्रभेदेष्वपवर्गाभिमानिनोरुपासना भक्तिश्च निःश्रेयसोपाय इत्यापाततो भ्राम्यतोर्भवतोर्भविष्यति काले विज्ञानाधिकारः।

---

वासुदेवे कृष्णनामनि विष्णौ भवतु जायताम्। एतेन वैष्णवाभिमतमोक्षस्वरूपमुक्तम्, ते हि भक्तिमेव मोक्षसाधनमाहुः॥ ८॥

वरमिति। रम्ये रमणीये वृन्दावने अहं शृगालोपि वरं भवामि कामं जायेय, (परम्) गोतमोक्ताम् शिलात्वप्राप्तिलक्षणां मुक्तिं गोतमः अतिमूढ एव कश्चिन्मद्भिन्नः प्रतिपद्यताम्। गोतमोक्तमुक्तिप्राप्त्यपेक्षया वृन्दावने शृगालरूपेण वर्त्तनमपि मम मनाक् प्रियमिति भावः॥ ९॥

वैकुण्ठसालोक्यम्—विष्णुलोकप्राप्तिः। साम्राज्यमर्हति—मोक्षपदाभिषेकमधिकरोति। वैकुण्ठसालोक्यमेव मोक्ष इति स्वीकर्त्तुं युज्यत इत्याशयः। स्वर्गप्रभेदेषु—स्वर्गप्रकारेषु—पशुपतिसारूप्यविष्णुलोकाधिगतौ स्वर्गभेदावेव मोक्षः, (स्वर्गश्चाविशुद्धिक्षयातिशययोगितया हेय इत्युक्तमन्यत्र) अपवर्गाभिमानिनोः—स्वर्गभेदानेव अपवर्गतया स्वीकुर्वतोः। उपासना शिवस्य शिवसारूप्यरूपमोक्षप्रदेति पाशुपताः, भक्तिर्विष्णुलोकप्राप्तिरूपमोक्षप्रदेति वैष्णवास्तेषाञ्चापवर्गस्वरूपे भ्रमः—स्वर्गप्रभेदेऽपवर्गत्वज्ञानम्, तदुपायत्वज्ञानमपि तदनभ्युपाययोरुपासनाभक्त्योरिति बोध्यम्। कालेन—विलम्बेन। उपासनया भक्त्या च चित्तशुद्धिस्ततो विज्ञानमिति कालविलम्ब उक्तः॥

---

रमणीय बृन्दावनमें मैं भले ही शृगाल बनकर रहूँ, यह मुझे स्वीकारः है, परन्तु महामूर्ख (गौतम) का मोक्ष तो कोई महामूर्ख ही स्वीकार करेगा॥९॥

अतः वैकुण्ठसालोक्य ही अपवर्ग है, इसीका अभिषेक न्याय प्राप्त है।

आन्वीक्षिकी—अरे, तुम लोगोंने स्वर्गके प्रभेदोंको ही मोक्ष मान लिया है। तुमको भ्रम है कि उपासना और भक्ति अपवर्गके साधन हैं, कालक्रमसे तुमको भी मोक्षका अधिकार होगा।

( प्रविश्य । )

कर्मकाण्डः—अरे आङ्गिरसि, किं नाम विज्ञानम्, कस्मै प्रयोजनाय कल्पते । नित्यनैमित्तिकानुष्ठाननिषिद्धाननुष्ठानाभ्यां पापस्य काम्यकर्मसंन्यसनात्पुण्यस्यानुत्पत्तौ प्रागुत्पन्नयोस्तयोर्भोगात्प्रक्षय इति प्रव्रज्याकर्मणैव निःश्रेयसं साधयति । 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' श्रूयन्ते ।

---

अरे आङ्गिरसि—अङ्गिरसा प्रोक्ते न्यायविद्ये, ( इदमान्वीक्षिक्याः साधिक्षेपं संबोधनम्—तन्मतेऽरुचिं व्यञ्जयितुम् ) किं विज्ञानम्? कीदृशं विज्ञानस्य स्वरूपम्? कस्मै प्रयोजनाय कल्पते? किं फलं साधयति तद्विज्ञानम्? व्यर्थं तदिति भावः, अपवर्गस्तत्फलमिति तु मा वादीः, तस्य प्रव्रज्याजन्यत्वप्रसिद्धेरिति तदधिक्षेपोपोद्बलकम् । नित्यनैमित्तिकयोरनुष्ठानेन निषिद्धस्य अननुष्ठानेन अकरणेन च पापस्य ( अनुत्पत्तौ काम्यस्य फलविशेषाभिसन्धिना कृतस्य कर्मणः सन्न्यासात् त्यागात् पुण्यस्य अनुत्पत्तौ च प्रागुत्पन्नयोः प्रव्रज्यातः पूर्वं जातयोः तयोः पापपुण्ययोः भोगात्प्रक्षय इति प्रव्रज्याकर्म सन्न्यासः निःश्रेयसम् अपवर्गं साधयति, तदुक्तम्—कर्मणैवेति—कर्मणा प्रव्रज्याकर्मणा इति । पापपुण्ययोः सतोस्तद्भोगाय प्रेत्यभावपरम्परा जायते ततश्च निर्मोक्षः प्रसज्यते, तत्र यत्प्राक्तनं पुण्यं पापं वा तस्य प्रव्रज्यावस्थायां भोगेन समाप्तिः क्रियताम्, नित्यनैमित्तिककर्मणामनुष्ठानेन निषिद्धाननुष्ठानेन च पापोत्पत्तिः प्रतिबध्यताम्, कर्मणां फलाभिसन्धित्यागपूर्वकमनुष्ठानेन पुण्यमपि प्रतिबद्धोत्पत्तिकं क्रियतां तदेवं प्रव्रज्याकर्मणा सम्भवत्यपवर्गः, इत्थञ्चानेन प्रकारेणापवर्गो जनकादेरिति तदाशयः । प्रव्रज्याशब्दस्य कर्मफलत्यागरूपः सन्न्यासोऽर्थः, तस्यापवर्गसाधनत्वं श्रुतावप्युक्तम्—'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इति ।

---

[ प्रवेश करके ]

कर्मकाण्ड—अरी आन्वीक्षिकि, विज्ञान क्या है? उसका क्या फल है? नित्यनैमित्तिक कर्मोंके अनुष्ठान एवं निषिद्ध कर्मोंके अनुष्ठान एवं निषिद्ध कर्मोंके परित्यागसे पापकी उत्पत्ति नहीं हो पायेगी, काम्यकर्मके सन्न्याससे पापका उदय नहीं होगा, पूर्वोत्पन्न पाप तथा पुण्यका भोगसे क्षय हो जायगा, इस तरह प्रव्रज्या कर्म ही निःश्रेयस सिद्ध कर देगा, कर्मसे ही तो जनक आदि सिद्ध हुए ।

आन्वीक्षिकी—अरे निरीश्वरतया स्वतन्त्र, कथमेकेन जनुषा विना समाधिमनुत्पन्नकायारण्यो जन्मसहस्रोपभोग्यानि सुकृतदुष्कृतानि भुञ्जीत, भुञ्जानो वा कर्माशयैः कथं न सीव्येतासति विज्ञाने संन्यासिजनः। भाव, भावयतु भवानन्यः को नाम समाधेरगस्त्य इव समुद्रमाचामति, स इव दण्डकारण्यं सृजतीति।

पाशुपतवैष्णवसिद्धान्तकर्मकाण्डाः—नास्त्यवकाशोऽस्माकमिह।

( इति निष्क्रान्ताः। )

( ततः प्रविशति सेश्वरमीमांसाद्वयम्। )

---

निरीश्वरतया—ईश्वरानङ्गीकारेण। कर्मवादिनो हि मीमांसकाः कर्मैवादृष्टद्वारा फलं जनयन्नापरं देवं फलदातारमपेक्षते, कर्मजनितमदृष्टमेव भागधेयमुच्यते, आशुतरविनाशिभिरपि कर्मभिर्जनिते पापपुण्ये द्वारतां प्रपद्य फलं जनयत इति मन्यन्ते, तदाशयेनैव स्वतन्त्रतयोक्ता सा मीमांसाऽत्रेति भावः। जनुषा—जन्मना। अनुत्पन्नकायारण्यः—अकृतकायव्यूहः। कर्माशयैः—कर्मफलैः। सीव्येत बध्येत। यथाऽगस्त्य एव केवलं समुद्रं पातुं क्षमस्तथा समाधिरेव कायव्यूहजननद्वारा जन्मसहस्रोपभोग्यं सुकृतदुष्कृतराशिं भोजयितुं क्षमो नान्यः, यथा चागस्त्य एव दण्डकारण्यं जनयितुं प्रभुः तथैव च समाधिरेव केवलं कायव्यूहं जनयितुं प्रभुरिति।

सेश्वरमीमांसाद्वयम्—रामानुजमतम् शाङ्करमतञ्च ( उभयमपि व्यासकृतवेदान्तसूत्रमनुसरतीति सहोपस्थानमुक्तम् ) प्रथमा—रामानुजीया। विज्ञानसमु-

---

आन्वीक्षिकी—अरे निरीश्वर होनेके कारण स्वतन्त्र, एक जन्ममें विना समाधिके किसप्रकार विना कायव्यूहके अनेक जन्मभोग्य पुण्यपापका भोग कर लेगा, और पाप पुण्यभोग करनेपर फिर नये कर्मोंके बन्धन उत्पन्न होंगे ही जबतक कि विज्ञान नहीं होगा। तुम ही सोचो—समाधि-स्वरूप अगस्त्यके विना दूसरा कौन जन्मसहस्रभोग्य कर्मरूप समुद्रको शोष सकता है, और कौन दूसरा कायव्यूह रूप दण्डकारण्यकी सृष्टि कर सकता है?

पाशुपत—वैष्णव-कर्मकाण्ड—हमलोगोंका निर्वाह यहाँ नहीं है।

[ प्रस्थान ]

[ सेश्वर मीमांसा द्वयका प्रवेश ]

प्रथमा—सोऽयं विज्ञानसमुच्चितस्य कर्मणोऽपत्यमानन्दभोगो नामापवर्गः ।

**आनन्दोऽयमखण्डसुन्दरवपुर्मूढस्य संसारिणः**
**प्रच्छन्नो वसति स्म तेन हि नृणां नासीदसौ गोचरः ।**
**संन्यासेन कृताकृते प्रशमिते ज्ञानेन मोहे हते**
**धन्योऽनन्यधनो निरन्तरममुं मोक्षं जनो भोक्ष्यते ॥१०॥**

च्चितस्य—विज्ञानसहितस्य । अपत्यम्—जन्यम् । रामानुजमते विज्ञानसमुच्चितस्य कर्मणो मोक्षं प्रति कारणत्वमिति तथोक्तम् ।

आनन्दोऽयमिति । अयम् आनन्दः ( यस्य भोगोऽपवर्ग इति कथ्यते ) अखण्डम् अनवच्छिन्नं दुःखासम्पृक्तम् अत एव च सुन्दरं वपुः आकारो यस्य तादृशः, मूढस्य अविवेकिनः स्वं सर्वथा परमात्मभिन्नत्वेनावधारयतः संसारिणः जीवस्य प्रच्छन्नः सन्नपि अज्ञानपिहितत्वेनासन्निव प्रतीयमानः वसतिस्म, ( अतएवासौ विद्यमानोऽप्यानन्दो नृणां मनुष्याणां गोचरः अनुभवविषयो नासीत् । सन्न्यासेन सर्वकर्मफलत्यागेन कृताकृते भुक्ताभुक्तकर्मफले प्रशमिते शान्तिं गमिते सति ज्ञानेन भगवदाराधनजनितेन मोहेऽविवेके हते सर्वथा परमात्मभेदभ्रमे विनष्टे सति अनन्यधनः आनन्दातिरिक्तभोग्यसामग्रीविहीनः धन्यः पुण्यवान् जनः अमुम् आनन्दं भोक्ष्यते । सर्वथा परमात्मभेदभ्रमरूपमोहहतो जीवः सन्तमप्यानन्दमविन्दन् सन्न्यासेन भुक्ताभुक्तकर्मफले प्रशमं नीते सति भगवदाराधनजन्मना ज्ञानेन च सर्वथा परमात्मभेदभ्रमरूपे मोहे समापिते भोक्तव्यान्तराभावात्तमेव प्रच्छन्नभावेन स्थितमानन्दं भोक्ष्यत इति भावः ॥ १० ॥

प्रथमा—विज्ञान समुच्चितकर्मसे उत्पन्न आनन्दभोग ही अपवर्ग है ।

यह अविच्छिन्न रमणीय आनन्दमूढ संसारी पुरुषोंका प्रच्छन्न था, अतः संसारी उसे जान नहीं पाता था । संन्यासके द्वारा पाप-पुण्यके नष्ट हो जाने एवं ज्ञानके द्वारा मोहके नष्ट हो जाने पर यह संसारी धन्य हो जायगा, और निरन्तर उस आनन्दका उपभोग करता रहेगा ॥ १० ॥

द्वितीया—सखि, साधु मन्त्रयसे। स्वरूपलाभ एवायं पुरुषस्य यदानन्दाभिव्यक्तिर्नाम।

**निस्तीर्णः सरिति पुरा गिरा परेषामात्मानं दशममजीगणन्त भौताः।**
**आनन्दस्थगितनिजस्वरूपलाभः पुंसोऽभूदुपनिषदा प्रबोधितस्य ११**

---

द्वितीया—शाङ्करी ब्रह्ममीमांसा।

स्वरूपलाभः—आत्मस्वरूपावगमः। पुरुषो हि स्वं यदा सच्चिदानन्दब्रह्मरूपतया तत्त्वमस्यादिवाक्यैर्जानाति तदा तस्य स्वपरूलाभस्तदानन्दाभिव्यक्तिर्जायत इत्यर्थः।

निस्तीर्णमिति। भौताः पृथिव्यादिपञ्चभूतसमुदायभूताः तत्त्वज्ञानशून्याः मूर्खाः निस्तीर्णे सरिति कृतनदीसन्तरणं नदीं तीर्त्वा स्थितम् परेषां स्वदलवर्त्तिजनभिन्नानां तेनैव पथाऽऽयातानां जनानां गिरा दशमस्त्वमसीत्येवंरूपया आत्मानं दशमम् अजीगणन्त गणितवन्तः, तथैव उपनिषदा वेदान्तवाक्येन तत्त्वमसीत्यादिरूपेण प्रबोधितस्य पुंसो जीवस्य आनन्दस्थगितनिजस्वरूपलाभः आनन्दपिहितस्वस्वरूपोपलब्धिः अभूत्। दशमूढाग्रहात् क्वचिदन्यत्र देशे गत्वा वित्तमर्जयितुं प्रस्थिताः, मध्ये मार्गमागतां नदीं ते बाहुसहाया अतरन्, तीर्णनदीप्रवाहास्ते सर्वे वयं दशापि पारमायाता अथवाऽस्मासु नद्यां कोऽपि मग्न इति परीक्षार्थं स्वानवयं गणयन्, तत्र गणनक्रमे य एव गणयति स स्वं न गणयति एको द्वाविति क्रमेण स्वभिन्नानेव गणयित्वा नवेति निश्चिनोति, दशमस्य स्वेषु जलसमाधिं संभाव्य च रोदिति, अत्रैवावसरे तत्र सार्थान्तरमायातम्, स्थितिमवगत्य च तेषु नवागतेषु कश्चित्तानेकैकशो गणयित्वा दशमस्त्वमसीति दर्शितवान्, तद्वचसा च ते दशममात्मानं गणयित्वा सुस्थतां प्रतिपेदिरे, तथैव जीवः स्वरूपत एवानन्दमयः सन्नपि मायिकावरणवशादात्मनः स्वरूपमानन्दमविदन्नखिद्यत, तत्त्वमसीति श्रुत्या च

---

द्वितीया—सखि, तुम ठीक कहती हो, यह पुरुषका स्वरूप-लाभ ही तो है जिसे तुम आनन्दाभिव्यक्ति कहती हो।

मूर्खोंने नदीपार कर लेनेपर जैसे नवागत पान्थके कहनेपर अपनेको दशवाँ गिना, उसीतरह पुरुष उपनिषद्के कहनेसे अपने आनन्दमय स्वरूप की उपलब्धि करता है॥ ११॥

श्रुतिः—पुत्र धर्ममीमांसे, वत्से ब्रह्मविद्ये, शरीरपरतन्त्रो युवयोरानन्द-भोगः, न ह्यशरीरं प्रियाप्रिये स्पृशतः। तदयं जीवन्मोक्षोऽपवर्गस्य द्वारि तिष्ठतु ।[वत्से बादरायणि], त्वमेनमेकं दण्डं गृहीत्वा प्रतिपालय।

ब्रह्मविद्या—भगवति, किमेकेन दण्डेन। मयास्य प्रतिपालनाय गृहीतास्त्रयो दण्डाः। अयं पुनरानन्दमये परमात्मनि जीवस्य जीवभेदस्य वा लयो नामापवर्गः परमपदेऽभिषिच्यताम्।

---

त्वमानन्दमय इति बोधितः सन् आनन्दमयं स्वं प्रतीत्य कृतकृत्यतामाकलयतीति भावः। एतच्च शाङ्करमतसर्वस्वम् ॥ ११ ॥

धर्ममीमांसे—इदं रामानुजमतसंबोधनम्, तेन तन्मतस्याचारप्रधानत्वेन मोक्षव्यवस्थायामनर्हत्वं प्रतीङ्गितेन तदुपहासो ध्वनितः।

युवयोः—रामानुजमतशाङ्करमतयोः। शरीरपरतन्त्रः-शरीरायत्तः। तद्भवतीभ्यामपवर्गपदेनोच्यमानो न परममोक्षः किन्तु जीवन्मुक्तिदशैव, सोऽयं जीवन्मोक्षोऽपवर्गस्य द्वारि पूर्वकाले तिष्ठतु स्वीक्रियताम्।

अस्य—जीवन्मोक्षस्य। त्रयो दण्डाः—वाङ्मनःकायसंयमप्रतीकरूपतया स्वीक्रियन्ते त्रिदण्डिस्वामिभिरिति प्रसिद्धमेव।

लयः—स्वरूपच्युतिः। यथा समुद्रं प्राप्य नद्यः स्वरूपच्युतिलक्षणं लयं प्राप्नुवन्ति, तथा परे ब्रह्मणि जीवो लीयत इति सिद्धान्तस्मारकमिदम्। पाषाण इवेति। द्वौ सुपर्णौ इति श्रुत्या त्वदाहृतया यो भेदः प्रतिपादितः स कदापि न गलति, यथा जले क्षिप्यमाणोऽपि पाषाणः कदापि न गलति, तद्वदयं परापरब्रह्मणोरभेदो नोपपादयितुं शक्यते।

---

श्रुति—पुत्र धर्ममीमांसे, वत्से ब्रह्मविद्ये, तुम दोनों का ही यह आनन्दोपभोग शरीराधीन है क्योंकि शरीरके नहीं रहनेपर प्रिय-अप्रिय स्पर्श नहीं करते हैं। अतः तुम दोनोंने जिसे मोक्षमान लिया है वह जीवन्मोक्ष है, यह सदा अपवर्गके द्वारपर रहे। वत्से ब्रह्मविद्ये, तुम एकदण्ड लेकर इसकी रक्षा करना।

ब्रह्मविद्या—भगवति, एकदण्डकी क्या बात है? मैंने इसकी रक्षाके लिये लिये तीन दण्ड रख लिये हैं। आनन्दमय परमात्मामें जीव अथवा जीवभेदका लय क्यों न अपवर्ग पदपर अभिषिक्त कर लिया जाता है।

श्रुतिः—अयि सरले, सहजौ सखायाविमौ सुपर्णौ। ये नाम परापरे ब्रह्मणी तयोरेकतरस्यान्यत्र न युज्यते विलयः। भेदस्तु पाषाण इव पयसि पातितः प्रयत्नशतेनापि न विलीयते।

ब्रह्मविद्या—तदयमाम्नायविशुद्धो निरन्तरप्रेत्यभावनिदानस्य लिङ्गशरीरस्य विलयो भवत्याः प्रसादमर्हति।

आन्वीक्षिकी—भगवति श्रुते, को दोषः। सदा तिष्ठत्वयमग्रतो निर्वाणस्य।

श्रुतिः—बाढम्।

ब्रह्मविद्या—महानयमनुग्रहो भगवत्याः।

( प्रविश्य। )

सांख्ययोगौ—भगवति, बुद्धिवृत्तिनिगमादपगतविषयोपरागविप्लवायाश्चि-(ति)शक्तेः स्वरूपावस्थानं नाम विवेकख्यातिपुत्रोऽयमपवर्गपदेऽभिषिच्यताम्।

---

आम्नायविशुद्धः—वेदप्रतिपाद्यतया श्रद्धार्हः, सत्कुलजश्चेति ध्वनिः। निरन्तरप्रेत्यभावनिदानस्य—मरण–शरीरग्रहणे प्रति कारणतां गतस्य। लिङ्गशरीरस्य—पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि, पञ्चप्राणाः, मनो बुद्धिश्चेति सप्तदशतत्त्वात्मकस्य। अयमेव लिङ्गदेहोऽङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलादित्यादावुक्तो बोध्यः।

बुद्धिवृत्तीति। ( उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेस्तमोऽभिभवे

---

श्रुति—तुम बहुत सरला हो, यह पर तथा अपर ब्रह्म सहज सखा सुपर्ण हैं, इनमें किसी एकका दूसरेमें लय युक्त नहीं है। पानीमेंके पत्थलकी तरह इनका भेद तो मिटेगा नहीं।

ब्रह्मविद्या— विशुद्धवंशोत्पन्न अनवरत जन्म-मृत्युके कारण लिङ्गशरीरका विलयही आपकी कृपाका पात्र होवे।

आन्वीक्षिकी—भगवति, क्या दोष है ? यह सदा निर्वाणके आगे बैठा रहे।

श्रुति—अच्छी बात है।

ब्रह्मविद्या—यह आपका अनुग्रह है।

[ प्रवेश करके ]

सांख्ययोग—बुद्धिवृत्तिके अपगत हो जानेसे विषयोपरागके समाप्त होते

श्रुतिः—नन्वयं केवलस्यात्मनो निष्प्रकारकमालोचनं नाम ब्रह्मबोधोऽपवर्गस्य पितापि चपलप्राणतया नाभिषिच्यते।

आन्वीक्षिकी—आयुष्मन् निर्वाणनामन् अपवर्ग, इत इतः।

( ततः प्रविशत्यपवर्गः। )

अपवर्गः—भगवति श्रुते, कनिष्ठे भगवत्यान्वीक्षिकि, भगवत्यः प्रमाणविद्याः, विवेकपुत्रो निषेधगोत्रोऽहमपवर्गनामाभिवादये।

सर्वाः—वत्स, दीर्घतमेनायुषा वर्धस्व।

मीमांसा—वत्स, प्रभाकरालोकेन प्रत्यभिज्ञातोऽसि। सत्यमसि निषेध-

---

सति यः सत्त्वसमुद्रेकः सोऽध्यवसाय इति वृत्तिरिति ज्ञानमिति चाख्यायते ) तस्या बुद्धिवृत्तेः ( प्रमाणरूपायाः ) विगमात् अपगमात् अपगतो विषयोपरागः विषयरूपेण रूपणं स एव विप्लवः उपसर्गो यस्यास्तस्याश्चितिशक्तेः चेतनायाः स्वरूपेणावस्थानं यद्विवेकस्य सत्त्वपुरुषान्यतायाः ख्यातेर्बोधादुत्पद्यते, अत एवात्रापवर्गो विवेकख्यातिपुत्र उक्तः।

चपलप्राणतया—अचिरस्थापितया।

निषेधगोत्रः—एकविंशतिदुःखध्वंसलक्षणो मोक्षो नैयायिकानाम्, तत्र ध्वंसे नञर्थनिषेधसंक्रमात्तस्य निषेधगोत्रजत्वम्।

प्रभाकरालोकेन—सूर्यस्य प्रकाशेन, प्रभाकरनामकस्य मीमांसकैकदेशिनो मतेन

---

ही चितिशक्तिका स्वरूपावस्थान होता है, यह विवेकख्यातिका पुत्र है, इसीको अपवर्गके पदपर अभिषिक्त किया जाय।

श्रुति—यह केवलस्वरूप आत्माका निष्प्रकारक आलोचन अपवर्गका पिताभी हो तो चपलप्राणहोनेसे इसे अपवर्गपद पर अभिषिक्त नहीं किया जा सकता है।

आन्वीक्षिकी—आयुष्मन् निर्वाणनामक अपवर्ग, इधर आओ।

[ अपवर्गका प्रवेश ]

अपवर्ग—भगवति श्रुते, छोटी सरकार आन्वीक्षिकि, और प्रमाण विद्याओ, विवेकपुत्र निषेधगोत्र मैं अपवर्ग आपको नमस्कार करता हूँ।

सभी—वत्स, तुम्हारी दीर्घ आयु हो।

मीमांसा—वत्स मैंने तुमको प्रभाकरके आलोकसे देखा है, ठीक ही

गोत्रः, विवेकेन तु पालितः केवलमभूर्न पुनः कस्याप्यपत्यं भवसि।

अपवर्गः—मातः, अहमधुनैव जातः।

श्रुतिः—वत्स अपवर्ग, इह सिंहासने तावदुपविश। त्वामभिषेक्ष्यामः क्षेत्रज्ञनगराधिराज्ये।

( अपवर्ग उपविशति। )

सर्वाः—( रत्नकलशैरभिषिच्य निरूप्य। ) सत्यमेवंविधमखिलविषयातिशायिनमपवर्गस्य सुभगभावमवलोक्य जानीमः।

**बुद्धिः शरीरं विषयेन्द्रियाणि सुखं च दुःखैकनिकेतनानि।**
**विवेकिने केवलमात्मविद्याविद्योतितात्मा स्वदतेऽपवर्गः ॥१२॥**

---

मीमांसका हि नित्यसुखसाक्षात्कारो मोक्ष इति पूर्वपक्षं कृत्वा 'नह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वसाधनम्' इति चाभिधाय सुखःदुखोत्पन्नाभावमेव मोक्षं मन्यन्ते। तदनुसृत्य अत्यन्ताभावस्य नित्यसंसर्गाभावरूपतयाऽजन्यत्वं मत्वा 'न कस्याप्यपत्यमसि' इत्युक्तम्, 'प्रभाकरालोकेन' इति चानेनैव तात्पर्येण। अखिलविषयातिशायिनम्—सर्वविधानन्दापेक्षयोत्कृष्टम्।

बुद्धिः शरीरमिति। बुद्धिः प्रात्यक्षिकी षट्प्रकारा, शरीरमेकम्, गन्धरसरूपस्पर्शशब्दाः पञ्च पञ्चेन्द्रियाणां विषयाः, मनसश्च विषयो द्वेषेच्छाप्रयत्नस्वरूप

---

तुम निषेध गोत्र हो। विवेकने तो केवल तुम्हारा पालन किया है, तुम किसीके पुत्र नहीं हो।

अपवर्ग—माताओ, मैं तो अभी पैदा हुआ हूँ।

श्रुति—वत्स अपवर्ग, इस सिंहासन पर बैठो, हम तुम्हारा क्षेत्रज्ञ नगरके सम्राट् रूपमें अभिषेक करें।

[ अपवर्ग बैठता है ]

सभी—( रत्नकलशोंसे अभिषेक करके, देखकर ) इसतरह सकल विषय विलक्षण अपवर्गकी इस रमणीयताको देखनेपर हम समझ रही हैं कि—

बुद्धि, शरीर, विषय, इन्द्रिय और सुख, यह सारी वस्तुएं दुःखमय हैं, विवेकीको केवल आत्मविद्यासे विद्योतित अपवर्ग ही भला लगता है ( यह सत्य है ) ॥ १२ ॥

श्रुतिः—वत्स अपवर्ग, अभिषिक्तः क्षण दृष्टोऽसि। द्रक्ष्यमाणः प्रीणयस्यास्मान्। इच्छामि तव प्रतिष्ठेतिवृत्तस्य केनापि कविना प्रणीतं सारस्वतं प्रबन्धम्।

मीमांसा—प्रत्यक्षपरिकलितेऽर्थे किं कविप्रबन्धेन।

आन्वीक्षिकी—मा मैवम्।

**संकेतकेतनोन्मुखदयिताकरतर्जनीव कविसूक्तिः।**
**दृष्टमपि दर्शयन्ती रमयति चेतांसि चतुराणाम्॥ १३॥**

---

एक एवेति षड्विषयाः, इन्द्रियाणि घ्राणरसनचक्षुस्त्वक्श्रोत्राणि पञ्च, सुखं चकाराद् दुःखञ्चेति द्वे तदेवं संहत्यैकविंशतिरेतानि दुःखैकनिकेतनानि केवलदुःखमयानि इति अस्मादेव हेतोः विवेकिने केवलम् आत्मविद्याविद्योतितात्मा आत्मसाक्षात्कारप्रकाशितस्वरूपः। अपवर्गः दुःखध्वंसरूपनिर्वाणलक्षणः स्वदते रोचते, सर्वातिशायित्वादिति भावः॥ १२॥

द्रक्ष्यमाणः—भविष्यति काले साक्षात्करिष्यमाणः, एतेन तस्य नित्यतोक्ता।
तव प्रतिष्ठेतिवृत्तस्य—कथं तव चेत्रज्ञनगराधिराज्ये प्रतिष्ठा जातेति कथायाः। प्रबन्धं—केनापि कविना प्रणीतमिच्छामीत्यन्वयः॥

प्रत्यक्षपरिकलिते—स्वयं दृष्टे। किं कविप्रबन्धेन—नास्ति कविप्रबन्धस्य किमपि फलम्।

सङ्केतकेतनेति। संकेतकेतनोन्मुखी—संकेतगृहाभिमुखी या दयिता प्रिया तस्याः

---

श्रुति—वत्स, अभिषेकके बाद देखलिया, अब तो तुम बराबर दीखते रहकर हमें आनन्दित करते रहोगे। मैं चाहती हूँ कि तुम्हारे इस अभिषेककी कथा पर कोई कवि प्रबन्ध बना दे।

मीमांसा—जिसे हम आंखोंसे देखरही हैं उसमें प्रबन्ध की क्या आवश्यकता है।

आन्वीक्षिकी—नहीं, यह बात नहीं है—

कवियों की सूक्ति संकेत-भवनकी ओर जाती हुई दयिता की तर्जनी अङ्गुलीकी तरह दृष्ट वस्तुको भी दिखलाती हुई चतुरोंके चित्तको आनन्द प्रदान करती है॥ १३॥

( श्रुतिः सरस्वतीमनुध्यायति । )

( ततः प्रविशति सरस्वती । )

सरस्वती—साधु रे नवनवसारस्वतसंसारनिर्माणनूतनप्रजापतयो वात्स्यायनवंशवर्धना कवयः,

न स्पृष्टाः कुशकर्कशैस्त्रिभुवनस्रष्टुः करैरष्टभिः
श्रीभर्तुर्न कदर्थिताः करुणया कोपेन वा धूर्जटेः ।
ते स्वप्नेऽपि मया पदैर्न मृदिताः सत्यं रसेभ्यः शपे
युष्माभिर्विषयेषु येष्वभिनवः पन्था ममोन्मीलितः ॥१४॥

---

करतर्जनी निर्देशिकाङ्गुलिः इव कविसूक्तिः दृष्टमपि दर्शयन्ती चतुराणां सहृदयानां चेतांसि रमयति प्रसादयति । यथा सङ्केतगृहाभिमुखचलितायाः प्रेयस्यास्तर्जनी सङ्केतगृहं प्रियेणासकृद्दृष्टमेव दर्शयति अथापि सा प्रियस्य प्रियासाम्मुख्यादिसूचनविधया परमानन्दं सृजति, तथैव कविसूक्तिरितिवृत्तं पूर्वतो जानतोऽपि जनांस्तन्निवेदनप्रकाररामणीयकेन चमत्करोति—उक्तिविशेषस्यैव चमत्कारजीवातुत्वेन स्वीकारात् । नहि कवय इतिवृत्तमात्रमुपनिबध्नन्ति, इतिहासादेरेव तत्सिद्धेः, अतः कवीनामुक्तेर्न प्रत्यक्षदृष्टेऽपि वस्तुनि वर्ण्यमाने नैरर्थक्यमुत्प्रेक्ष्यमिति भावः ॥ १३ ॥

नवनवेति । नवनवानाम् नित्यनूतनानाम् सारस्वतसंसाराणाम् काव्यप्रबन्धजगताम् निर्माणे नूतनाः प्राचीनाद् ब्रह्मणो भिन्नाः । वात्स्यायनवंशवर्द्धनाः—वत्सवंशसन्तानभूताः ।

न स्पृष्टा इति । ( हे वात्स्यायनवंशजाः कवयः ) युष्माभिः येषु विषयेषु अपवर्गप्रभृतिषु पारमार्थिकपदार्थेषु देशेषु च अभिनवः केनाप्यप्रकाशितपूर्वः पन्थाः

---

[ श्रुति सरस्वती का ध्यान करती है ]

[ सरस्वतीका प्रवेश ]

सरस्वति—साधु, नवीन नवीन सारस्वत जगत्के निर्माणमें नूतन ब्रह्मा वात्स्यायन वंश जात कविगण, ( धन्यवाद ! ) कुशकर्कश ब्रह्माके आठ हाथोंने जिन्हें नहीं छुआ है, भगवान् विष्णुकी कृपाने जिन्हें कभी नहीं कदर्थित किया है, और महादेवका क्रोध भी जिनका कुछ नहीं बिगाड़ सका है, जिनपर

( निरूप्य । ) इयमपूर्वा कापि पद्धतिः ।

**कथमेकतः शशधराश्मकर्कशा क्षरति क्षपाकृदुदयादिवामृतम् ।**
**परतः पयोरुहपलाशपेलवा परिवाहिणं रसमसौ निषिञ्चति ॥ १५ ॥**

मार्गं मम उन्मीलितः प्रकाशितः कृतश्च ते विषयाः कुशकर्कशैः अनुष्ठानासक्ततया कुशसम्पर्कवशात् कठोरतां गतैः त्रिभुवनस्रष्टुः विधातुः अष्टभिः करैर्न स्पृष्टाः ( चतुर्मुखतया ब्रह्मणोऽष्टौ कराः, तैर्ये न स्पृष्टाः अतश्च सुतरां तैर्न रचिताः, रचितत्वे स्पर्शस्यापरिहार्यत्वात् ) श्रीभर्त्तुः विष्णोः करुणया पालनपरिणतिभाजा न कदर्थिताः न दूषिताः ( विष्णुनापि रक्षां न प्रापिताः ) धूर्जटेः शिवस्य कोपेनापि वा न कदर्थिताः न धर्षिताः ( शिवेनापि संहृताः ) सत्यम् रसेभ्यः सारस्वतसाम्राज्ये सर्वाधिकहृद्येभ्यः शृङ्गारादिरसेभ्यः शपे तानुद्दिश्य शपथङ्करोमि ते विषयाः मया स्वप्नेपि पदैः सुप्तिङन्तलक्षणैः न मृदिताः न क्षुण्णाः पदसंचारेण वा मालिन्यं प्रापिताः । न ब्रह्मणा रचिता न विष्णुना पालिताः नापि वा शिवेन संहृता अत एव त्रिजगद्विलक्षास्त्वया प्रदर्शिता मम मार्गा येषु कदापि मया चरणन्यासोऽपि न कृत इति रसशपथपूर्वकं मया कथ्यत इति ॥ एतेनातिनूतनविषयप्रकाशकतया वात्स्यायनवंशवर्द्धनानामेषां कवीनां नूतनप्रजापतित्वं पूर्वमुक्तं समर्थितम् ॥ १४ ॥

कापि पद्धतिः—कोपि मार्गः ।

कथमेकत इति । असौ युष्माभिः प्रकाशितो मम नवः पन्था एव पद्धतिः एकतः एकत्र भागे शशधराश्मकर्कशा चन्द्रकान्तशिलावत् कठोरा, क्षपाकृतः चन्द्रस्य उदयात् इव अमृतं क्षरति सुधां वर्षति, परतः अन्यत्र भागे च पयोरुहपलाशपेलवा कमलपत्रसुकुमारतनुः ( असौ ) परिवाहिणम् प्रवाहशालिनं रसं

---

मैंने स्वप्नमें भी पैर नहीं डाला था, ऐसे मेरे मार्ग आपने नये विषयोंमें प्रशस्त किये हैं, मैं यह रसकी शपथके साथ कहती हूँ ॥ १४ ॥

( देखकर )

वस्तुतः यह अपूर्व पद्धति है ।

एक ओर यह चन्द्रकान्त मणिकी तरह कठिन होकर भी चन्द्रोदय होनेसे अमृतकी वृष्टि करती है, दूसरी ओर कमलदलकी तरह कोमल होनेसे प्रवाहशील रसकी सृष्टि करती है ॥ १५ ॥

तन्नूनममीषामपारसारस्वतसंसारसरणिपरिकर्मनिर्माणमर्मविदां विदुषां वात्स्यायनवत्सानामेकतमस्य प्रातिभोऽयं पन्थाः । ते हि माध्यंदिनमूर्धन्याः

**सुभाषितेर्ष्याकलुषसुलोचनविषानलैः ।**
**फणां दहन्ति शेषस्य ततः फणदहा मताः ॥ १६ ॥**

---

शाश्वतं सात्त्विकम् आनन्दम् कथं निषिञ्चति उत्पादयति । नूतनां युष्माभिः प्रदर्शिता दार्शनिकविषयाणां सरसया पद्धत्योपनिबन्धनरूपा कविता पद्धतिः एकतः कठोरत्वेन प्रतिभासमानापि यथा कठोरा चन्द्रकान्तशिला चन्द्रोदयादमृतं स्रावयति तथैव सात्त्विकमानन्दं ददाति, अपरतश्च काव्यतया कोमलानां पदानां बन्धवशात्प्रासादिकमर्थं प्रवाहयतीति धन्या यूयं वात्स्यायनवंशवर्द्धना इति भावः ॥ १५ ॥

अपारेति । अपारः अनन्तः सारस्वतसंसारः कविताजगत् तस्य सरणेः पद्धतेः परिकर्मणः संस्कारस्य मर्म रहस्यं विदन्ति तेषाम् वात्स्यायना एव वत्साः ( सरस्वत्याः प्रीतिपात्रतया वत्सत्वमुक्तं तथा ) प्रातिभः—कल्पनोदितः । माध्यन्दिनमूर्धन्याः—यजुर्वेदस्य शाखासु एका माध्यन्दिनी शाखा तामधीयते ये ते माध्यन्दिनाः तन्मूर्धन्याः तेषु मुख्याः ।

सुभाषितेति । सुभाषितस्य सूक्तः ईर्ष्यया—अहं त्वदपेक्षया—साधीयः सुभाषितमुदाहरामि, त्वं नैव मत्सुभाषितापेक्षया साधीयः सुभाषितमुदाहरसीत्येवंरूपया वा परोत्कर्षाक्षमया आविले कलुषे अस्वाभाविकवर्णतां गते ये लोचने स्वनयने तयोर्विषानलैः कोपज्वालाजालैः शेषस्य पन्नगपतेस्तदवतारभूतस्य पतञ्जलेर्वा फणं शिरोदेशं दहन्ति सन्तापयन्ति ततः तस्मादेव कारणात् ( एते वात्स्यायनवंशजन्मानः ) फणदहाः इति मताः कथिताः । अन्वर्थाभिधायिन्या संज्ञयाऽभिहिता इति ॥ १६ ॥

---

निश्चय ही अपार सारस्वत संसार मार्गकी निर्माण क्रियाके मर्मज्ञ वात्स्यायन वंशज विद्वान् गणमेंसे किसी एक विद्वान्की ही प्रतिभाका यह चमत्कार है। माध्यन्दिनी शाखाके ब्राह्मणोंमें अग्रगण्य वह—

सुभाषितकी ईर्ष्याके कारण कलुषित अपनी आँखोंके विषानलसे शेषनागका फण दग्ध किया करते हैं इसीसे 'फणदहा' कहे जाते हैं ॥ १६ ॥

श्रुतिः—वत्से आन्वीक्षिकि, सत्यमाह गिरां देवी। भवन्त्येवंविधा एव फणदहद्विजाः। पश्य।

निगमसरसोमाने दण्डाः प्रमत्तसरस्वती-
स्खलनपतनारम्भे हस्तावलम्बनयष्टयः।
सुकृतसदनोपादानं ते भवन्ति भजन्ति ये
रुचिपतिकवेर्वंशस्तम्बप्ररोहकरीरताम् ॥ १७ ॥

सरस्वती—(उपसृत्य।) नमोऽस्तु तुभ्यं पाठ्यगीताभिनयरसानामुत्प-

---

एवंविधाः—सुभाषितेन शेषस्यापीर्ष्यामुत्पादयितुं क्षममाणाः।

निगमसरस इति। ये रुचिपतिकवेः वंशरूपस्य स्तम्बस्य करीरतां प्ररोहरूपताम् भजन्ति रुचिपतिकवेर्वंशे जायन्ते ते निगमसरसः वेदरूपस्य सरोवरस्य माने अगाधतापरिच्छेदे दण्डाः दण्डरूपा भवन्ति, (अर्थाद् वेदसरोऽवगाह्य तदीयं तलं प्रविश्य च तत्परिच्छेदं कर्त्तुं समर्था जायन्ते) प्रमत्तायाः अनवधानतां गतायाः सरस्वत्याः स्खलनं मार्गादीषदपसरणं पतनं नितरां भूमिसङ्गमस्तयोः प्रासयोः हस्तावलम्बनयष्टयः स्खलनपतनयोर्निवारणाय दण्डरूपाः भवन्ति। (यथाऽनवधानतायां स्खलने पतने च प्रसक्ते सति यष्टिरालम्बनार्था भवति, तद्वदेतेऽपि वृद्धायाः अत एव चानवधानायाः सरस्वत्याः स्खलनपतनयोर्निवर्त्तका भवन्तीत्यर्थः) ते च सुकृतसदनोपादानम पुण्यभवननिर्माणसामग्रीप्रचयस्वरूपा भवन्ति, पुण्यं तानेवावलम्ब्य तिष्ठतीत्याशयः। 'वंशाङ्कुरे करीरोऽस्त्री' इत्यमरः ॥ १७ ॥

पाठ्यगीताभिनयरसानामुत्पत्तये—पाठ्यम्, गीतम्, अभिनयम्, रसञ्चेति

---

श्रुति—वत्से आन्वीक्षिकि, सरस्वती ठीक कह रही है, 'फणदहा' वंशके ब्राह्मण ऐसे ही होते हैं—

रुचिपतिकविके वंश रूप वंशके जो कोयल (बच्चे) होते हैं वह निगम रूप सरोवरकी गहराई नापने वाले मानदण्ड, असावधान सरस्वतीके पतनके उपस्थित होनेपर उनके हाथोंको अवलम्बन देनेवाली यष्टि, एवं सुकृतिरूप भवनके उपादान हुआ करते हैं ॥ १७ ॥

सरस्वती—(समीप जाकर) पाठ्य गीत एवं रसोंकी उत्पत्तिके स्थान,

त्तये गृहीतऋक्सामयजुरथर्वमूर्तये भगवत्यै श्रुतये।

श्रुतिः—स्वदन्तां सामाजिकजनाय तव भावा रसाश्च।

सरस्वती—भगवति निखिलवाङ्मयलतासंतानमूलशलाके, कथमनुध्यानेन पावितोऽयं जनः।

श्रुतिः—वत्से, प्रतिष्ठितमपवर्गं सरसेन वाक्यप्रबन्धेनोपश्लोकयितुमादिश क्वापि देशे कमपि कवयितारम्।

सरस्वती—नान्यत्र निमिजनपदादीदृशाः कार्कश्यकोमलताकरम्बितप्रबन्धकवयः संभवन्ति। पश्य।

---

सर्वमपि नाटकेऽपेक्ष्यमाणं सामग्रीनिवहं त्वमुपस्थापयसीति त्वां प्रति प्रणतोऽस्मीत्याशयः। पाठ्याद्युपस्थापनसामर्थ्यं च श्रुतेर्ऋगादिस्वरूपधारणजनितमेवेत्याह—गृहीतेति। तदुक्तम्—'जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव। यजुर्वेदादभिनयान् रसानाथर्वणादपि' इति नाट्यशास्त्रे।

स्वदन्ताम्—रोचन्ताम्।

मूलशलाका—आधारस्तम्भः। यथा लताः कमप्याधारस्तम्भमाश्रित्यैव वर्द्धन्ते ततः पुष्यन्ति फलन्ति च तथैव निखिलमपि वाङ्मयं त्वामाधारीकुरुते इत्याशयः। अनुध्यानेन पावितः—स्मृत्याऽनुकम्पितः।

प्रतिष्ठितम्—क्षेत्रज्ञनगराधिराज्येऽभिषिक्तम्। उपश्लोकयितुम्—वर्णयितुम्।

कवयितारम्—कविम्।

निमिजनपदादन्यत्र—मिथिलाऽतिरिक्ते देशे। [ निमिराद्यो मिथिलाराजः ]

---

ऋक् यजु साम अथर्व मूर्त्ति भगवती श्रुतिको मेरा नमस्कार।

श्रुति—तुम्हारे भाव तथा रस सामाजिक जनोंको भला लगें।

सरस्वती—समस्त वाङ्मय स्वरूपलताओंके आधारस्वरूपे श्रुते, आपने मुझे स्मरणद्वारा क्यों पवित्र किया है?

श्रुति—वत्से, साम्राज्यारूढ अपवर्गकी वाक्यप्रबन्धद्वारा स्तुति करनेके लिये किसी कविको तुम आज्ञा देदो।

सरस्वती—मिथिलाके अतिरिक्त देशमें कठिनता तथा कोमलतासे समभावमें पूर्ण प्रबन्धके निर्माता कवि नहीं होते हैं। देखिये—एक भागमें गाढ़ा-

गाढापगूढदयितापुलकाङ्कितार्धो
निष्टप्ततैलपरिमृष्टतदन्यभागः ।
सीरध्वजो नरपतिः प्रबभूव येषां
ते तादृशान्प्रसुवते विदुषो विदेहाः ॥ १८ ॥

तेषामपि मध्ये माध्यंदिनचरणगुरवो वत्सवंशवर्धनाः फणदहद्विजा एव जानते समाधिजमथ च ध्वनिजन्मानमानन्दमेकपदेऽनुभावयितुम् ।

---

कार्कश्येति । कार्कश्यमर्थगाम्भीर्यम्, कोमलता सरसता च, ताभ्यां करम्बितस्य मिश्रितस्य प्रबन्धस्य कवयः निर्माणे यशस्विनः ।

गाढोपगूढेति । येषाम् विदेहानाम् मिथिलानामख्यातजनपदविशेषाणाम् ( देशवाचकतया बहुवचनं वङ्गाः कलिङ्गा इतिवत् ) नरपतिः राजा सीरध्वजो नाम जनकः ( सीतापिता ) गाढोपगूढायाः दृढालिङ्गितायाः दयितायाः वध्वाः पुलकैः रोमाञ्चितैः अङ्कितम् अर्धम् देहार्धभागो यस्य तादृशोऽथ निष्टप्तेन अतिसंतापितेन तैलेन परिमृष्टः लिप्तः तदन्यभागः देहापरभागो यस्य तादृशः प्रबभूव जायते स्म, ते विदेहाः तादृशान् कठिनसरसकाव्यनिर्माणरसिकान् विदुषः प्रसुवते जनयन्ति । यस्याः मिथिलामह्या राजा जनको गाढोपगूढाया दयिताया रोमाञ्चैरङ्कितमर्धं देहस्य भागं धारयन्नेव तदन्यदेहभागे सुतप्तं तैलमपि लेपयन्नविकृतचित्त एवावर्त्तिष्ट, मुक्तत्वेन देहाभिमानराहित्यात्तैलतप्ते वनितालिङ्गिते वा देहभागे समवर्त्तित्वात्, तस्यां मिथिलायामेव एकत्रांशे काठिन्यस्पृशः परत्र रसच्युतश्च प्रबन्धानुत्पादयितुं प्रभवन्तः ज्ञानरसमिश्रप्रबन्धविरचनक्षमाः कवयो जायन्ते यथा राजा तथा प्रजेति स्मृतेरिति भावः ॥ १८ ॥

तेषाम्—मिथिलाभवानाम् । माध्यन्दिनचरणगुरवः—शुक्लयजुर्वेदस्य वाजस-

---

लिङ्गनमें बंधी रमणीके रोमाञ्चोंसे युक्त होकर, दूसरे भागमें गरम तेलका लेप करने वाला सीरध्वज जहाँका राजा था, वह मिथिलादेश वैसे ही कठिनकोमलकाव्यनिर्माण-यशस्वी कवियोंको उत्पन्न करता है ।

उन मैथिल कवियोंमें भी वत्सवंसज 'फणदहा' ब्राह्मण ही एक पदमें समाधिजन्य एवं ध्वनिजन्य आनन्दका अनुभव करवानेकी कला जानते हैं ।

श्रुति—तत्र वंशे विद्यत एव विद्यानिधिः पीताम्बरो नाम, यः किल—

प्रकृतिगहने तन्त्रे वैशेषिके विवृतिं व्यधा-
दकुरुत चतुर्वर्गव्याख्यामृतानि च भारते ।
भरतवचसां तत्त्वख्यात्यै निबन्धमभाषत
व्यतनुत तथा तिस्रो वाणीविलासकविः कथाः ॥ १९ ॥

सरस्वती—(सास्रम् ।) देवि, मुषिता वयममुना मध्यमं भुवनमपजहता वत्सेन वत्सवंशवर्धनेन विद्यानिधिना ।

---

नेयिशाखाया अध्यापकाः । फणदह्द्विजाः—साम्प्रतिके व्यवहारे 'फन्नहवार' संज्ञया प्रथिता मैथिलब्राह्मणाः । ध्वनिजन्मानम्—ध्वनिना व्यञ्जनाख्येन शब्दार्थ-व्यापारविशेषेण जननीयं विलक्षणचमत्कारभुवम् । समाधिजम्—चित्तनिग्रहजन्यं विज्ञानप्रभवं वा पारमार्थिकम् । एकपदे—सहैव एकत्र शब्दे । अनुभावयितुम्—लोकज्ञानगोचरतामानेतुम् । फन्नहवारवंश्या एव कवयस्तादृशान्प्रबन्धान्निर्मातु-मीशते यत्रैकपद एव पारमार्थिकज्ञानजन्मा ध्वनिजन्मा च लोकप्रथितोऽर्थो लोका-नुभवगोचरतां प्रतिपद्य स्वदते लोकेभ्य इति भावः ॥

प्रकृतिगहन इति । वाणीविलासकविः विद्यानिध्यपरनामा पीताम्बरः प्रकृति-गहने स्वभावतो दुर्बोधे वैशेषिके तन्त्रे काणाददर्शने विवृतिं व्याख्याम् व्यधात् विरचितवान्, भारते महाभारते च चतुर्वर्गव्याख्यामृतानि चत्वारि पृथक् पृथक् धर्मार्थकाममोक्षप्रतिपादकानि व्याख्यानानि अकुरुत विरचितवान् । भरतवचसां नाट्यशास्त्रस्वरूपाणां तत्त्वख्यात्यै वास्तविकस्यार्थस्य प्रसिद्ध्यै निबन्धम् अभाषत भाष्यरूपेण निर्मितवान्, तिस्रः कथाः कथानामकान् गद्यग्रन्थप्रभेदान् व्यतनुत अकरोत्, अथवा कथाः वादजल्पवितण्डारूपाः कथा विस्तारितवान् । एतेनास्य वाणीविलासकवेः सर्वत्राप्रतिहतप्रसरप्रतिभासम्पन्नत्वमुक्तम् ॥ १९ ॥

मुषिताः—वञ्चिताः । मध्यमं भुवनम्—मर्त्यलोकम् । अपजहता—त्यजता ।

---

वाणी विलास कविने स्वभावतः दुरूह वैशेषिक तन्त्रमें विवृति की रचना की, महाभारत पर धर्म-अर्थ-काम-मोक्ष परक चार व्याख्यायें लिखीं, नाट्यशास्त्रकी व्याख्या द्वारा उसका तत्त्व प्रकाशित किया, और तीन कथायें लिखीं ॥ १९ ॥

सरस्वती—(आँसू भरकर) देवि, वत्सवंशभूषण वत्स विद्यानिधिके

अशरणमभूद् ब्राह्मं वर्चो निरिन्धनमैधत

ज्वर इव भुवो देव्या दुःसंवरः कलिसंज्वरः।

अभजत कथाशेषो धर्मः परैरुपहास्यता-

मकुरुत यदा विद्वान्विद्यानिधिर्द्विगुरुं दिवम् ॥२०॥

आन्वीक्षिकी—भगवति, सत्यमेषा मुषिता तपस्विनी। पश्य।

अवितथवचोबन्धे चिन्तावशंवदवाङ्मये

विदति निखिला विद्या विद्यानिधौ दिवमीयुषि।

---

अशरणमिति। यदा विद्यानिधिः पीताम्बरः दिवं स्वर्गम् द्विगुरुम् गुरुद्वय-युताम् (एको वृहस्पतिर्गुरुः पूर्वत एवासीदयं च समुपस्थितो द्वितीयो वृहस्पतिसमो गुरुरिति द्यौर्द्विगुरुरजायत) अकुरुत कृतवान्, (तदा) ब्राह्मं वर्चः ब्रह्मवर्चसम् (ब्राह्मणाचारः) अशरणम् आश्रयहीनम् अभूत्, भुवो देव्याः दुःसंवरः दुर्निवारः कलिसञ्ज्वरः कलिसन्तापः (पापपीडा) निरिन्धनम् विनैवेन्धनम् ऐधत अवर्द्धत। (पृथिव्यां पापानि ववृधिरे) कथाशेषः केवलायां चर्चायामेव स्थितो (नतु व्यवहारे) धर्मः परैः अधर्मैः उपहास्यताम् निन्द्यताम् अभजत प्राप्तवान्। ब्रह्मवर्चसस्य लोपः पापस्याभ्युदयो धर्मस्य क्षतिश्च तस्मिन्मर्त्यलोकाद् गतेऽजायतेत्यर्थः, तेन च तस्य ब्रह्मवर्चसशालित्वपापविरोधित्वधार्मिकत्वानि व्यञ्जितानि ॥ २० ॥

अवितथेति। अवितथः तत्त्वस्पर्शितया मिथ्यासम्पर्कशून्यः वचोबन्धो वाक्य-प्रबन्धो यस्य तादृशे चिन्तायाः ध्यानस्य वशंवदं वशेस्थितं वाङ्मयम् निखिलमपि शास्त्रजातं यस्य तथाभूते, निखिला विद्याः आन्वीक्षिकी-त्रयी-वार्त्ता-दण्डनीति-

---

मर्त्यलोकसे चले जानेके कारण हम लुट चुकी हैं।

ब्रह्मवर्चस निराश्रय हो गया, पृथ्वीका दुःशम खेदानल बिना इन्धनके ही प्रज्वलित हो उठा, धर्म कथाशेष होकर शत्रुओंके उपहासका पात्र हो गया जबकि विद्यानिधि पण्डित ने स्वर्ग जाकर स्वर्गको दो गुरुओंसे युक्त किया ॥२०॥

आन्वीक्षिकी...भगवति, सचमुच यह लुट गई है। देखिये—

सार्थक वाक्यरचनाके उपस्थापक एवं चिन्तामात्रसे जिसके आगे वाङ्मय

इयमशरणा वाचां देवी लभेत कमाश्रयं
विदितमथवा कृष्णद्वैपायनो भुवि जीवति ॥२१॥

श्रुति—सत्यमेष न विशिष्यते बादरायणो विद्यानिधेः पीताम्बरात्। तथा हि तस्य

न धुतसमया न ग्राम्या न च्युतक्रमसंस्कृति-
र्न रसरहिता नाश्लीला न प्रसिद्धिविरोधिनी।
न जनितपरोद्वेगा न स्तोकमप्यनृते स्थिता
प्रकृतिगदिताप्यासीद्विद्यानिधेर्विबुधस्य वाक् ॥२२॥

लक्षणाः विदति जानति तस्मिन् पीताम्बरनामके विद्यानिधौ दिवम् स्वर्गम् ईयुषि गतवति सति इयम् अशरणा आश्रयहीना वाचां देवी सरस्वती कम् आश्रयम् आस्पदं स्वावासयोग्यम् लभेत भजताम्, अथवा विदितं ज्ञातम्—कृष्णद्वैपायनः व्यासो भुवि वर्त्तते (चिरजीवितया) संसारेऽस्ति। तत्त्वभाषी ध्यानमात्रोपस्थित-समस्तशास्त्रजातसर्वविद्याज्ञाता च पीताम्बरो मृतस्तदियं सरस्वती कमाश्रयत्विति यावच्चिन्त्यते तावत् स्मृतिमारोहत् चिरजीविनो व्यासस्य भुवि विद्यमानत्वम् इति। एतेन तस्य व्याससादृश्यं व्यञ्जितम् ॥ २१ ॥

न विशिष्यते—नाधिकगुणो भवति।

न धुतसमयेति। विबुधस्य पण्डितस्य विद्यानिधेस्तदुपनामकस्य पीताम्बरस्य प्रकृतिगदिता अनायासोक्ता अपि वाक् बाणी न धुतसमया न कविप्रसिद्धि-विरोधिनी, न ग्राम्या न ग्राम्यतादोषदुष्टा, न च्युतक्रमसंस्कृतिः न च्युतक्रमा न दुष्क्रमतादोषयुता नापि च च्युतसंस्कृतिः न व्याकरणलक्षणहीनतया च्युत-संस्कारताख्यदोषपूर्णा, न रसरहिता न नीरसा, न प्रसिद्धिविरोधिनी न प्रसिद्धि-विरुद्धताख्यदोषयुता, न जनितपरोद्वेगा न श्रवणकटुत्वदोषयुक्ततया परोद्वेगजननी,

हाथजोड़कर उपस्थित होता है ऐसे सकल विद्याज्ञाता विद्यानिधिके स्वर्गगामी हो जानेपर यह अशरणा सरस्वती किसके आश्रयमें रहेंगी, हाँ, ज्ञात हुआ, कृष्णद्वैपायन अभी पृथ्वीपर जीवित हैं ॥ २१ ॥



श्रुति—ठीक ही कृष्णद्वैपायन विद्यानिधि पीताम्बरसे बढ़कर नहीं हैं।

सरस्वती—भगवति, न केवलमहमेव निःशरणतया सीदामि। यावदसौ सर्वोऽपि गुणगण एकं समुदायस्थानमलभमानो विप्रकीर्णो यतः कुतश्चिदवतिष्ठते। किं च।

श्रुतमविनयः शौचं दम्भो दमं मतिविभ्रमः
शममलसता दानं गर्वः कुलं प्रबलो मदः।

---

स्तोकमपि स्वल्पभावेनापि अनृते मिथ्याभावे न स्थिता आसीत्। अर्थात् विद्यानिधिना यदनायासमपि कथ्यतेस्म तत्र कोऽपि दोषो न प्राप्यते स्म। अनेन तस्य वश्यवाक्त्वमुक्तम् ॥ २२ ॥

निःशरणतया—आश्रयराहित्येन। सीदामि—कष्टं भजामि। समुदायस्थानम्-सहभावेनावासयोग्यं पात्रम्। विप्रकीर्णः—असंहतभावं गतः। यतः कुतश्चित्—यत्र कुत्रचित्।

श्रुतमविनय इति। विद्यानिधौ तदाख्यया प्रसिद्धे पीताम्बरे इतः अस्मात् संसारात् दिवम् स्वर्गलोकम् ईयुषि गतवति श्रुतं शास्त्राध्ययनम् अविनयः औद्धत्यम्, शौचम् दम्भः, दमम् मनोनिग्रहम् मतिविभ्रमः वैमत्यम्, शमम् बाह्येन्द्रियाणां विषयेभ्यो निवृत्तिम् अलसता आलस्यम्, दानम् गर्वः, कुलम् सत्कुलप्रसूतत्वम् प्रबलो मदः चित्तोद्रेकः, (निहन्ति) तदेवं समुदायतो विघटितं सङ्घीभावात्प्रच्युतं धर्मं पाप्मा पापम् पदे पदे प्रतिपदम् निहन्ति विनाशयति बतेति खेदे। यावत् विद्यानिधिरिमां भुवमलमकुरुत यावत्तस्मिन् समुदायरूपेण स्थितानामेषां गुणानां परस्परसाहायकोपलब्ध्या बलवत्तरत्वेन पापं

---

उस विद्यानिधिकविके द्वारा अनायास रूपमें कही गई वाणी भी न कविप्रसिद्धिके विपरीत, न ग्राम्य, न अक्रम, न व्याकरणसे अशुद्ध, न मर्यादाविरुद्ध, न परोद्वेगकारिणी, और न तनिक भी मिथ्या हुआ करती थी ॥ २२ ॥

सरस्वती—( विद्यानिधिके दिवंगत हो जानेसे ) केवल मैं ही अशरण नहीं हुई, समस्त गुणगण अस्त-व्यस्त होकर किसी एक निलयस्थानको नहीं पानेके कारण बिखरे हुए हैं, और जहाँ तहाँ रह रहे हैं।

शास्त्रज्ञानको अविनय, शौचको दम्भ, दमको मतिविभ्रम, शमको आलस्य

इति दिवमितः प्राप्ते विद्यानिधौ समुदायतो
बत विघटितं धर्मं पाप्मा निहन्ति पदे पदे ॥२३॥

श्रुति—वत्से, कथय कस्येदानीममृतोदयप्रबन्धघटनभारमारोपयिष्यसि।

सारस्वती—भगवति, अस्ति तस्य परापरब्रह्ममीमांसनमांसलविज्ञानवासनस्य सकलसारस्वतसंसारसरणिविभागविदो विद्यानिधेः पीताम्बरस्य चतुर्णां पुत्राणामेकतमो गोकुलनाथो नाम।

---

न किमप्यपकर्त्तुमपारयदधुना तु तस्मिन्दिवं गते सर्वेऽपीमे श्रुतादयो गुणा असंहततया पृथक्पृथगवस्थित्या दुर्बला अजनिषतेति पापं तान्पदे पदे विनाशयति, तथाहि क्वचित् शास्त्रज्ञानम् अविनयो नाशयति, क्वचित् शौचं दम्भः, क्वचिदपरत्र दमं मतिविभ्रमः, क्वचिदन्यतो दानं गर्वः, क्वचिदपरत्र च सत्कुलप्रसूततां प्रबलो मदो विनाशयति। अर्थादधुना यः शास्त्रं वेद सोऽविनीतत्वेन दूष्यते, शौचं यः पालयति स दम्भं करोति, यो दमं साधयति स वैमत्यपूर्णः, शान्तियुतोऽलसतयाऽऽश्लिष्यते, दानी गर्वं श्रयते, कुलीनश्च दर्पमाश्रयते, इत्येकैकगुणशाली प्रबलेन तेन तेन दोषेण दूष्यते, विद्यानिधिस्तु शास्त्रशौचदमशमदानसत्कुलजत्वाभिधानखिलानपि गुणान्धारयन्नपि विनीतोऽदाम्भिको मतिविभ्रमरहितो निरालस्योऽगर्वितः स्मयरहितश्चावर्त्ततेति ॥ २३ ॥

अमृतोदयप्रबन्धघटनभारम्—अमृतोदयनाटकनिर्माणभारम्।

परापरब्रह्ममीमांसनमांसलविज्ञानवासनस्य—परमपरं च ब्रह्म विचारयितुं क्षममाणां बुद्धिं बिभ्रतः। सकलसारस्वतसंसारसरणिविभागविदः—सर्वविद्याभेदपद्धतिपरिनिष्ठितप्रज्ञस्य।

---

दानको गर्व, वंशगौरवको घमण्ड दबा रहा है, इस प्रकार विद्यानिधिके दिवंगत हो जानेसे समुदायसे विघटित धर्मको पग पग पर अधर्म बाधित कर रहा है ॥ २३ ॥

श्रुति—वत्से, बताओ अब किसे अमृतोदयप्रबन्धके निर्माणका भार दोगी?

सरस्वती—परापरब्रह्मवेत्ता सकल सारस्वत संसारके मार्गभेदके विद्वान् विद्यानिधि पीताम्बरके पुत्रोंमें एक गोकुलनाथ हैं—

योो जन्मतश्च गुणतश्च मतः कनिष्ठः
श्रीमत्त्रिलोचनकवेश्च धनंजयाच्च ।
स श्रीजगद्धरधरातिलकाग्रजन्मा
निर्मास्यति प्रगुणतत्त्वरसं प्रबन्धम् ॥२४॥

यस्य खल्वियं वाचोयुक्तिः—

अधिगतमुपाध्यायाद्विद्यानिधेरनुचिन्तितं
विरलविषयग्राहिण्यापि स्वया जडया धिया ।

---

यो जन्मत इति । यः ( गोकुलनाथः ) श्रीमत्त्रिलोचनकवेः त्रिलोचननाम्नः कवेः धनञ्जयात् तदभिधाच्च स्वभ्रातुः जन्मतः जन्मना गुणतः गुणविचारणया च कनिष्ठः लघुर्मतः, ( यो वयसि गुणे च त्रिलोचनधनञ्जयनामकाभ्यां स्वसोदराभ्यां लघुतया विदितः ) श्रीजगद्धरो नाम धरातिलको धरणीभूषणस्वरूपस्तस्याग्रजन्मा ज्येष्ठो भ्राता गोकुलनाथो नाम अमुम् अमृतोदयनामकं प्रगुणतत्त्वम् गुणे साहित्यशास्त्रप्रसिद्धे माधुर्यादौ तत्त्वे दर्शनप्रसिद्धे आत्मानात्मविवेके च प्रकृष्टं प्रबन्धं काव्यभेदं नाटकं निर्मास्यति ॥ २४ ॥

वाचोयुक्तिः—कथनम् ।

अधिगतमिति । उपाध्यायात् अध्यापकतायशस्विनः विद्यानिधेस्तन्नामकात्पितुः, अधिगतम् शास्त्राध्ययनं कृतम्, विरलविषयग्राहिण्या स्वल्पग्राहिण्या ( यावदध्यापितं ततोऽल्पमेव धारयन्त्या ) स्वया आत्मनीना जडया अज्ञानो-

---

जो त्रिलोचन कवि तथा धनञ्जय कविसे जन्ममें तथा गुणमें कनिष्ठ हैं, और पृथ्वीभूषण जगद्धरसे जन्ममें बड़े हैं, वही इस गुणों एवं तत्त्वोंसे पूर्ण अमृतोदयका निर्माण करेंगे ॥ २४ ॥

जिनका कहना है कि—



उपाध्याय विद्यानिधिसे जो कुछ पढ़ा एवं स्वल्प विषयग्राहिणी अपनी जड़

बहुलमथवा स्तोकं यद्यन्मया श्रुतमर्जि
परिणतिरियं तस्य प्रीतस्तयास्तु परः पुमान् ॥२५॥

श्रुति—वत्स, प्रतिहतास्ते परिपन्थिनः। चेत्रज्ञनगराधिराज्याभिषिक्तः कविभिरुपश्लोक्यसे। किं ते भूयः प्रियमुपकरोमि।

अपवर्गः—मातः अहं पूर्णोऽस्मि। तदापीदमस्तु—

संसारात्प्राप्य निर्वेदं सर्वे निर्वाणलिप्सया।
श्रवणान्मननाद्ध्यानात्पश्यन्तु पुरुषोत्तमम् ॥२६॥

---

पहतया धिया अनुचिन्तितम् मननेन हृदये निष्ठापितम्। बहुलम् अथवा स्तोकम् अल्पम्, यत् श्रुतम् शास्त्रं मयाऽर्जितम् अध्ययनमननाभ्यां स्वीयं कृतं तस्य परिणतिः अमृतोदयरूपा मे कृतिः, तया कृत्या परः पुमान् परमात्मा प्रीतोऽस्तु प्रीयताम्। भगवदर्पणबुद्ध्या मया प्रणीतमिदमिति तदाशयः ॥ २५ ॥

ते प्रतिपन्थिनः प्रतिहताः—तव विरोधिनः पराभूताः। अपवर्गस्वरूपविषये विरुद्धमतानि तत्र तत्र परास्तीकृतानि इति ग्रन्थफलमुक्तम्। उपश्लोक्यसे स्तूयसे।

अहं पूर्णः—न मम किमपि प्रियमवशिष्यते कर्त्तुम्।

संसारादिति। सर्वे निर्वाणलिप्सया अपवर्गप्राप्तिकामनया संसारात् प्रेत्यभावपरम्परातः निर्वेदं वैराग्यं प्राप्य श्रवणात् श्रुतिवाक्यजन्यात् परमात्मस्वरूपश्रवणात् मननात् उपपत्तिभिस्तदवधारणात्, ध्यानात् तद्भावनासन्तानरूपान्निदिध्यासनपदाभिधेयात् पुरुषोत्तमं पश्यन्तु ॥ २६ ॥

---

बुद्धिसे जो कुछ विचारा, जो थोड़ा या बहुत शास्त्रज्ञान इस प्रकार अर्जित किया, उसके परिणामस्वरूप इस अमृतोदयसे पुरुषोत्तम प्रसन्न हों ॥ २५ ॥

श्रुति—वत्स, तुम्हारे सारे दुश्मन दबा दिये गये हैं। तुम्हारा चेत्रज्ञनगराधिपत्यपर अभिषेक हो गया है, कविगण तुम्हारी स्तुति कर रहे हैं। अब और तुम्हारा क्या उपकार करूँ?

अपवर्ग—मातः, मैं पूर्ण हो गया। फिर भी यह हो—

संसारसे विरक्त होकर निर्वाणकी लिप्सासे सकल प्राणिवर्ग श्रवण-मनन-निदिध्यासनके सहारे पुरुषोत्तमका साक्षात्कार करें ॥ २६ ॥

इति ॥

( निष्क्रान्ताः सर्वे । )

इत्यपवर्गप्रतिष्ठा नाम पञ्चमोऽङ्कः ।

समाप्तमिदं श्रीगोकुलनाथोपाध्यायकृतममृतोदयं नाम नाटकम् ।

---

[ सबका प्रस्थान ]

अपवर्ग प्रतिष्ठा नामक पञ्चम अङ्क समाप्त ।

महामहोपाध्याय गोकुलनाथोपाध्यायकृत अमृतोदय नाटकका

हिन्दी रूपान्तर समाप्त ।

## टीकाकर्त्तुः परिचयः

यो जातो धरणीसुरान्वयसरोहंसात्प्रसर्पद्यशो-
ज्योत्स्नाद्योतितदिङ्मुखान्मुररिपुध्यानैकबद्धाशयात् ।
मिश्राख्यान्मधुसूदनाज्जयमणौ सीमन्तिनीनां मणौ
तस्य श्रीयुतरामचन्द्रसुधियो व्याख्या प्रसिद्ध्यादियम् ॥ १ ॥

शून्यालोचनखाक्षिसम्मितशरद्याशातिथौ चैत्रगे
चन्द्रे पुष्यति चेन्दुजस्य दिवसे श्रीशारदानुग्रहात् ।
रम्ये पाटलिपुत्रसंस्कृतमहाविद्यालये पूर्णता-
मानीतेयमुमामहेश्वरपदाम्भोजेषु विश्राम्यतु ॥ २ ॥

'विद्वांसो वसुधातले परवचःश्लाघासु वाचंयमा'
उक्त्वैतद्विमुखोभवामि न मनागालोचनावर्त्मनः ।
ते हि स्वर्णपरीक्षणैकनिकषा निष्पक्षपातां दृशं
निक्षिप्यात्मगुणोचितादरभुवं कुर्युर्ममेमां कृतिम् ॥ ३ ॥

छिद्रान्वेषणमात्रसज्जधिषणानप्यत्र दोषान् बहून्-
ग्रन्थे दर्शयतो न मत्सरितया निन्दामि किन्त्वर्थये ।
निर्दोषेण पथा प्रशस्तरचनां निर्माय काञ्चित्कृतिं
लोकेभ्यः समुपाहरन्तु भविता भूयो यशोऽनेन वः ॥ ४ ॥

मान्यान्यानहमाद्रिये नतशिरास्ते ते सखायश्च मे
येषामाग्रहतो विदन्नपि निजां शक्तिं प्रवृत्तोऽभवम् ।
व्याख्यानेऽत्र न तैरियं मम कृतिः कार्यान्यथा क्वपदं
सर्वानिन्दितकीर्त्तिलाभसुभगं भाग्यं कुतोऽस्मादृशाम् ॥ ५ ॥

इति मुजफ्फरपुरमण्डलान्तःपाति 'पकड़ी' ग्रामवासिना पाटलिपुत्रस्थ राजकीय-
संस्कृतमहाविद्यालये व्याकरणाध्यापकेन मैथिल-पण्डित-
श्रीरामचन्द्रमिश्रशर्मणा विरचितायाम्
'अमृतोदय' नाटकस्य टीकायां
प्रकाशाभिधायां
पञ्चमाङ्कप्रकाशः ॥
शुभमस्तु ॥

# अमृतोदय-'प्रकाश'का

# परिशिष्ट

## NOTES

## विशेषविवरण

### १. अविदितमुखसन्धिः

नाटकमें पांच सन्धियां होती हैं। "मुखं प्रतिमुखं गर्भो विमर्शं उपसंहृतिः?
इति पञ्चास्य भेदाः स्युः"

मुखम्—"यत्र बीजसमुत्पत्तिर्नानार्थरससंभवा।
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम्"।

नाटकमें सामान्यतः मुखसन्धिका प्रयोग अवश्य किया जाता है, परन्तु निगम-कविके इस संसार नाटकमें मुखसन्धिका प्रयोग नहीं है क्योंकि इसकी आदि अवस्था—उत्पत्तिका पता नहीं है यह तो अनादि प्रवाह है।

× × ×

### २. 'न दहति सगरान्वयान'

इस श्लोकका भाव निम्नलिखित कुवलयानन्दगत श्लोकसे मिलता है, तुलना कीजिये :—

"व्यास्थं नैकतया स्थितं श्रुतिगणं जन्मी न वल्मीकतो
नाभौ नाभवमच्युतस्य सुमहद् भाष्यं न चाभाषिषि।
चित्रार्थां न बृहत्कथामचकथं सुत्रास्मि नासं गुरु-
र्देव, त्वद्गुणवृन्दवर्णनमहं कर्त्तुं कथं शक्नुयाम्"॥

× × ×

"क्षेत्रज्ञनगरवासी मूलमस्मिं सर्वस्यारम्भस्य रागो नाम कामरूपो नटः"

संसारकी जड़ राग है क्योंकि रागसे प्रेरित होकर जीव कोई शुभाशुभ कार्य करता है उससे अदृष्ट बनता है और फिर संसारचक्र प्रवृत्त होता है। इसीलिये रागको सर्वारम्भका मूल कहा है। यह कामरूप इसलिये है कि राग-

कार्यभेदसे अपना रूप बदलता रहता है। क्षेत्रज्ञनगरवासीसे तात्पर्य है जीवमें रहनेवाला। क्षेत्रज्ञ—जीव।

रागको जब हम विषयभोगकी ओर प्रवृत्त देखते हैं तब उसका रूप दूसरा होता है, परन्तु जब वही अपने विषय-आश्रय-स्त्री पुत्र आदिके विनश्वरत्व आदिको देखकर—त्रिविधक्लेशगणके भयसे मोक्षकी ओर मुड़ता है—अमृतोदयकी अभिनीतिके लिये प्रवृत्त होता है तब उसे परमात्मामें राग होता है—यही उसका विविक्तवेष परिग्रह है।

× × ×

"अपवर्गः करणचक्रविप्रियः पुरुषाय न रोचते"

श्रुति चाहती है कि अद्वैत साम्राज्यपर अपवर्गका अभिषेक हो, परन्तु अभिषेक होनेभरसे कोई राजा स्थिरराज्यसुखका उपभोग नहीं कर सकता है, उसे प्रकृति-प्रजाका अनुरागभाजन होना ही चाहिये, तभी वह राज्यपर टिक सकता है, अतः अपवर्गके लियेभी इन्द्रियमण्डलीरूप प्रजाका अनुराग अर्जित करना अपेक्षित है। वह अपवर्ग सुखानुभूतिशून्य—निरा शुष्कस्वभाव होनेके कारण करण-गणको (इन्द्रियमण्डलीको भला नहीं लगेगा, अतः पुरुषको भी भला नहीं लगेगा, क्योंकि जिसे सामान्यतः परिवारके सभी लोग नहीं चाहते हैं उसे परिवारका मुख्य मालिक भी (चाहकर भी) नहीं चाहनेको बाध्य हो जाते हैं।

इसका उत्तर आगे दिया गया है कि 'दमेन निगृहीतानि करणचक्राणि' इन्द्रियोंको संयमने वशीकृत—आज्ञा माननेको अपवर्गके वशमें आनेको बाध्य-कर लिया है। पुरुष भी इतनी पाबन्दीमें है कि वह मनमें भी कभी अपवर्गके विरोधकी बात नहीं सोच सकता है क्योंकि उसकी नकेल प्रमितिके हाथोंमें है।

"अपहरन्तु परेषां विज्ञानमपि मध्यममार्गेण संचरमाणाः"

'मध्यममार्गेण सञ्चरमाणाः' का अभिप्राय 'माध्यमिक'से है। यह बौद्धमतकी एक शाखाविशेषका नाम है। बुद्धने नैतिक जीवनमें दो अन्तों—दोनों छोरों—को अखण्डतपस्या तथा निरन्तर भोगको छोड़कर बीचके मार्गके अवलम्बनका आदर्श उपस्थित किया, अतः वह मध्यममार्ग हुआ। तत्त्वविवेचनमें शाश्वतवाद तथा उच्छेदवादके दोनों एकाङ्गी मार्गोंका परिहार करके मध्यम मतका ग्रहण किया।

इसी बुद्धाभिमत मध्यम मार्गके अवलम्बन करनेसे यह माध्यमिक कहा जाता है। शून्यको ही परमार्थ माननेसे इसे शून्यवाद भी कहते हैं—

'मुख्यो माध्यमिको विवर्त्तमखिलं शून्यस्य मेने जगत्' माध्यमिक साहित्यका विकास बौद्धपण्डितोंके तार्किक ज्ञानकी पराकाष्ठा है। इस मतके सिद्धान्त 'प्रज्ञापारमिता' 'रत्नकरण्ड' आदिमें पहलेसे भी थे, परन्तु नागार्जुनने अपनी 'माध्यमिक कारिका' लिखकर उसे प्रौढ़ता दी।

माध्यमिक लोग शून्यको ही परमतत्त्व मानते हैं इसीलिये इन्हें शून्यवादी कहा जाता है। लोकव्यवहारमें शून्य शब्द अभाव अर्थमें व्यवहृत होता है परन्तु माध्यमिक लोगोंको शून्य परमार्थसत् है—अनिर्वचनीय है। निर्वचन किसी सविशेषवस्तुका ही होता है, निर्विशेषवस्तु कथमपि निर्वचन वर्णन या लक्षणका विषय नहीं हो सकती है। इसीलिये अनिर्वचनीयताको सूचित करनेके उद्देश्यसे परमतत्त्वको शून्य कहा गया है। अनिर्वचनीयता सिद्ध करनेके लिये माध्यमिककारिकामें नागार्जुनने कहा है कि—

"न सन् नासन्न सदसन्न चाप्यनुभयात्मकम्।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका जगुः॥"

हीनयानवालोंने बुद्धके आचार विषयक मध्यममार्गको मानकरभी विचार विषयक मध्यममार्गको नहीं माना। माध्यमिक लोगोंने विचार तत्त्वपरिच्छेदमें भी बुद्धके मध्यममार्गको ही अपनाया। इनके विचारानुसार शून्य ही परमतत्त्व है—वस्तु न तो एकान्त सत्य है और न एकान्त असत्, किन्तु वस्तुका तत्त्व इन दोनों सत्त्व—असत्त्व के मध्यमें निर्णय है जो शून्यरूप है :—

"अस्तीति नास्तीति उभेपि अन्ता
शुद्धी अशुद्धीति उभेपि अन्ता।
तस्मादुभे अन्त विवर्जयित्वा
मध्ये हि स्थानं प्रकरोति पण्डितः॥"

—समाधिराजसूत्र।



× × ×

"विलुम्पन्तु बहिर्विषयम्..........योगमाचरन्तः"

'योगमाचरन्तः' से 'योगाचार' नामक बौद्धमत परिगृहीतहोता है—इस बौद्धमत प्रभेदकी दार्शनिकदृष्टि शुद्ध प्रत्ययवाद की है, आध्यात्मिक दृष्टिके कारण यह विज्ञानवाद कहा जाता है और धार्मिक तथा व्यावहारिक दृष्टिसे इसका नाम योगाचार है। माध्यमिक लोग जगत्‌के समस्त पदार्थोंको शून्य मानते हैं उसीके प्रतिवादमें इस सम्प्रदायकी उत्पत्ति हुई। इस सम्प्रदायका सिद्धान्त है कि जिस बुद्धिके द्वारा जगत्‌के पदार्थ असत्य प्रतीत होते हैं उस बुद्धिको तो बाध्य होकर सत्य मानना ही पड़ेगा, इसलिये यह संप्रदाय विज्ञान ( चित्त-मन बुद्धि ) को एकमात्र सत्यपदार्थ मानता है। संक्षेपमें—

'योगाचारमते तु सन्ति मतयस्तासां विवर्तोऽखिलः' कहा जा सकता है।

इस संप्रदायके आदिम आचार्य मैत्रेयनाथ थे, उनके शिष्य असङ्गने विज्ञान-वादकी प्रसिद्धि एवं प्रतिष्ठाके लिये बड़ा प्रयास किया और वह उसमें सफल भी हुए। इनके प्रयासोंसे ही वसुबन्धुने वैभाषिक मतको छोड़कर योगाचारका अव-लम्बन किया। इस मतमें अभिसमयालङ्कारकारिका, महायानसूत्रालङ्कार, एवं अभिधर्मकोश आदि ग्रन्थ प्रसिद्ध हैं।

× × ×

'स्वार्थदर्शनमपि परेषामपलपन्तु सूत्रान्तसंस्कृतबुद्धयः'

यहाँ 'सूत्रान्तसंस्कृतबुद्धयः' का अर्थ है सौत्रान्तिक। सौत्रान्तिक लोग सूत्र-को ही प्रमाण मानते हैं। 'यशोमित्र' ने लिखा है:—'कः सौत्रान्तिकार्थः ? ये सूत्रप्रामाणिका न तु शास्त्रप्रामाणिकास्ते सौत्रान्तिकाः। 'स्फुटार्था' पृष्ठ १२ रूसी संस्करण १९१२,

इस परिभाषामें शास्त्रसे अभिप्राय 'अभिधर्म' से है और सूत्रसे 'सूत्रपिटक' लिया जाता है। इसपर शङ्का यह होती है—तब त्रिपिटककी व्यवस्था किस प्रकार होगी, इसका उत्तर यशोमित्रने दिया है कि—'नैष दोषः, सूत्रविशेषा एव अर्थ-विनिश्चयादयोऽभिधर्मसंज्ञा येषु धर्मलक्षणं भवति' स्फुटार्था पृ० १२,

अर्थात् अर्थविनिश्चय आदि सूत्र ऐसे हैं जिनमें धर्मका वर्णन है वही अभि-धर्मके प्रतीक हैं। इस प्रकार सूत्रपिटक ही सौत्रान्तिकोंके मतमें अभिधर्मपिटकका भी काम करता है।

सौत्रान्तिक लोग सर्वास्तिवादी हैं, वे बाह्यवस्तुओंकी सत्ता स्वीकार करते हैं।

विज्ञानवादियों ने कहा था कि विज्ञानमात्र सत् है बाह्य पदार्थकी सत्ता मानना भ्रान्ति पर आधारित है। इसपर सौत्रान्तिकोंने कहा कि यदि बाह्य पदार्थकी सत्ता नहीं मानी जायगी तो उनकी काल्पनिक स्थितिकी उपयुक्त व्याख्या नहीं की जा सकेगी।

बाह्य वस्तुकी सत्ता नहीं मानकर उसे भ्रान्ति-कल्पित कहना संगत नहीं है, वन्ध्यापुत्रकी भ्रान्ति तो नहीं होती है, फिर वन्ध्यापुत्रकी ही तरह असत् बाह्य पदार्थकी भ्रान्तिकृत प्रतीति कैसे मानी जाय? अतः क्षणिक बाह्य पदार्थ हैं और वह अनुमानगम्य हैं।

'अर्थोऽस्तिक्षणिकस्त्वसावनुमितो बुद्ध्येतिसौत्रान्तिकाः।'

इन बाह्य पदार्थोंका प्रत्यक्ष संभव नहीं है, क्योंकि जिस क्षणमें किसी वस्तुके साथ हमारी इन्द्रियोंका संपर्क होता है उस क्षणमें वह वस्तु प्रथम क्षणमें उत्पन्न होकर नष्ट हो गई रहती है केवल तज्जन्य संवेदन शेष रहता है। वह जो संवेदन रह जाता है उसीको चित्त देखता है—और उसी संवेदनके द्वारा चित्त उन संवेदनके जनक बाह्य पदार्थोंका अनुमान करता है।

"नीलपीतादिभिश्चित्रैर्बुद्ध्याकारैरिहान्तरैः।
सौत्रान्तिकमते नित्यं बाह्योऽर्थस्त्वनुमीयते॥"

सर्वसिद्धान्तसंग्रहः पृ. १३.

इस प्रतिष्ठानके आचार्योंमें—कुमारलात, श्रीलाभ, यशोमित्र आदि प्रसिद्ध हैं।

× × ×

'परोक्षमर्थमुष्णन्तिविष इव मुष्णन्तु लोकायतव्यवहारिणः'

यहाँ 'लोकायतव्यवहारिणः' से लौकायतिक-चार्वाक लिया गया है।

'यावज्जीवेत्सुखं जीवेन्नास्ति मृत्योरगोचरः।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥'

यही प्रसिद्धि इस मतके स्वरूपको व्यक्त कर देती है। यह मत इसलिये लोकायत कहाता है कि आसान होनेसे लोकमें प्रचरित है, तथा रमणीय हृदयाकर्षक उक्तिपर आधारित होनेसे (चारुः वाकः) चार्वाक कहा जाता है। चार्वाक वस्तुतः इस मतके एक आचार्यका नाम है जो बृहस्पतिके शिष्य थे।

इस मतमें एक ही शास्त्रार्थ है कि अनुमानको प्रमाण नहीं माना जाय। अनुमानके प्रामाण्यका खण्डन इन लोगोंने जोर देकर किया है, अन्यान्य प्रमाणोंकी उपेक्षाकी है।

इनके मतका सारांश सायणमाधवके शब्दोंमें निम्नप्रकार है :—

'न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः॥'
अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्।
बुद्धिपौरुषहीनानां जीविका धातृनिर्मिता॥
पशुश्चेन्निहतः स्वर्गं ज्योतिष्टोमे गमिष्यति।
स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते॥
मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणम्।
निर्वाणस्य प्रदीपस्य स्नेहः संवर्द्धयेच्छिखाम्॥
गच्छतामिह जन्तूनां व्यर्थं पाथेयकल्पनम्।
गेहस्थकृतश्राद्धेन पथि तृप्तिरवारिता॥
स्वर्गस्थिता यदा तृप्तिं गच्छेयुस्तत्र दानतः।
प्रासादस्योपरिस्थानामत्र कस्मान्न दीयते॥
यावज्जीवेत्सुखं जीवेदृणं कृत्वा घृतं पिवेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥
यदि गच्छेत्परं लोकं देहादेष विनिर्गतः।
कस्माद् भूयो न चायाति बन्धुस्नेहसमाकुलः॥

× × ×

इस मतके पोषक श्लोक विष्णुपुराणमेंभी मिलते हैं :—

'तृप्तये जायते पुंसो भुक्तमन्येन चेत्ततः।
दद्याच्छ्राद्धं श्रमायान्नं न वहेयुः प्रवासिनः॥'
(विष्णु पु॰ ३।१८।८५)

